# प्रस्तावना.

जयन्तु कवयो मान्याः सूक्तिरत्नाकरश्रिया ।
येषां मुखारविन्देषु रमते सा सरस्वती ॥
जयन्तु वश्यवचसां कवीनां सूक्तयो भुवि ।
यासामास्वादनाच्चित्ते व्यज्यते स परो रसः ॥
जयन्तु ते सहृदयाः काव्यामृतनिषेविणः ।
येषामाह्लादनान्नान्यत् कवीनां स्वकृतेः फलम् ॥

अयं खलु निबन्धः सुभाषितसङ्ग्रहैकस्वरूपः सूक्तिमुक्तावलीति नाम्नाऽन्वर्थेन ख्यायमानः काव्यामृतशरीरेणाद्यापि जीवतः कवीन् बहून् श्रुतचरानश्रुतचरांश्च अद्यतनानां सहृदयानां दृष्टिपथे समवतारयन् समाप्लावयंश्च सुभाषितसुधारसैरवगाहमानानखिलान् समुल्लासयन् सकलसुमनोमनांसि समुपदर्शयंश्चैकैकस्मिन्विषये कवीनामुपवर्णनवैचित्र्यं कमप्याह्लादमुपजनयति सहृदयानाम् । ईदृशा निबन्धाः सदुक्तिकर्णामृतकवीन्द्रवचनसमुच्चयप्रभृतय इतः प्राक्तनाः । शार्ङ्गधरपद्धतिप्रभृतय इतः पश्चात्तना अपि सन्ति नाम ।

अस्याः सूक्तिमुक्तावल्याः कर्ता जल्हण इति व्यक्तं विज्ञायते । उपक्रमे ह्यस्याः पद्यमिदम्— 'तेनेयं क्रियते वीक्ष्य सत्सुभाषितसंग्रहान् । सूक्तिमुक्तावली कण्ठकदलीभूषणं सताम्' इति । (५. पृ.) उपस्थापयतिचैतत् जल्हणम् । पूर्वमस्यान्वयो हि समनुवर्ण्यते–'तस्यान्वयेऽभूत् । इत्यादिना 'कीर्त्या यस्ये'-त्यन्तेन पद्यजातेन (५ पृ.) अन्तिमश्लोकश्चायमनुक्रमणिकाप्रकरणस्य 'श्री[illegible]ता भगदत्तेन जल्हणेन व्यरच्यत' इति । (७) यदा पुनरादाविवान्तेऽपि दृष्टिः प्रसार्येत तदा तु निबन्धस्यास्य कर्ता कविवरोऽन्य एव विज्ञायते । तथाचान्ते श्लोकाविमौ–'शाकेऽङ्काद्रीश्वरपरिमिते +++ जल्हस्यार्थे व्यरचि भिषजा भानुना सेयमिष्टा ॥ शश्वत्कृष्णमहीपसम्पदुदधेर्वृद्धौनिशानायकः +++ भिषजां वरो विजयते श्रीभास्कराख्यः सुधीः' इति । (पृ. ४६२) तदिदं श्लोकद्वयमवहितेन मनसा विमृशन्तो वयमिहैवं संभावयामः—कविरयं वैद्यभानुः जल्हणं प्रीणयन् विरच्य सूक्तिमुक्तावलीमिमां तस्मै समर्प्य तमेवास्याः कर्तारं जगति ख्यापयन् आदौ तस्य वंशमनुवर्णयन् 'तेनेयं क्रियते +++ सूक्तिमुक्तावली कण्ठकदलीभूषणं सताम्' इति तमेव जल्हणमस्याः कर्तारं कण्ठरवेण प्राहेति । पुरा खलु बहवः कवयः प्रभुं समाराधयन्तः काव्यानि विरच्य तमेव प्रभुं तस्य काव्यस्य कर्तारं काव्यारम्भे ख्यापयन्तः सम्मानिताश्च तेन प्रभुणा धनकनकादिभिरभूवन्निति विख्यातमेतत् ।

किं च सेयं सूक्तिमुक्तावलिः आदावन्ते च वैद्यभानुकवेः सूक्तिरत्नैः सङ्ग्रथितैर्विद्योतमाना सूचयतीव कर्तारं वैद्यभानुकविम् । संमुद्रितेव हीयं भाति कविना स्वसूक्तिभिरादावन्ते च । आदौ– 'नाङ्गुलीयैर्न केयूरैः न ग्रैवेयैर्न च कङ्कणैः । तथा भाति यथा विद्वान् कण्ठसङ्गतयाऽनया' इति (५ पृ.) अन्तेच 'शौर्यं श्लाघाविहीनं ×× शङ्कर त्वत्प्रसादात्' (४६२) इति । (श्लोकाविमौ वैद्यभानुकवेः) यद्यपि–'तेनेयं क्रियते वीक्ष्य ××× सताम्' इत्यस्य श्लोकस्य समनन्तरं

ग्रथितैः 'विबुधैः सन्निवेशज्ञैः सङ्ग्रहीतान्यनेकशः। सुधारससनाभीनि सन्ति सूक्तानि यद्यपि। तथाऽपि खर्वतां नीत्वा विबुधैर्गर्वपर्वतम्। शश्वदालोकनीयोऽयं मत्सरः किं गुणेष्वपि। साहित्यविद्यां हृदयं ज्ञातुमिच्छसि चेत्सुखम्। तत्पश्य जल्हणकृतां सूक्तिमुक्तावलीमिमाम्। नाङ्गुलीयैर्न केयूरैर्न ग्रैवेयैर्न कङ्कणैः। तथा भाति यथा विद्वान् कण्ठसंगतयाऽनया।' इत्येतैः वैद्यभानुपण्डितस्येति नामनिर्देशसहितैरेतद्विज्ञायते–कर्ता जल्हणः, स्तौति वैद्यभानुकविस्तस्य कृतिमिति। तथाऽपि निदर्शितेन 'जल्हस्यार्थे व्यरचि भिषजा भानुना सेयमिष्टा।' इत्यनेन श्लोकेन वयमेवं संभावयामः–वैद्यभानुकविरेव स्वकृतिमपि सूक्तिमुक्तावलीं 'तेनेयं क्रियते' इत्यन्तेन श्लोकेन जल्हणकर्तृकतयैव ख्यापयन् तामिमां स्वात्मना स्तौति तैरेतैश्चतुर्भिः श्लोकैरिति।

अथ वयमधुना कवेरस्यैव मतेन कर्तृतयाख्यायमानं जल्हणमेवास्याः कर्तारं भावयन्तश्चरितमस्यानुवर्णयामः। आसीत् पुरा कोऽपि यादववंशसमुत्पन्नः मैलुगि ( मल्लुगि ) नामा क्षोणिपालः। तस्मिन् प्रशासति पृथिवीमासीत्तस्यैव करिवाहिनीपतिः दादा नाम वात्स्यः कोऽपि प्रथितनयपराक्रमः। तस्यासन् चत्वारः पुत्राः–महीधरो जल्हः साम्बो गङ्गाधरः इति। तेषु यश्चरमो गङ्गाधरस्तस्य नप्ता जनार्दनस्य पौत्रः लक्ष्मदेवस्य पुत्रः सोऽयं जल्हणः। सर्व एवैते तस्यैव राज्येऽन्वयक्रमेण करिवाहिनीपतय आसन्।

**अयमन्वयक्रमः**




अयं च क्रमः अस्या एव सूक्तिमुक्तावल्या आरम्भे विज्ञायते—

'तस्यान्वयेऽभूत् करिवृन्दनाथो दादाः सदा दाननिदानभूतः।'

'चत्वारस्तस्य सञ्जातास्तनया नयशालिनः। ख्यातो महीधरो जल्हः साम्बगङ्गाधरावुभौ।'

'धीरश्रियमङ्कस्थां स न कस्य महीधरः स्तुत्यः।'

'किंचित्रं यदि भोगीन्द्रोऽनन्तस्तत्तनयो महान्।'

'ददाह कामं न जनस्य रुष्टस्तथाऽपि गङ्गाधर एव सोऽभूत्।'

'तस्याभवत् सूनुरनूनसत्वो जनार्दनाख्यः करिवाहिनीशः।'

'तस्मादद्भुतविक्रमः ( समभवत् ) श्रीलक्ष्मदेवः सुधीः।'

'तस्यास्ते तनयो नयोदधिविधुः ++ श्रीजल्हणाख्यः सुधीः।' इति॥

येषां राज्ञां करिवाहिनीपतय एते अभूवन्, ते राजानश्चत्वार इहैव निर्दिश्यन्ते मैलुगिः भिल्लमः सिंहः (सिंघणः) कृष्णदेव इति। तत्र मैलुगिक्षोणिपालस्य राज्यं महीधरजल्हसाम्बगङ्गाधरैश्चतुर्भिरपि काले काले राज्यधूर्वहणे राज्ञः संपूर्णं साहाय्यमाचरद्भिः स्वबलनिर्धुतवैरिबलैः परामुन्नतिं गमितम्।

तेषु महीधरः मैलुगेर्महीपतेर्वैरिणं विज्जणं विजित्य वीरश्रियासमाश्लिष्टः सर्वेषामेव मान्यतमोऽभवत् । अस्य पुत्रोऽनन्तः विजित्य शत्रून् तदीयकरिसैन्यं समानीय स्वस्वामिने ददौ । अथ मिल्लमे राज्यं प्रशासति जल्हः प्रधानः करिवाहिनीपतिरभूत् । सिंहे (सिंघणे) राज्यं प्रशासति गंगाधरस्य पुत्रो जनार्दनः करिवाहिनीपतिरासीत् । यस्यैव बलेन संप्रवृद्धपराक्रमेण सिंहेनार्जुनो नाम रिपुः समुन्मूलितः। अथ कृष्णमहीपतौ प्रशासति जनार्दनस्य पुत्रो लक्ष्मदेवः करिवाहिनीपतिः समभृत् । यस्यैव मन्त्रैः कृष्णमहीपते राज्यं स्थिरमभूत् । तस्मिन्नेव कृष्णमहीपतौ राज्यधुरं निर्वहति लक्ष्मदेवस्य पुत्रो जल्हणोऽयं करिवाहिनीपतिरासीत् येनेयं सूक्तिमुक्तावली संग्रथिता प्रथते । तथा चोपक्रमे श्लोकाः–

‘ उपायैरिव तैः काले **चतुर्भिः** सुप्रयोजितः।
**मैलुगि**क्षोणिपालस्य राज्यं जातं समुन्नतम् । ’
‘ **बिज्जण**जलराशिं विमथ्य भुजमन्दरेण यः कृतवान्
वीरश्रियमङ्कस्थां स न कस्य **महीधरः** स्तुत्यः । ’
‘ किं चित्रं यदि भोगीन्द्रो**ऽनन्तस्त**त्तनयो बहून् ।
आनीय बलिसद्मस्थान् नागान् स्वस्वामिने ददौ ”
‘ विजित्य **बिज्जणं** याते सुरलोकं महीधरे ।
निनाय **मिल्लमं जल्हो** राजतां क्षयवर्जिताम् ।’
आसीत् **गङ्गाधर**स्तस्य भ्राता गङ्गाधरोपमः ।
तस्याभवत् सूनुरनूनसत्वो **जनार्दनाख्यः** करिवाहिनीशः ।
‘ **सिंहो**ऽप्यध्यापितस्तेन गजशिक्षां तदद्भुतम् ।
**यथार्जुनं** लसत्पत्रं समूलमुदमूलयत् । ”
‘ तस्मादद्भुतविक्रमः समभवत् श्रीलक्ष्मदेवः सुधीः ।
“ राज्यं **कृष्णमहीपते**रविकलं दत्त्वा स्थिरं योऽव्यधात् ”

‘ तस्यास्ते तनयः × × श्रीजल्हणाख्यः क्षितौ । मत्पित्रादत्तमस्मै × × राज्यं प्राज्यप्रथितगुणभृताकृष्णराजाय भक्त्या । तन्निर्वाह्यं मयेति × × विधत्ते सर्वं यः स्वामिकार्यम् । ” इति ।

## राज्ञां चैषामयमन्वयक्रमः



विज्ञायते चायमन्वयक्रमो हेमाद्रिविरचिते चतुर्वर्गचिन्तामणौ व्रतखण्डे राजप्रशस्तावेतैः श्लोकैः—

ततो मल्लुगिपुत्रोऽभूत् भूपालोऽमरमल्लुगिः ।
अथ **कालीयवल्लालः** पालयामास मेदिनीम् ॥
महीपतेस्तस्य विहाय पुत्रान् गुणानुरक्ता यदुवंशलक्ष्मीः
* श्री **भिल्लमं** तस्य ततः पितृव्यमव्याजराजद्भुजमाजगाम ॥
यः श्रीवर्धनमाससाद नगरं क्षोणीपतेरन्तलात्
यः प्रत्यण्डकभूभृतं च समरे दुष्टं व्यचेष्ट क्षणात् ।
यो वा मङ्गलवेष्टकं क्षितिपतिं श्रीविल्लणं जघ्निवान्
कल्याणश्रियमप्यवाप्य विदधे यो होसलेशं व्यसुम् ॥
स दण्डिकामण्डलमण्डयित्रीमकम्पसम्पद्विभवैर्विलासैः ।
चक्रे पुरं देवगिरिं गिरीशप्रसादसंसादितदिव्यशक्तिः ॥

तदनु मदनमूर्तिः कार्तिकीचन्द्रसान्द्रद्युतिविशदयशोभिः शोभिताशावकाशः ।
अभवदवनिपालो **जैत्रपालः** करालप्रहरणरणरिङ्गत्तुङ्गदुत्तुङ्गखड्गः ॥
दीक्षित्वा रणरंगदेवयजने प्रोदस्तशस्त्रस्रुवः श्रेणीभिर्जगतीपतीन् हुतवता येन प्रतापानले ।
तिलिङ्गाधिपतेः यशोविशसनं रौद्रस्य रुद्राकृतेः कृत्वा पूरुषयज्ञमेधविधिना लब्धस्त्रिलोकीजयः ॥
तस्मादभूदभिनवस्मरचारुकीर्तिः कीर्तेः पदं स **किल सिंघणदेव** भूपः ।
उद्दण्डदोर्युगलगर्विंतवैरिवीरसीमन्तिनीवदनकैरवचण्डभानुः ॥
येनानीयत मत्तवारणघटाजज्जल्लभूमीपतेः कुक्कूलादवनीपतेरपहृता येनाधिराज्यश्रियः ।
येन क्षोणिभृदर्जुनोऽपि बलिना नीतः कथाशेषतां ।
येनोद्दामभुजेन भोजनृपतिः काराकुटुंबीकृतः ॥[1]
+**कृष्णो** महादेव इति प्रतीतौ जातौ ततः सिंहनृपस्य पौत्रौ ।
तयोस्तु पूर्वप्रभवः पुरस्तात् कृष्णोऽतिविख्यातमतिर्नृपोऽभूत् ॥
येनाकारि विशालवीसलचमूसंहारकालानले हेलोन्मूलितमूलराजसमरे निर्वीरमुर्वीतलम् ।
येनानेकमहाफलक्रतुकृता संवर्ध्यमानोऽनिशं
क्षीणः कालवशात् पुनस्तरुणतां धर्मोऽपि संप्रापितः ॥ ' इति ।

अयमपरश्च पाठक्रमस्तस्मिन्नेवार्थे—

'वंशो हिमांशोर्जयति प्रसिद्धो यस्मिन् स राजा यदुराविरासीत् ।
बभूव यस्मिन्नसुरावतारभारापहाराय पुरा मुरारिः ॥

---

* अयमेव भिल्लमः ' निनाय भिल्लमं जल्हो राजतां क्षयवर्जिताम् । ' इत्यनेनात्रत्येन श्लोकेन प्रत्यभिज्ञायते ॥

१ इदमेव चरितं सिंघणस्य ( सिंहस्य ) ' सिंहोऽप्यध्यापितस्तेन गजाशिक्षां तदद्भुतम् । येनार्जुनं लसत्पत्रं समूलमुदमूलयत् ॥

+ अयमेव कृष्णमहीपतिः—' राज्यं कृष्णमहीपतेरविकलं दत्वा स्थिरं यो व्यधात् ' इत्यनेनात्रत्येन श्लोकेन प्रत्यभिज्ञाप्यते ।

निन्ये नाशं वैरिभूभृत्पतङ्गान् यस्यानेकद्वीपदीपः प्रतापः ॥
वंशे तस्मिन् कंसविध्वसनस्य क्षोणीपालो **भिल्लमः** प्रादुरासीत् ॥
नम्रीभवत्सकलराजसमाजमौलिमाणिक्यदीधितिविबोधितपादपद्मः ॥
उद्दामदर्परिपुसर्पविहङ्गराजः श्रीभिल्लमादवनिपोऽजनि **जैत्रपालः** ॥
तस्मादभूदभिनवस्मरचारुकीर्तिः कीर्तेः पदं जगति **सिंघणदेव**भूपः ॥
उद्दण्डदोर्युगलगर्वितवैरिवर्गसीमन्तिनीवदनकैरवचण्डभानुः ॥
अथ सकलकलानामालयः पालनाय क्षितितलमवतीर्णः पौर्णमासीशशीव ॥
अभवदवनिपालो **जैतुगि**र्नाम तस्मादसमसमरधीरो द्वेषिभूपालकालः ॥
स भूमिपालो जनयांबभूव कृष्णं मदादेवमहीपतिं च ॥
+ + + + + + + + धर्मार्थाविव तौ साक्षात्पालयन्तौ वसुन्धराम् ॥
विलोक्य लोकः सस्मार राजानौ रामलक्ष्मणौ ॥ ' इति ॥

भामतीव्याख्यां कल्पतरुमारभमाणः श्रीमानमलानन्दस्तावेनौ कृष्णमहादेवावुपवर्णयन्ति—

' कीर्त्या यादववंशमुन्नमयति श्री**जैत्र**देवात्मजे ।
**कृष्णे** क्ष्माभृति भूतलं सह **महादेवेन** संबिभ्रति ॥
भोगीन्द्रे परिमुञ्चति क्षितिभवप्रोद्भूतभूरिश्रमं ।
वेदान्तोपवनस्य मण्डनकरं प्रस्तौमि कल्पद्रुमम् ॥ ' इति

अन्ते चैवं वर्णयति—

' शास्त्राम्बुधेः पारगता द्विजेन्द्रा यद्वत्तचामीकरवारिराशेः ।
ज्ञातुं न पारं प्रभवन्ति तस्मिन् कृष्णक्षितीशे भुवनैकवीरे ॥
भ्रात्रा महादेवनृपेण साकं पाति क्षितिं प्रागिव धर्मसूनौ ।
कृतो मयाऽयं प्रवरः प्रबन्धः प्रगल्भवाचस्पतिभावभेदी ॥ ' इति ।

अनेन श्रीमदमलानन्दवचनेन राज्यभारनिर्वहणे भ्रात्रोरनयोः साहित्यं गम्यते । 'धर्मार्थाविव तौ साक्षात् पालयन्तौ वसुन्धराम् । विलोक्य लोकः सस्मार राजानौ रामलक्ष्मणौ' इत्यनेन हेमाद्रेर्वचनेन च साहित्यमिदमवगम्यते । एतेन वयमिदं भावयामः—अग्रजे भ्रातरि महाराजपदवीं समलङ्कृत्य राज्यं प्रशासति अनुजो युवराजपदवीमलङ्कुर्वन् राज्यभारनिर्वहणे चाग्रजस्य सहायोऽभूदिति । अयमपि भानुकविः साहित्यमिदं द्योतयति—'मत्पित्रा दत्तमस्मै × × × × × सार्धं यः स्वामिकार्यं हितमनयद्दता भावुकेनानुजेन' इति । जल्हणस्यास्यान्वयं जिज्ञासमानान्, आलक्ष्य भिल्लमादीन्- विमर्शसरण्या यादवान्वयमिममनुप्रविष्टानस्मान्, महादेवेन लब्धप्रतिष्ठो हेमाद्रिः श्रावयति आभिल्लमादामहादेवं स्वभुजबलनिर्जितारातिमण्डलान् अनुदिनमभिवर्धमानराज्यलक्ष्मीसंपन्नान् । अयं भिषग्वरो भानुकविः जल्हणेन लब्धप्रतिष्ठः तानेतान् यादवकुलालङ्कारभूतान् मौलुगिभिल्लमसिंहकृष्णान् महीधरजल्ह गङ्गाधर जनार्दनलक्ष्मदेवजल्हणानां अन्वयक्रमानुवृत्तानां करिवाहनीशानां प्रज्ञापराक्रमबलेनैव क्रमशः समभिवृद्धराज्यलक्ष्मीकान् श्रावयति । वयं पुनर्जल्हणस्य कुलं विमृशन्तः कुलमस्य यादवकुलभूपालानां वाहिनीनायकत्वेन परां प्रतिष्ठां प्रापेति मन्महे ।

अथैषां राज्ञां चरितात् प्रासङ्गिकात्प्रतिनिवृत्य जल्हणस्यास्य देशकालावुत्पश्यामिः । अस्मिन्नन्वये अस्मादयमजनीतिवदयमास्मिन् देशे अजनीति विशेषाववोधकं वचनं नैकमप्युपलभ्यते, अतोऽयं यस्य राज्ञः करिवाहिनीपतिरासीत् तस्य देश एवास्य देश इति स्वरसतः संभाव्यते। राज्ञश्च तस्य **देवगिरिः** आभिल्लमात् पूर्वपुरुषादनुवर्तमाना राजधानीति हेमाद्रेर्वचनेनावगम्यते । समयश्चास्यामेव सूक्तिमुक्तावल्यां अन्त्येन श्लोकेन–'शाकेऽङ्काद्रीश्वरपरिमिते ( ११७९ ) वत्सरे पिङ्गलाख्ये चैत्रे मासि प्रतिपदि तिथौ वासरे सप्तसप्तेः । पृथ्वीं शासत्यतुलमहसा यादवे कृष्णराजे जल्हस्यार्थे व्यराचि भिषजा भानुना सेयमिष्टा ' इत्यनेन विज्ञायते । (A. D. 1258)

प्राचीनानेकसुकविसूक्तिसंग्रहरूपेऽस्मिन् निवन्धे त्रयस्त्रिंशदधिकाः शतं पद्धतयः सन्ति संविभक्ताः । कविरेवायमारम्भे तासां पद्धतीनामनुक्रमं विषयनिर्देशमुखेन ज्ञापयति । तेनैवानुक्रमणिकाप्रकरणेन विषयाश्चास्याः सूक्तिमुक्तावल्याः प्रायो विज्ञायेरन् । वयमपि विषयान् विवेचयिष्यामो विषयसूच्याम् ।

कविरयं वैद्यभानुर्विशेषकविकाव्यप्रशंसायां ग्रथ्यमाने व्यासवाल्मीकिपाणिनिप्रभृतिकविरत्नहारे आत्मानं ग्रथयत्यन्ते–'नव्या न व्याकरणसरणिर्यस्य माधुर्यधुर्यं नो सौन्दर्यं नवनवरसः स्रोतसो न प्रवाहः । यादृक्प्रीत्या कथयति गिरां देवता देव तादृक् काव्यं श्राव्यं कवयति भिषग्भानुनामा स एषः । ' इत्यनेन श्लोकेन । उपसंह्रियते च कविकाव्यप्रशंसासमनन्तरं ' इत्थं कविकुटुंबस्य वचांसि विचिनोति यः । ' इत्येनन ( ४९ )

अस्यां विशेषकविकाव्यप्रशंसायां ये वर्णिताः कवयः प्रायस्ते निबन्धेऽस्मिन् तत्तत्सुभाषितस्य कर्तृतया तत्र तत्र नामनिर्देशमुखेन निर्दिश्यमानेष्वन्तर्भवन्ति । तेषां च कवीमामकारादिक्रमेणानुक्रमणी तत्तत्कृतसुभाषिताकरप्रदर्शनपूर्वकं निबन्धस्यान्ते ( परिशिष्टभागे ) प्रदर्शिता नाम ! तत् कविकाव्यप्रशंसायामुपवर्णितानां कवीनामनुक्रमणी नास्माभिः पृथक् प्रदर्श्यते । प्रसङ्गादिदं स्मारयामः । तादृशः कोऽपि समयोऽभूत्–यस्मिन् स्त्रियोऽपि कवीनां सदसि प्रतिष्ठिता आसन्–शिलाभट्टारिका, विकटनितंबा, विजयाङ्का, प्रभुदेवी, बिज्जाका, इत्याद्याः । एवं जात्या अवरेष्वपि कविवरैरपि श्लाघनीयाः कवय आसन् । यानधिकृत्येयमुपवर्णना—' शब्दार्थयोः समो गुम्फः पाञ्चाली रीतिरुच्यते । शिलाभट्टारिकावाचि बाणोक्तिषु सा यदि ॥ के वैकटनितम्बेन गिरां गुम्फेन रञ्जिताः । निन्दन्ति निजकान्तानां स्वमौग्ध्यमधुरं वचः । सरस्वतीव कर्णाटी विजयाङ्का जयत्यसौ । या वैदर्भगिरां वासः कालिदासादनन्तरम् । सूक्तीनां स्मरकेलीनां कलानां च विलासभूः । प्रभुदेवी कविर्लाटी गताऽपि हृदि तिष्ठति ॥ ' ( ४६ ) ' सरस्वतीपवित्राणां जातिस्तन्त्रं न देहिनाम् । व्यासस्पर्धी कुलालोऽभूत् यत् द्रोणो भारते कविः । अहो प्रभावो वाग्देव्या यच्चण्डालदिवाकरः । श्रीहर्षस्याभवत् सभ्यः समो बाणमयूरयोः । ' (४५.पृ.) अनेन विज्ञायते सरस्वती पवित्रयति जात्या अपवित्रमपि । यदसौ कवीनां सभां समलङ्कुर्वन् मननीयो भवति महतामपीति । ननु केयमपवित्रता, विद्यया तदपनोदनप्रकारश्च कः, इतिजिज्ञासा काऽपि समुदेत्यत्र । अथापि प्रासङ्गिकादस्मात् प्रकृतानपेक्षितात् विचारादपसरामो वयं प्रकृतं परिसमापयन्तः ।

अथास्मिन् निबन्धे तत्र तत्र पद्यमनूद्य अमुककवेरिति कर्तुर्नाम निर्दिश्यते । त एते निर्देशाः प्रायो न विसंवादिनः । कतिचन विसंवादिनोऽपि, यदन्यस्य कृतिरन्यस्य नाम्ना निर्दिश्यते ।

यथा–आयाते दयिते मनोरथशतैरितीदं पद्यं (२७७) अमरुशतकस्थं अद्भुतपुण्यस्येति निर्दिश्यते । तथा 'एकत्रासनसङ्गतिरित्येतत् (१९७) अमरानन्दस्येति । श्रीहर्षविरचितं 'प्रणयविशदा'मित्येतत् (२५६) अमरोरिति । 'पञ्चत्वं' इत्येतत् (१५३) चोरपञ्चाशिकास्थं आकाशपोलेरिति । एवमन्यदपि । कविनामानुक्रमानुरोधेन निरूपितायां श्लोकानुक्रमण्यामस्माभिः पद्याकरप्रदर्शनावसरे अन्यदीयत्वज्ञापनाय [ ] एवमुभयतोरचितयो रेखयोरन्तराले [ रत्नावली ] [ चोरपञ्चाशिका ] इत्यनेन प्रकारेण यथोपलम्भमाकरः प्रदर्शितो वर्तते । तदयं कर्तृनिर्देशः तानि तानि पद्यानि संगृह्णता निबन्धकारेणैव कृत इति नावधारयितुं शक्यते । तथासति ईदृशः प्रमादः कथं युज्येत । तत् अर्वाचीनैः क्वचित् क्वचिदयं निर्देशः कृतः स्यात् । द्वयोः श्लोकयोरेककर्तृकतायां 'एतौ' अमुककवेरिति, त्रयाणां चतुर्णां वा एककर्तृकत्वे 'एते' अमुककवेरिति निर्देशो वर्तते । 'एतौ' 'एते' इति विशेषनिर्देशं विना कर्तुर्नाममात्रं यत्र निर्दिश्यते तत्र तस्य श्लोकस्यैकस्यैव स कविः कर्तेत्यवधार्यते । क्वचित् लेखकप्रमादतः 'एतौ' 'एते' इत्यनयोर्वैपरीत्यमपि दृश्यते । परिशिष्टे त्रेधा पद्यानुक्रमणी समुपनिबद्धाऽस्माभिः । एका निबन्धेऽस्मिन् संग्रहीतानां सर्वेषां पद्यानामकारादिक्रमेणानुक्रमणी । अपरा अकारादिक्रमनियततत्तत्कविनामानुक्रमानुसारिणी तत्तत्कविकृतपद्यानुक्रमणी आकरप्रदर्शनगर्भा । अन्या अनिर्दिष्टकर्तृकाणां यथोपलम्भमाकरप्रदर्शिनी । सूक्तिविशेषान् आकरविशेषान् कविवरांश्चैतन्निबन्धानुबन्धिनो विचिन्वतामनायासेन तदवबोधनेनोपकारिणी नाम सेयमनुक्रमणी । इमां सूक्तिमुक्तावलीं तत्र तत्र निगूढामलब्धप्रचारां प्रथितविद्यावैभवाः श्रीमन्तो भण्डरकर महाशयाः समधिगत्य परिचयमस्याः सुमनसामापादयन्तः स्वीये विविधविमर्शप्रकाशके निबन्धे (Bhandarkar's Reports on search for Sanserit manuscripts Vol. II) अनुक्रमणिका–सामान्यकविप्रशंसा–विशेषकविप्रशंसापद्धत्यनुवादपूर्वकं तत्तत्कविकर्तृकतत्तत्पद्यप्रथमवाक्यमनुवदन्तः स्वरूपमस्याः सामान्यतः प्रादर्शयन् । ततोऽप्यस्माभिरुपलब्धेषु मातृकाकोशेषु (manuscripts) आधिकानि पद्यानि अधिकाश्च कर्तारः कवय उपलभ्यन्ते । नचैतावन्मात्रेण सूक्तिमुक्तावली जल्हणेनाविस्तृता विस्तृताचे तिद्वेधा ग्रथितेति समुत्प्रेक्षणं युज्येत । यत्तैर्महाशयैः कर्तृनामनिर्देशपूर्वकमुपात्तानामेव श्लोकानामनुक्रमः प्रदर्श्यते । नामनिर्देशरहिताः श्लोका बहवस्तैः परिदृष्टेऽपि पुस्तके (manuscripte) स्युः । अस्माभिरुपलब्धेषु पुस्तकेषु निर्दिष्टकर्तृकतया उपलभ्यमानास्तैरुपलब्धेऽनिर्दिष्टकर्तृका अपि स्युः । तत् यावत्तैर्महाशयैरवलोकितं पुस्तकं (manuseripte) नास्माकमवलोकनपथमुपयाति तावत् द्वेधा ग्रथितेति कथं वयं संभावयितुं शक्नुमः । अस्याः सूक्तिमुक्तावल्याः समुद्धृत्य सारभूतानि पद्यमौक्तिकानि केनाचिदन्येन ग्रथितः सूक्तिमुक्तावलीसंग्रहनामा निबन्धो वर्तते । तस्य लिखितपत्रात्मकं पुस्तकद्वयं बडोदाराजकीयप्राच्यविद्यालयतः समुपलब्धमेतत्संशोधनकर्मणि सहायतया स्वीकृतमभूत् । सचान्य एव संग्रहः । युज्यते नामेयमेकाऽत्र संभावना–ईदृशेषु सूक्तिसंग्रहनिबन्धेषु प्राचीनाः कतिचन सुमनसस्तत्तत्प्रकरणेषु समुचितान् सारतमान् श्लोकाननुस्मृत्य स्वयं योजयेयुरिति । किन्तु वयमिदमित्थमेवेति निश्चेतुमद्य न शक्नुमः ।

अस्यां सूक्तिमुक्तावल्यामनूदितानां सुभाषितानामाकरमवगमयितुं प्रवृत्ता वयं महताऽपि यत्नेन कात्स्न्र्येन प्रदर्शयितुं न पारयामः । यत् बहूनि हि कवीनां सुभाषितानि हारात्मतामनापन्नानि विप्रकीर्णानीव कुसुमानि संगृह्यन्ते तैस्तैः संग्रहकारैः । येषामाकरः सरस्वतीनिवासभूतं तत्तन्महा-

कवीनां वदनारविन्दमेव, ईदृशः सुभाषितसंग्रहो वा। निबन्धा अपि कतिचन महाकवीनामलब्धप्रचाराः नाम्नाऽप्यप्रत्यभिज्ञायमानाः क्वचन विलीना इव सन्ति। ईदृशेषु कर्तुर्नाम श्रुतमपि कथमाकरावधारणाय पर्याप्तं स्यात्। अनिर्दिष्टकर्तृकाणां तु पद्यानां विषये किमु वक्तव्यम्। तथा नाम्ना निर्दिष्टानामपि नम्मैयनाचिराजकृष्णपिल्लप्रभृतीनामप्रसिद्धानां च। अथाप्यनेककाव्यावलोकनेन यावदवधारितं तावदस्माभिरिह प्रकटीकृतम्। तावता गुणैकपक्षपातिभिः सन्तोष्टव्यमित्यभ्यर्थयामः। ये पुनरनवरतं नवं नवं काव्यमवलोकयन्तः कालमखिलं नयन्ति काव्यरसास्वादैकपरायणास्ते अनिर्दिष्टाकराणां पद्यानामाकरं यथोपलम्भमावेदयन्तः पुनः संस्करणसमयेऽस्या उपकुर्वन्त्विति च प्रार्थयामः।

अस्यां सूक्तिमुक्तावल्यां ग्रथितेषु सूक्तिमौक्तिकेषु कानिचित् सुभाषितावली–सदुक्तिकर्णामृत–कवीन्द्रवचनसमुच्चयप्रभृतिषु सुभाषितसंग्रहरूपेषु निबन्धेषु संग्रथितानि नाम। तत्तत्स्थानप्रदर्शनं नातिप्रयोजनकमिति ततो वयं प्रतिनिवर्तामहे। आकरोपदर्शनमेव त्वत्यन्तमपेक्षितम्। दृश्यते चात्रत्यानामनिर्दिष्टकर्तृकाणां निर्दिष्टकर्तृकाणां च पद्यानां केषांचिदनुवादः काव्यप्रकाश ध्वन्यालोक कविकण्ठाभरणसुवृत्ततिलक औचित्यचर्चाप्रभृतिषु प्राचीननिबन्धेषु। न च ते तेषामाकरभावमर्हन्ति। कवीन्द्रवचनसमुच्चयप्रस्तावनायां सदुक्तिकर्णामृतप्रस्तावनायां चातिविस्तृतायाम् इदमिदं पद्यं सूक्तिमुक्तावल्यामस्तीति सूच्यते। तत एव सूक्तिमुक्तावल्यां ग्रथितमिदमिदं पद्यं सदुक्तिकर्णामृतादिसुभाषितसंग्रहनिबन्धेष्वस्तीति विज्ञायतएवेति तदर्थः प्रयासोऽपि न पृथगस्माकमपेक्ष्यते।

अस्मिन् निबन्धे तानितानि पद्यान्यनूद्य कर्ता अयमयमिति कवयो निर्दिश्यन्ते। तत्र केचित् अखिलक्षितितलप्रसृतसौरभाः निजनिजकाव्यसौरभाः सर्वतः प्रसिद्धा नाम कालिदासप्रभृतयो महाकवयः। अपरे पुनरनतिप्रसिद्धाः नाचिराज नम्मैय कृष्णापिल्लप्रभृतयः। तत्र ये प्रथमे, तानधिकृत्य किं वा वक्तुमस्माकमवसरोऽस्ति वाचाम्, तदनुन्धि किं वा को वा न वेद विबुधः। ये पुनर्द्वितीयास्तदनुबन्धि किं वा वयं जानीमः। अथापि यथोपलम्भमिह किमप्यावेदयामः—

**अचलः**—कविरयं कदा कुत्राभूत्किंवा काव्यमेतत्कृतमित्येतन्न विज्ञायते। परमस्य कवेः सूक्तिरत्नान्यान्यपि श्रीधरदासप्रभृतिभिः सूक्तिसंग्रहकारैः संगृहीतानीमानि समुपलभ्यन्ते—

'रेवानिर्झरवारिबिन्दुशिशिरः प्रेयानिवायं सखे' ( सदु. १-९०-४ ).
'प्रभाते सन्नद्धस्तनिततनिमानं जलधरं' ( सदु. १-९२-२ ).
'कनकभूषणसंग्रहणोचितो यदि मणिस्त्रपुणि प्रतिरुध्यते' ( सदु. ४-३६-१ ).
'हर्षाश्रुदूषितविलोचनया मयाऽद्य किं तस्य तत्सखिनिरूपितमङ्गमङ्गम्' ( कवी ३२० ).

इदमेव 'हर्षाश्रुदूषिते'ति पद्यं सदुक्तिकर्णामृते अचलदासस्येति निर्दिश्यते। अस्यां सूक्तिमुक्तावल्यामनूदितं 'परभृतशिशो' इत्येतत्पद्यं सदुक्तिकर्णामृते अचलसिंहस्येति निर्दिश्यते। तत् संभाव्यते अचलदस इति अचलसिंह इति चाचलस्यैव नामान्तरमिति। अचलसिंहस्यैवाचल इति नाम निर्देशो मुख्यो नाम। नाम्नः पूर्वावयवेन निर्देशो हि लोके रूढः। अचलदास इति दासान्तनिर्देशो लेखकप्रमादेनापि संभाव्येत। अचलसिंहस्येति पूर्णाख्यया समुपलक्षितानि बहूनि पद्यानि सदुक्तिकर्णामृते समुपलभ्यन्ते। कविरयं नार्वाचीनः, यत् प्राचां कालिदासादीनां महाकवीनां श्रेणावेव

गण्यते । अस्यामेव सूक्तिमुक्तावल्यां पद्यमिदमुपलभ्यते ' कविरमरः कविरचलः कविरभिनन्दश्च कालिदासश्च । अन्ये कवयः कपयश्चापलमात्रात्पदं दधति ॥ इति ( ४७ प. )

**अनङ्गहर्षः**—मात्रराजापरनामाऽयमनङ्गहर्षस्तापसवत्सराजचरिताख्यस्य नाटकस्य कर्ता ध्वन्यालोकप्रणेतुरानन्दवर्धनात्प्राक्तनः । यत् तापसवत्सराजचरितस्यैकं पद्यं ' उत्कम्पिनीभयपरिस्खलितांशुकान्ता ते लोचने प्रतिदिशं विधुरे क्षिपन्तीत्येतत् ( अङ्क २ श्लो. १६ ) ध्वन्यालोके अनूद्यते ( उ-३ ) अस्मात्तापसवत्सराजचरितात्समुद्धृतानि बहूनि पद्यानि ध्वनिलोचनकाव्यमीमांसाकाव्यप्रकाशकाव्यानुशासनशृङ्गारप्रकाशसरस्वतीकण्ठाभरणादिप्रबन्धेषु समुपलभ्यन्ते ।

**अभिनन्दः**—अयमभिनन्दः शतानन्दस्य सूनुः रामचताख्यस्य महाकाव्यस्य कर्ता पालान्वयसंभवस्य हारवर्षस्य राज्ञः प्रसादपात्रं सुप्रथितो महाकविः । कविरयं रामचरिते प्रतिसर्गं सर्गान्ते हारवर्षं स्तौति स्वस्य नाम निर्दिशति च—

' तथा तूर्णं कवेः कस्य निर्गतं जीवतो यशः ।
हारवर्षप्रसादेन शातानन्देर्यथाऽधुना ॥ ' ( स. ४ )
' पालान्वयाम्बुजवनैकविरोचनाय तस्मै नमोऽस्तु युवराजनरेश्वराय ।
कोटिप्रदानघटितोज्वलकीर्तिमूर्तिः येनामरत्वपदवीं गमितोऽभिनन्दः ( स. ७ )
' जयति जगन्ति भ्रमती कीर्त्या सह हारवर्षनृपशशिनः ।
शिरसि कृता कृतविधैः कृतिरियमार्याविलासस्य ॥ ' ( स. ३२ )

इति नामान्तरं चात्मनो निर्दिशति तत्रैव। अस्यामेव सूक्तिमुक्तावल्यां कविरत्नैः कालिदासादिभिः सहैनमभिनन्दं संग्रथयन् स्तौति कश्चित् ।

' कविरमरः कविरचलः कविरभिनन्दश्च कालिदासश्च ।
अन्ये कवयः कपयः चापलमात्रात्पदं दधति ' ॥ इति ।

श्लाघते चैष महाकविः राजशेखरम्—

' सौजन्याङ्कुरकन्दसुन्दरकथासर्वस्वसीमन्तिनी–
चित्ताकर्षणमन्त्रमन्मथसुहृत्कलोलवाग्वल्लभ ।
सौभाग्यैकनिवेश पेशलगिरामाधार धैर्याम्बुधे
धर्माद्रिद्रुम राजशेखरकवे दृष्टोऽसि यामो वयम् ' ( सद्. ३. ११. २. )

अत्र ' यामो वय'मिति बहुवचनान्तनिर्देशात् ' राजशेखरकवे दृष्टोऽसी ' त्येकवचनान्तनिर्देशाच्च राजशेखरादस्याभिनन्दस्य वयसा ज्यैष्ठ्यं गम्यते ।

स्तौति चायं महाकवीन् प्राक्तनान्—

' उन्नीतो भवभूतिना प्रतिपदं बाणे गते यः पुरा
यश्चीर्णः कमलायुधेन सततं ये नागमत् केसटः ।
यः श्रीवाक्पतिराजपादरजसां संपर्कभूतिश्चिरं
दिष्ट्या श्लाघ्यगुणस्य कस्यचिदसौ मार्गः समुन्मीलति ॥ ' सद्. ( ५-२६-४ )

कादम्बरीकथासारकर्ता अभिनन्दस्तु जयन्तभट्टतनयोऽस्मादभिनन्दादन्यः। यस्य श्लोकोऽयमनूद्यते सुवृत्ततिलके क्षेमेंद्रेण 'कथाप्रसङ्गे यथाऽभिनन्दस्य—

तस्यां निजभुजोद्योगविजिताराातिमण्डलः।
आखण्डल इव श्रीमान् राजा शूद्रक इत्यभूत्॥ इति।

यस्यानुष्टुप्छन्दसि प्रागल्भ्यमुपवर्ण्यते च तत्रैव तेन—

अनुष्टुप्सततासक्ता साऽभिनन्दस्य भारती।
विद्याधरस्य वदने गुलिकेव प्रभावभूः॥ इति। (उ. ३)

अस्यां सूक्तिमुक्तावल्यां अभिनन्दकर्तृकतया निर्दिष्टेषु श्लोकेषु केचन रामचरिते नोपलभ्यन्ते। रामचरिते अनुपलभ्यमाना बहवोऽभिनन्दस्यास्य श्लोकाः सदुक्तिकर्णामृते समुपलभ्यन्ते। तत् एषामाकरभूतेनास्यैव कृत्यन्तरेण भाव्यम्। वासिष्ठरामायणसंग्रहश्च ईदृशानामाकरतां नार्हति। नापि तत्रोपलभ्यते। जयन्ततनयस्याभिनन्दस्य वा कृतिष्वन्वेषणीया नाम। समयश्चास्य क्रैस्तनवमशतकम् ( A. D. 850-900 )

**अभिनवगुप्तः**—अयमभिनवगुप्ताचार्यः आनन्दवर्धनकृतध्वन्यालोकस्य लोचनाख्यव्याख्याकर्ता तन्त्रसारतन्त्रालोकपरमार्थसारप्रभृत्यनेकग्रन्थानां रचयिता प्रख्यातः प्रत्यभिज्ञादर्शनवृत्तिप्रणेता माहेश्वराचार्यः। अस्योपाध्यायो भट्टेन्दुराजः। लोचनमारभमाणोऽयं मङ्गलमारचयन्ननुस्मरति भट्टेन्दुराजम्—

'भट्टेन्दुराजचरणाब्जकृताधिवासहृद्यश्रुतोऽभिनवगुप्तपदाभिधोऽहम्।' इति।

निर्दिशति च 'अस्मदुपाध्यायभट्टेन्दुराजस्ये'ति। (ध्वन्यालोकलोचने प. ४३) इति। उत्पलाचार्यः अस्य परमगुरुरासीत्। लोचन एवैतदुच्यते–'यदुक्तमस्मत्परमगुरुभिरुत्पलपादै'रिति। (ध्वन्या. ३०-१. काव्यमाला. गु. २५) समयश्चास्य क्रैस्तं दशमशतकम्।

'परार्थे यः पीडामित्येष' श्लोकः सूक्तिमुक्तावल्यामस्यां (१२०५.) इन्दुराजस्येतिनिर्दिश्यते। ध्वन्यालोके आनन्दवर्धनाचार्यैरुदाहृतोऽयं श्लोकः (ध्वन्या. १ उ. प. ५३) कथमिवेन्दुराजस्य भवेत्, यदीन्दुराजस्य, कथमयं ध्वन्यालोककारादर्वाचीनस्य लोचनकारस्याभिनवगुप्तस्य गुरुर्भवितुमर्हति। ध्वन्यालोके उदाहृतस्य श्लोकस्य कर्त्रा ध्वन्यालोककारादानन्दवर्धनात्प्राचीनेन हि भाव्यम्। तदिन्दुराजस्येति निर्देशः प्रामादिकः। सदुक्तिकर्णामृते चैषः श्लोको: वाक्पतेरिति निर्दिश्यते। ईदृशः कर्तृनिर्देशे प्रमाद ईदृशेषु सूक्तिसंग्रहग्रन्थेषु बहुशो वर्तते।

अमरुकः—कविरयं सुप्रसिद्धः शृङ्गाररसनिष्यान्दिनः शतकस्य कर्ता। श्लाघते चैनमर्जुनदेवः—'अमरुककवित्वडमरुकनादेन विनुन्हुता न सञ्चरति। शृंगार भणितिरन्या धन्यानां श्रवणविवरेषु।' इति अस्य कृतेरमरुशतकात् 'कोपात्कोमललोलबाहुलतिकापाशेन बद्ध्वा दृढं' इति श्लोकः आनन्दवर्धनाचार्येण ध्वन्यालोके उदाह्रियते। तदयममरुकः आनन्दवर्धनात्प्राचीनः। प्रायोऽस्य

---

१ सूक्ति–१२० भो भोः किं किम् } ध्वन्यालोकलोचने ३६ काव्य. मा. गु. २५.
सूक्ति–१५५ शीतांशोरमृत } „ ९४ „ „

समयेनाष्टमशतकेन भाव्यम् । अस्यामेव सूक्तिमुक्तावल्यामन्यकर्तृकतया उदाह्रियमाणाः 'सा यावन्ति पदान्यलीकवचनैः' 'भ्रूभङ्गे रचितेऽपि दृष्टिरधिकं सोत्कण्ठमुद्वीक्षते' इत्यादयः श्लोका अमरुशतके समुपलभ्यन्ते । संभाव्यते च केश्चित्–अर्गट वासुदेव पुलिन रत्नाकप्रभृतीनां श्लोकाः पश्चात्तनैरमरुशतके सङ्कलिता इति ।

**अमृतदत्तः**—[ भागवतामृतदत्तः ] कविमिमं सदुक्तिकर्णामृतस्य कर्ता श्रीधरदासः सुभाषितावल्याः कर्ता वल्लभदेवः सूक्तिमुक्तावल्याः कर्ता जल्हणश्च समुपस्थापयति नश्चेतःपदे कांश्चन तदीयान् श्लोकानुदाहरन् । नान्यमेतदुपस्थापकमुपलभामहे अतश्चैनममृतदत्तं जल्हणवल्लभदेव श्रीधरदासेभ्यः केवलं प्राचीनं मन्महे । श्रीमान् पीटरसन् Peterson महाशयः–सुभाषितावल्यामुदाहृतं 'काश्मीरान् गन्तुकामस्य मीरशाहाख्यभूपतेः । शाहाबुदीनभूमीन्द्रः प्राहिणोदिति लेखकम् ।' ६०८ 'किमेवमविशङ्कितः शिशुकुरङ्ग लोलक्रमं परिक्रमितुमीहसे विरम नैव शून्यं वनम् । स्थितोऽत्र गजयूथनाथमथनोच्चलच्छोणितच्छटापटलभासुरोत्कटसटाभरः केसरी ॥' इति श्लोकद्वयमवलम्ब्य, काश्मीरानभियोद्धुं प्रवृत्ताय मीरशाहमहीपतये शहाबुदीनभूपतिना प्रहितोऽयं 'किमेवमविशङ्कितः' इत्यममृतदत्तविरचितः श्लोक इत्यवधारयन् शाहाबुदीनसभायां समवस्थितः पण्डितामृतदत्तस्तत्समकालिक इति संभावयति, समयं च तस्य निर्दिशति ( 1352 A. D. ) इति । यद्येवम् अस्यामृतदत्तस्य श्लोकाः सूक्तिमुक्तावल्यां सदुक्तिकर्णामृते च कथमवकाशं लभेरन् । जल्हणश्रीधरौ हि चतुर्दशशतकतः प्राक्तनौ । जल्हणस्य समयः त्रयोदशं शतकम् ( 1258 A. D. ) श्रीधरस्य च समयो द्वादशं शतकम् ( A. D. 1178 ) यदपि– तस्योक्तश्लोकद्वयविमर्शनेन शाहाबुदीनसमकालतासमुत्प्रेक्षणं तदप्यालोचनीयम् । तत्र हि—

'शैलश्रेणिगुहागृहेषु निवसन् जीवन् निजाडम्बरैः
अव्याजोर्जितविक्रमो मृगपतिर्वीरेन्द्र मा कुप्यताम् ।
अस्मात् कुञ्जरकुम्भसंभववसापानैकहेवाकिनो
यल्लब्धं व्यसनाकुलेन मनसा स्वेनैव तच्चिन्त्यताम् ॥' ( पं. मङ्खकस्य )

इत्यस्य समनन्तरमयं श्लोको वर्तते—

काश्मीरान् गन्तुकामस्य मीरशाहाख्यभूपतेः ।
शाहाबुदीनभूमीन्द्रः प्राहिणोदिति लेखकम् ॥ इति ।

एतत्समनन्तरमयं श्लोको वर्तते—

किमेवमविशङ्कितः शिशुकुरङ्गलोलंक्रमं
परिक्रमितुमीहसे विरम नैव शून्यं वनम् ।
स्थितोऽत्र गजयूथनाथमथनाच्छलच्छोणित-
च्छटापटलभासुरोत्कटसटाभरः केसरी ॥ इति ॥ ( भा. अमृतदत्तस्य )

अत्र मङ्खकश्लोकामृतदत्तश्लोकयोर्मध्ये समुपलभ्यमानः 'काश्मीरान् गन्तुकामस्य × × × प्राहिणोदितिलेखकम्' इत्ययं श्लोकः इतिशब्देन अव्यवहितपूर्वं परामृशति ? उत अव्यवहितानन्तरं श्लोकम् ? । स्वरसतःपूर्वोक्तप्रकारपरामर्शितैव तु समुचिता । वक्ष्यमाणादुक्तो हि बुद्धावुपसर्पति प्रथमम् ।

सति बाधे वक्ष्यमाणमुपस्थाप्यतां नाम। समयबाधश्च द्वयोः पक्षयोः समः मङ्खइवामृतदत्तोऽपि संभाव्यते प्राक्तनः। प्राचीनस्यैव कवेः कृतिः किं लेखपदं नार्हति । अर्थानुरूप्यमेव त्वपेक्ष्यते ।

इदमेव तु विवक्षितं 'काश्मीरदेशविजिगीषया त्वया न गन्तव्यमिति' । पूर्वश्लोके चेदमेव गम्यते । हे वीरेन्द्र-त्वमसि वीरेन्द्रः, वीराणां परदेशाक्रमणे प्रकृत्या भवेदेव प्रवृत्तिः । परं विचार्य तत्र यतितव्यम् । तत्र यो निवसति स सिंहः, सचाव्याजोर्जितविक्रमः । प्रकृत्या पराक्रमसंपन्नः पराभवासहः, स च नापराध्यति, यदस्य परदेशाक्रमणादिषु न प्रवृत्तिः । निजेष्वेव शैलश्रेणिगुहागृहेषु निवसति, निर्झराडम्बरैर्जीवति केवलम्, स एष मा कुप्यताम्, तमेनं मा कोपयेति यावत् कोप्यतामित्येव वा पाठः । कुप्यत' किं तावता इत्यत्राह—अयं हि कुञ्जरकुम्भसंभववसापानैकहेवाकी-गजघटाविदलनक्षमः । अस्मात् युद्धव्यसनाकुलेन परेण यल्लब्धं तत् स्वेनैव मनसा चिन्त्यताम् । इति लेखाशयः । तत् युक्तं नाम 'इतिशब्दस्य पूर्वोक्तप्रकारबोधकत्वम् । वक्ष्यमाणप्रकारपरत्वे ' शिशुकुरङ्गेति संबोधनं किमनुरूपम् ? लोलक्रमं परिक्रमितुमीहसे विरम नैव शून्यं वनम् । इतिशैशवसमुचितलोलक्रमपरिक्रमणापदेशेन युद्धयात्रायाः कथनं किं युज्यते ? ।

**वस्तुतस्तु**—मङ्कामृततदत्तसुभाषितयोर्मध्ये ' काश्मीरान् ' इत्ययं श्लोकः केनचिदर्वाचीनेन योजित इत्येव प्रतिभाति । पूर्वापर श्लोकवत् काश्मीरानित्ययं श्लोको न कस्यचित् सुभषितम् । सुभाषितसङ्ग्रह एव तु सुभाषितसंग्रहकृतां शैली, नेदृशः सुभाषितप्रवृत्तिचरितोपसंग्रहः

**अर्गटः**—अस्य श्लोका अपरेऽपि सुभाषितावल्यां समुपलभ्यन्ते । तेष्वन्यतमः ' उरसिनिहितस्तारोहारः कृताजघने घने × × किमिदमपरंत्रासोत्कंपं दिशो मुहुरीक्षसे ' इत्ययं श्लोकः सदुक्तिकर्णामृते अमरुककर्तृकतया निर्दिश्यते । पीटरसन् महाशयः सुभाषितावल्यां अर्गटस्येति निर्दिश्यमानं

' वपुरनुपमं नाभेरूर्ध्वं विधाय मृगीदृशो
ललितललितैरङ्गन्यासैः पुरा रभसादिव
तदनु सहसा खिन्नेनेव प्रजापतिना भृशं
पृथुलपृथुला स्थूलस्थूला कृता जघनस्थली । '

इत्येतं श्लोकं ' काव्यालङ्कारटीकायां नमिसाधुना ( काव्यालङ्कार. ११ अ. श्लो. ७. ) समुदाहृतं समवलम्ब्य नमिसाधोः प्राचीनमेनं निर्धारयति । नमिसाधोः समयश्च तेनैव टीकायाः समाप्तौज्ञाप्यते—

' पञ्चविंशतिसंयुक्तैरेकादशसमाशतैः ।
विक्रमात् समतिक्रान्तैः प्रावृषीदं समर्थितम् ॥ ' इति । ( संवत् ११२५ )

सूक्तिमुक्तावल्यामस्यां वपुरनुपममित्ययमेव श्लोकः ' जघनस्थलीवटुकस्येति निर्दिश्यते । यद्यस्मिन्निर्देशे दृष्टिर्दीयेत तदा नमिसाधुकृतैतच्छ्लोकानुवादेन जघनस्थलीवटुकस्य समयो व्यज्येत । नत्वर्गटस्य । यदि पुनरेवं संभावयामः—' पृथुलपृथुला स्थूलस्थूला कृता जघनस्थली ' इति जघनस्थलीशब्देन समाप्यमानं जघनस्थलीवर्णनपरं श्लोकं शृण्वता केनचिदुपहासेन कृतं तस्यैव साङ्केतिकं नाम । यथा—

विश्रान्तो दिवसस्तटीमयमटत्यस्ताचलस्यांशुमान्
संप्रत्यङ्कुरितान्धकारपटलैर्लम्बालकाद्यौरभूत् ।
एह्यन्तर्विश वेश्मनः शशिमुखि द्वारस्थलीतोरण-
स्तम्भालम्बितबाहुवल्लि रुदती किं त्वं पथः पश्यसी'ति ( सूक्ति. प. १४. )

श्लोकस्यावसाने 'रुदती किं त्वं पथः पश्यसी'ति निर्देशात् रुदतीब्राह्मण इति साङ्केतिकं नामैतच्छ्लोककर्तुः योगेश्वरस्य प्रवृत्तमिति। तर्हि अर्गटस्यैव समयस्तेनावधार्येत। श्लोकश्चायं सदुक्तिकर्णामृते योगेश्वरस्य कृतिषु अनूद्यते । ( २-५८-२ )

**अर्जुनवर्मदेवः**— अयममरुशतकव्याख्यानस्य प्रणेता सुभटवर्मनरेन्द्रस्य पुत्रः भोजमहाराजवंशे समुत्पन्नः,अस्योपाध्यायो मदनः। श्रावयति चैनत्स्वयमेवामरुशतकव्याख्याने—क्षिप्ताशुभः सुभटवर्मनरेन्द्र-सूनुः,वीरव्रती जगति भोजकुलप्रदीपः। प्रज्ञानवानमरुकस्यकवे : प्रसारश्लोकान् शतं विवृणुतेऽर्जुनवर्मदेवः ॥ इति ॥ 'यदुक्तमस्मदुपाध्यायेन बालसरस्वत्यपरनाम्ना मदनेन' इति च । उदाहरति च बहून् मदनस्य श्लोकानमरुशतकव्याख्याने । अस्यार्जुनवर्मदेवस्यायमन्वयक्रमः—श्रीभोजदेवः, उदयादित्यः, नरवर्मा, यशोवर्मा, अजयवर्मा, विन्ध्यवर्मा, सुभटवर्मा, अर्जुनवर्मा, इति । अयमन्वयक्रमः पीटरसन् महाशयेन सुभाषितावलीप्रस्तावनायामनूदितैः शिलालेखस्थैः

'परमारकुलोत्तंसः कंसजिन्महिमाभुवि । श्रीभोजदेव इत्यासीन्नासीराक्रान्तभूतलः ॥'
इत्याद्यैः श्लोकैर्विज्ञायते । समयश्चास्य संवत् ( 1272 A. D. 1216 )

**अवन्तिवर्मा**—असौ काश्मीरमहाराजः। अस्य सभायां मुक्ताकाणप्रभृतयः कवय आसन्। विज्ञायते चैतत् राजतरङ्गिण्याम्—

'मुक्ताकाणः शिवस्वामी कविरानन्दवर्धनः ।
प्रथां रत्नाकरश्चागात् साम्राज्येऽवन्तिवर्मणः ॥' इति ॥ समयश्चास्य—855–884 A. D.

आनन्दवर्धनः—स्तूयते चायमानन्दवर्धनो ध्वन्यालोकस्य कर्ता राजशेखरेण—'ध्वनिनाऽतिगभीरेण काव्यतत्त्वनिवेशिना । आनन्दवर्धनः कस्य नासीदानन्दवर्धनः ।' इति । (सूक्ति. प. ४६) अयं च काश्मीरमहाराजस्य समये आसीत्, तथाच राजतरङ्गिण्याम्—

मुक्ताकाणः शिवस्वामी कविरानन्दवधनः ।
प्रथां रत्नाकरश्चागात् साम्राज्येऽवन्तिवर्मणः ॥ इति ।

अवन्तिवर्मणो राज्यसमयो नवमं शतकम् । ( 855–884 A. D. ) आनन्दवर्धनः स्वस्य पितुर्नाम स्वयमेव देवीशतकस्यान्ते नोण इति निर्दिशति—

'देव्या स्वप्नोद्गमादिष्टदेवीशतकसंज्ञया ।
देशितानुपमामाधात् अतो **नोण**सुतो नुतिम् ॥'

विषमबाणलीलादयोऽपरे च निबन्धाः सन्त्यनेन विरचिताः । उदाहरति च 'यथाच्च ममैव-विषमबाणलीलाया'मिति ध्वन्यालोकलोचने ।

उत्पलदेवः—भट्टोत्पल इत्यप्यसौ ख्यायते । परमगुरुरयमाचार्याभिनवगुप्तस्य । यदयमाचार्याभिनवगुप्त एव ध्वन्यालोकलोचने एवमाह—'यदुक्तमस्मत्परमगुरुभिरुत्पलपादैरिति । ( ध्वन्या

३० प.) गम्यते च परमगुरुशब्देन गुरोर्गुरुरिति। विज्ञायते चैतदीश्वरप्रत्यभिज्ञाप्रस्तावनायाम्, आचार्याभिनवगुप्तस्य गुरुस्तस्यैव पिता, तस्यायमुत्पलदेवो गुरुः। अयं च गुरुशिष्यभावो माहेश्वरदीक्षाधिगमनिमित्तक इति। ईश्वरप्रत्यभिज्ञाकारश्चायमेवाचार्योत्पलः पिता चास्योदयाकरः अत्रायं श्लोकः—

जनस्यायत्नसिद्ध्यर्थमुदयाकरसूनुना।
ईश्वरप्रत्यभिज्ञेयमुत्पलेनोपपादिता॥ इति। (ई. प्रत्य. अ. ४ आ. २ श्लो. ३)

अस्या एवेश्वरप्रत्यभिज्ञाया व्याख्या प्रत्यभिज्ञाविमर्शिनीनाम्नी अभिनवगुप्ताचार्यविरचिता लघ्वी बृहती च वर्तते। अयमुत्पलाचार्यः प्रत्यभिज्ञादर्शनप्रवर्तकाचार्येषु प्रधानः। अतएव सर्वदर्शनसंग्रहे प्रत्यभिज्ञादर्शनानिरूपणप्रकरणे विवक्षितार्थे प्रमाणतया 'तदुक्तमुत्पलाचार्यैः—

भक्तिलक्ष्मीसमृद्धानां किमन्यदुपयाचितम्।
एतया वा दरिद्राणां किमन्यदुपयाचितम्॥

तदुक्तमुदयाकरसूनुना—

कर्तरि ज्ञातरि स्वात्मन्यादिसिद्धे महेश्वरे।
अजडात्मा निषेधं वा सिद्धिं वा विदधाति कः।
किंतु मोहवशादस्मिन् दृष्टेऽप्यनुपलक्षिते॥
शक्त्याविष्करणेनेयं प्रत्यभिज्ञोपदर्श्यते॥'

तदुक्तं चतुर्थे विमर्शे—

'तैस्तैरप्युपयाचितैरुपनतस्तस्याः स्थितोऽप्यन्तिके
कान्तो लोकसमान एवमपरिज्ञातो न रन्तुं यथा।
लोकस्यैष तथाऽनवेक्षितगुणः स्वात्माऽपि विश्वेश्वरे
नैवायं निजवैभवाय तदियं तत्प्रत्यभिज्ञोदिता॥' (ई. प्र. ४ अ.)

इति तस्यास्य श्लोका उदाह्रियन्ते। अयमेव 'तैस्तै' रिति श्लोको ध्वन्यालोकलोचने अभिनवगुप्ताचार्येण समुदाहृतः। (ध्वन्या. ३० प.)

अयमुत्पलदेवः क्रैस्तदशमशतकपूर्वभागे काश्मीरेष्वासीत्।

उत्पलराजस्येति कर्तृनामनिर्देशेन समुपलक्ष्यमाणाः श्लोकाः कविकण्ठाभरण—सुवृत्ततिलक—औचित्यचर्चा—सदुक्तिकर्णामृतकवीन्द्रवचनसमुच्चयेषु समुपलभ्यन्ते। सचोत्पलराजोऽस्मादुत्पलाचार्यादनन्यइति पण्डितप्रवरस्य श्रीदुर्गाप्रसादस्याशयः प्रतिभाति। यदयमौचित्यचर्चायां समुदाहृतं 'अहौ वा हारे वे'तिश्लोकं अभिनवगुप्तपरमगुरुश्रीमदुत्पलराजकृतं वदति। (काव्य. गु. १ प. १३१) अनूद्यते चैतदेव सदुक्तिकर्णामृतकवीन्द्रवचनसमुच्चयप्रस्तावनयोः'। अमितगतिविरचितसुभाषितरत्नसन्दोहसंशोधकश्रीभवदत्तमहाशयस्तु—तस्यैव प्रस्तावनायां भोजराजपितृव्यस्य सिन्धुराजाग्रजस्य मुञ्जापरनामकवाक्पतिराजस्य श्रीमदुत्पलराज इति नामान्तरं प्रथितं मन्यते। (काव्यमा. गु. ८२) नवसाहसाङ्कचरिते—'श्रीमद्वाक्पतिराजोऽभूत् अग्रजोऽस्याग्रणीः सभामित्यस्मिन् श्लोके (नव. स. ११ श्लो. ९२) श्रीमद्वाक्पतीतिस्थाने 'श्रीमदुत्पले'ति पाठान्तरमुपलभ्यते। तथा—औचित्यचर्चा

यां श्रीमदुत्पलराजकर्तृकतया निर्दिश्यमानः 'अहौ वा हारेवे'ति श्लोकः सदुक्तिकर्णामृते मुञ्जकर्तृकतया निर्दिश्यते । स. प्र. ५. वी. ६० श्लो. ५ तदिदं पण्डितश्रीभवदत्तशर्मणः पक्षं द्रढयति । आभ्यामपरः काश्मीरेषु भागवतः कश्चिदुत्पलाचार्यः कैस्तदशमशतके आसीत् । योऽयमेव स्पन्दप्रदीपिकाटीकाकारः । यमेव श्रीमद्रामानुजाचार्यपरमगुरवः श्रीमद्यामुनाचार्याः 'काश्मीरोत्पलेने'ति निर्दिशान्ति । केचिदन्यमेव वैष्णवमुत्पन्नं मन्यते ।

उत्प्रेक्षावल्लभः—कवेरस्य नाम गोकुल इति । उत्प्रेक्षावल्लभ इतीयमभिख्या सरस्वतीप्रसादसमुपलब्धा । कविरयमेव स्वकृतौ सुन्दरीशतके प्राहेदम्—( काव्य० गु. ९ )

'भारत्यैव क्रियते स्तोत्रैः सन्तुष्टया द्विजद्वारा ।
श्रीगोकुलस्य सुकवेरुत्प्रेक्षावल्लभेत्यभिधा ॥ इति' ( श्लो. १११ )

अयमेव कविः स्वकृतौ भिक्षाटनकाव्ये प्रथमपद्धतेरन्ते—

'वृत्तं वसन्ततिलकं विषयस्य [ योऽस्य ] जीव-
भिक्षाटनं कविरसौ शिवभक्तदासः ।
श्रृङ्गार एव हि रसः तदिह प्रबन्धे
श्रद्धा न कस्य, यदि सूक्तिविनोदशीलः ॥' ( प० १. श्लो. १७ )

इत्यस्मिन् श्लोके शिवभक्तदास इत्यात्मानं ख्यापयति । किमिह नाम्ना ख्यापयति, उतगुणविशेषयोगेन । नाम्नाचेत् गोकुल इतिवन्नामान्तरमिदं स्यात् । अहमास्मिशिवभक्तानां दास इति शिवभक्तिप्रकर्षोऽत्र ज्ञाप्यते इति वयम् । अस्य कवेर्देशकालविशेषावधारकं नैकमपि लिङ्गमुपलमामहे। जल्हणादस्मात्प्राचीन इत्येतावदिहावधारयामः । यदि सुभाषितावलीकारो जल्हणादपि प्राक्तन इति मतमाद्रियेत तदाऽयमुत्प्रेक्षावल्लभस्ततोऽपि प्राचीन इत्यपि निश्चेतुं शक्येत, यत् सुभाषितावल्यामस्य केचन श्लोका उदाह्रियन्ते । अग्रे वल्लभदेवविमर्शसमये तं मतभेदं निरूपयामः ।

**उमापतिधरः**—अयमुमापतिर्वङ्गाधिपतेर्लक्ष्मणसेनस्य सभायां सभासमलङ्करणं कविवर आसीदिति.

'गोवर्धनश्च शरणो जयदेव उमापतिः ।
कविराजश्च रत्नानि समितौ लक्ष्मणस्य च ॥'

इत्यनेन श्लोकेन विज्ञायते । श्लोकश्चायं तस्यैव राज्ञः सभास्थाने शिलायांसमुत्कीर्णो दृश्यते। उपवर्ण्यते चायमुमापतिधरः श्लोकेऽस्मिन्—

वाचः पल्लवयत्युमापतिधरः, सन्दर्भशुद्धिं गिरां
जानीते जयदेव एव, शरणः श्लाघ्यो दुरूहद्रुतेः ।
श्रृङ्गारोत्तरसत्प्रबन्धरचनैराचार्यगोवर्धन
स्पर्धी कोऽपि न, विश्रुतः श्रुतिधरो धोयीकविक्ष्मापतिः ॥ इति ॥

समयश्चास्य लक्ष्मणसेनस्येति व्यक्तम् । लक्ष्मणसेनस्य समयः कैस्तैकादशशतकमिति श्रीमान् पण्डितप्रवरो दुर्गाप्रसादः प्राह साहित्यदर्पणप्रस्तावनायाम् । श्रीमान् पण्डितहरदत्तशास्त्रि

महाशयः (एम्. ए. पि. एच. डी) सदुक्तिकर्णामृतप्रस्तावनायां-श्रीधरदासेनात्मनः लक्ष्मणसेनसमकालीनतां स्वकृतेः सदुक्तिकर्णामृतस्य समयं च ख्यापयता निबन्धान्ते विरचितं

'शाके (११२७) सप्तविं शत्यधिकशतोपेतदशशते शरदाम् ।
श्रीमल्लक्ष्मण सेनक्षितिपस्य रसैकविंशेऽब्दे । (२७)
'श्रीधरदासेनेदं सदुक्तिकर्णामृतं चक्रे ॥'

इतीमं श्लोकं समवलम्ब्य श्रीधरदाससमकालीनतामुमापतिधरस्य संभावयति । संभाव्यतैवं सति गोवर्धनोमापतिधरादीनां द्वादशं शतकं समय इति । इदमेव हृदयंगममिति नः प्रतिभाति । स्तौति चायमुमापतिधरः श्रीधरदासस्य पितरं लक्ष्मणसेनस्यान्तरङ्गमित्रं वटुदासम्—

'अलमादिवराहेण वटुदासं परं स्तुमः ।
जगदुद्धरता येन न वक्रीकृतमाननम् ॥' इति सदु. प्र. ५ वी. ७६ )
'प्रणयिवचनं दीना दृष्टिः शिरोनिहितोऽञ्जलिः
चरणपतनं देव्याः सन्ति प्रसादनहेतवः ।
कुसुमविशिखज्वालातापस्फुटन्मृदुमानसा
वरतनुरसौ केन प्राप्या स एव तु नास्ति मे ॥'
'वाचः परं भजन्त्येता देवि प्रणयचातुरीम् ।
हृदयस्य तु सर्वस्वं त्वमेवैका प्रिया मम ॥' (सदु. २८१ ४।५ )

इदं च श्लोकद्वयं दृश्यप्रबन्धस्य कर्तारमेनमवगमयति । प्रथमेन श्लोकेन-अन्यस्यां नायिकायां बद्धानुरागमात्मानमालक्ष्य जातु देवी चेत् कुप्येत् तत्प्रसादनोपायानां बहूनां करस्थतां स्वस्मिन्नत्यन्तमनुरक्तायाः प्रियतमायाः प्राप्तावुपायस्य दुर्लभतां च कस्यचित्प्रियवयस्यस्याग्रे कश्चिन्महाराजो नायको निवेदयति । द्वितीयेन तु कुपिताया देव्याः प्रसादनं क्रियते । तदिदं मालविकायां बद्धानुरागमग्निहोत्रमनुस्मारयति । अप्रतिमवीरमात्मानं ख्यापयतः कस्यचिद्धीरोद्धतनायकस्य वीरघोषणारूपोऽस्यैव कवेः श्लोकोऽयम्—

आलङ्कानाथनारीस्तनतरलपयोवीचिमुद्रात् समुद्रात्
आस्वर्गङ्गातरङ्गावलिविरलशिलादुस्तरादुत्तराद्रेः ।
आप्राक्शैलात् सुरस्त्रीसुरतगतिविदो मग्नभास्वन्मृगाङ्कात्
आच प्राचेतसाब्धेर्भवतु मम पुरः कोऽपि यद्यस्ति वीरः ॥ सदु. ५१८४

**कपोलकविः**—नैतेन नाम्ना कविः कश्चित् विख्यातः ।

'द्विधाविधाय शीतांशुं कपोलौ कृतवान् विधिः ।
तन्व्यास्तद्रसनिष्यन्दबिन्दवो रदनावली ॥ सू. १८१

इति कपोलवर्णनैवचित्र्यमूलकं साङ्केतिकं नामैवेदं कस्याचित्कवेरिति प्रतिभाति ।

**कमलाकरः**—अस्य कमलाकरस्य द्वावेव श्लोकावस्यां सूक्तिमुक्तावल्यामनूद्येते । तत्रैकस्तु कमलायुधस्येति श्रीधरदासेन सदुक्तिकर्णामृते निर्दिश्यते । अथैकस्यार्थे किं कवेर्विमर्शेन । इदं तु ब्रूमः-सुभाषितावल्याः प्रस्तावनायां पीटरसन् महाशयः काव्यप्रकाशिकाया व्याख्याकारमेनं मन्यते ।

व्याख्याश्च काव्यप्रकाशिकाया बह्व्यः। तासु इतरव्याख्याभ्योऽर्वाचीना कमलाकरव्याख्या। प्रायःक्रैस्तत्रयोदशशतकतोऽर्वाचीना। तस्यास्य श्लोकस्यानुवादः सुभाषितावल्याः कर्तुर्वल्लभदेवस्य क्रैस्ताद्वितीयशतकं समयं समुत्पश्यतां पक्षे नैव घटेत। अस्यां सूक्तिमुक्तावल्यां क्रैस्तत्रयोदशशतकपूर्वार्धसंभूतायामपि नैव घटेततदीयश्लोकानुवादः। तत् अन्यैनेव कमलाकरेण भाव्यम्।

**कमलायुधः**—कविरयमभिनन्देनोपश्लोक्यते—

‘उन्नीतोभवभूतिना प्रतिपदं बाणे गते यः पुरा
यश्चीर्णः कमलायुधेन सततं येनागमत् केसटः।’ इति ( सदु. )

अनेन श्लोकेनायं कविर्बाणात् समनन्तरभव इति विज्ञायते। गौडवधकाव्यकर्तुर्वाक्पतिराजस्यायं गुरुः क्रैस्तसप्तमशतकोत्तरार्धे समजनीति पण्डितश्रीभवदत्तशर्मविरचितसुभाषितरत्नसन्दोहप्रस्तावनातो विज्ञायते।

आह च वाक्पतिराजो गौडवधे—

‘अप्पा एजियमेत्तेणणवरविरसोविजस्स पडिहाइ।
सिरिकमलाउहचलणेहिं कहविजंगहियबहुमाणो॥’ ७९८

इति। श्रीकमलायुधचरणैरित्येष निर्देशः कमलायुधे गुरुभावनां ज्ञापयति।

**कर्णोत्पलः**—इदं चकस्यचित कवेः साङ्केतिकं नाम। तत्र च मूलम्—

‘अंसाकृष्टदुकूलया सरभसं गूढौ भुजाभ्यां स्तनौ
आकृष्टे जघनांशुके कृतमधः संसक्तमूरुद्वयम्।
नाभीमूलनिबद्धचक्षुषि तया व्रीडानताङ्ग्या प्रिये
दीपः फूत्कृतिवातवेपितशिखः कर्णोत्पलेनाहतः॥ सू. २७५

इत्यस्य श्लोकस्यावसाने कर्णोत्पलेनाहत इतिवाक्यविन्यास एव। अयमेव श्लोकः सदुक्तिकर्णामृतेऽप्यस्यैव कवेर्नाम्ना समुपलक्षितः समुपलभ्यते। तदयं कविः श्रीधरदासात् प्राक्तन इति विज्ञायते। नेतो विशेषःकोऽपि।

**कर्पूरकविः**—डाहालाधीशस्य कर्णस्य सभायामासीत्। विज्ञायते चैतत् मेरुतुङ्गाचार्यविरचिते प्रबन्धचिन्तामणौ। तथाच तत्रत्यं वचनम्—‘श्रीकर्णस्याग्रे इदं काव्यमुक्तं कर्पूरकविना—

मुखे हारावाप्तिर्नयनयुगले कङ्कणभरो
नितम्बे पत्राली सतिलकमभूत्पाणियुगलम्।
अरण्ये श्रीकर्ण त्वदरियुवतीनां विधिवशात्
अपूर्वोऽयं भूषाविधिरहह जातः किमधुना।’ इति।

विक्रमाङ्कदेवचरिते बिल्हणः कर्णं वर्णयति—

‘कालः कालञ्जरगिरिपते × × × श्रीडाहालक्षितिपरिवृढः सोऽपि यं प्राप्यवृत्तं कर्णः कर्णामृतरसास्वादमन्तस्ततान’ इति। १८ ९३ तदयं कविर्बिल्हणसमकालः। ( क्रैस्तैकादशशतकस्योत्तरार्धम् ) आसीच्च नाचिराजोनाम कविः कर्पूरकवेः समये।

तथाचेदं पद्यं नाचिराजकविप्रशंसापरं कर्पूरकवेः—

'कन्ये काऽसि, न वेत्सि मामपि कवे कर्पूर, किं भारती,
सत्यं किं विधुराऽसि, वत्स मुषिता, केनाम्ब, दुर्वेधसा ।
किं नीतं तव, मुञ्जभोजनयनद्वन्द्वं, कथं वर्तसे
दीर्घायुर्भजतेऽन्धयष्टिपदवीं श्रीनाचिराजः कविः ।' ( प्रबन्धचिन्तामणौ )

**कलशः**—कविरयं काश्मीरमहाराजः श्रीमदनन्तराजस्य सूनुः अस्य राज्यसमयः क्रैस्तमेकादशशतकम् । ( 1080–1088 A. P. ) तनयोऽस्य हर्षदेवः । बिल्हणो विक्रमाङ्कदेवचरिते यमेनं वर्णयति—

'पुण्यैरैरावतकरिकरोच्चण्डदोर्दण्डशाली
देव्यां तस्यां कलशनृपतिस्तस्य जातस्तनूजः । वि. १८. ५१

इत्यादिना । कवित्वं चास्य निरुपममाह तत्रैव—

'यस्यापूर्वा पदपरिणतिः काऽपि चर्याविचारे
वाक्चातुर्ये प्रसरति गतिर्वादिनां मौनमुद्रा ।
प्रख्यातं तत्त्रिजगति पुनः सर्वभाषाकवित्वं
यस्यास्वादे भवति सिकताकर्कशा शर्कराऽपि ॥ इति ।

**कल्याणः**—कविरयं काश्मीरः काश्मीराधीश्वर श्रीसुस्सलदेवनंदन श्रीजयसिंहसमकालः अलकदत्तात् समधिगतकाव्यकलाकौशलः । स्वाग्रजस्य लङ्ककस्य सभायां समवस्थितान् पण्डितान् वर्णयता मङ्खकेन श्रीकण्ठचरिते समनुवर्ण्यते चायम्—

'श्रीमानलकदत्तो यमनल्पं काव्यशिल्पिषु ।
स्वपरिश्रमसर्वस्वन्याससभ्यममन्यत ॥
तथोपचस्करे येन निजवाङ्मयदर्पणः ।
बिल्हणप्रौढिसंक्रान्तौ यथा योग्यत्वमग्रहीत् ॥
तत्तद्बृहत्कथाकेलिपरिश्रमनिरङ्कुशम् ।
तं प्रश्रयप्रयत्नेन कल्याणं संममीनत् ॥ इति ॥ २५–७८×८०
क्रैस्तद्वादशशतकस्य पूर्वार्धे श्रीजयसिंहराज्यसमयः ।

**कविरत्नम्**—सदुक्तिकर्णामृते भोजकर्तृकं पद्यमिदमुपलभ्यते—

'अस्तंगतभारविरवि कालवशात्कालिदासविधुविधुरम् ।
निर्वाणबाणदीपं जगदिदमद्योतिरत्नेन ॥ प्र. ५, वी. २६ श्लो. २

पद्यमिदं विमृशतां नः प्रतिभाति, रत्नसमाख्ययां भोजेन कीर्त्यमानः कविरासीत् तस्यैव समये । स एवायं कविरत्नमिति । सदुक्तिकर्णामृतप्रस्तावनायां विद्यासुधाकरेण श्रीहरदत्तशर्मणा कविरत्नमधिकृत्य यदुच्यते तदप्यवलोक्यताम् ।

**कालिदासः**—कविकुलसार्वभौममेनं कालिदासं को वा न वेद भुवनतले। कृतिरस्य कस्य वा न चेतः समाह्लादयति सहृदयस्य, क्व वयं कृतेरस्य विमर्शे, ते हि रसिकसार्वभौमाः काव्यरसास्वादैकपरायणाः काव्यस्वरूपविमर्शका विरला नाम। कालदेशविमर्शे चास्य क्व वयम्। ऐतिहासिकपथानुगामिनो हि बहवो विवदन्तेऽस्य समयदेशनिर्णये। कृतिष्वपि। शाकुन्तलादि दृश्यप्रबन्धत्रयस्य रघुवंशादिश्राव्यप्रबन्धत्रयस्य च कर्तारमेनं बहवः, अपरे च कतिच न विमर्शका दृश्य प्रबन्धमात्रस्य कर्तारमेनमपरं च श्राव्यप्रबन्धकर्तारं मन्यन्ते।

तत्र केचन—समयमस्य समुत्प्रेक्षन्ते क्रैस्ताब्दतः प्राचीनम्। अपरे चार्वाचीनम्। तत्र नैकतर पक्षनिर्णयाय वयं प्रयतामहे। किन्तु क्रैस्तादर्वाचीनोऽयमिति पक्षे विमर्शकानामाशयमनुवदामः—उज्जयिन्यां समधिष्ठितसार्वभौमसिंहासनस्य प्रथितपराक्रमस्य श्रीमद्राजाधिराजस्य विक्रमादित्यस्य सभायां तन्माननैकपदं सरस्वतीप्रसादपात्रमेष कविकुलललामभूतः कालिदास आसीत्। रामचरितकाव्यस्य प्रणेता अभिनन्द इदमाह—

'हालेनोत्तमपूजया कविवृषः श्रीपालितो लालितः'
ख्यातिं कामपि कालिदासकवयो नीताः शकारातिना
श्रीहर्षो विततार गद्यकवये बाणाय वाणीफलम्।' इति।

शकारातिर्विक्रमादित्य इति सुप्रथितम्। आख्यायिका चेयमत्र—'यो रुक्मदेशाधिपतिं शकेश्वरं जित्वा गृहीत्वोज्जयिनीं महाहवे। आनीय संभ्राम्य मुमोच तं त्वहो श्रीविक्रमार्कः समसह्य विक्रमः' इति। कालिदासकवय इति बहुवचनं माननायाम्। यच्च महाकाव्यं सेतुबन्धाख्यं प्रवरसेनविरचितं विख्यायते, उपस्तूयते च काव्यादर्शकारेण दण्डिना—

महाराष्ट्राश्रयां भाषां प्रकृष्टं प्राकृतं विदुः।
सागरः सूक्तिरत्नानां सेतुबन्धादि यन्मयम्॥ इति।

बाणेन च—'कीर्तिः प्रवरसेनस्य प्रयाता कुमुदोज्ज्वला॥
सागरस्य परं पारं कपिसेनेव सेतुना॥ इति।

तत् काव्यं कालिदासो विक्रमादित्यनियोगेन प्रवरसेनस्यार्थे विरच्य प्रवरसेननाम्ना प्रख्यापयामास। तदिदं तस्य व्याख्याता रामदासो व्यक्तमाह व्याख्यारम्भे—

धीराणां काव्यचर्चाचतुरिमविषये विक्रमादित्यवाचा
यं चक्रे कालिदासः कविकुमुदविधुः सेतुनाम प्रबन्धम्।
तद्व्याख्यासौष्ठवार्थं परिषदि कुरुते रामदासः सएष
ग्रन्थं जल्लालदीन्द्रक्षितिपतिवचसा रामसेतुप्रदीपम्॥

इह तावन्महाराजप्रवरसेननिमित्तं महाराजाधिराजाज्ञया निखिलकविचक्रचूडामणिः कालिदासमहाशयः सेतुबन्धप्रबन्धं चिकीर्षुः।' इति। व्याचष्टे च—अहिणवराआरद्धाचुक्कक्खलिएसुविहडितपरिट्ठविआ इतीमं श्लोकम्—' अभिनवेन राज्ञा प्रवरसेनेनारब्धा। कालिदासद्वारा। तस्यैव कृतिरित्याशयः। च्युतोऽनवहितः कविः तस्य स्खलितेषु-छन्दोभङ्गादिनानानवधानेषु, विघटिता सती परिष्कारं प्रापिता' इति। पर्यालोचनीयंचैतत् तत् विज्ञायते विक्रमादित्यः

कालिदासः प्रवसरसेनश्च समकालिक इति । ऐतिहासिकदृष्ट्या च * विशेषत इदमवगम्यते । अयं प्रवरसेनो द्वितीयः वाकाटकान्वयजः, प्रथमः प्रवरसेनः अस्य प्रपितामहस्य रुद्रसेनस्य पितामहः । अयं ( A. D. 284–344 ) षष्टि संवत्सरं यावद्राज्यधुरमवहत् । ततस्तस्य पौत्रो रुद्रसेनः ( A. D. 344–348 ) राज्यधुरमवहत् । अयमेव गुप्तवंशसमुद्भवेन प्रथमचन्द्रगुप्तस्य पुत्रेण गुप्तविक्रमादित्यस्यास्य पित्रा मगधदेशाधीशेन चक्रवर्तिना युद्धे विनिहतः । तस्यास्यपुत्रः पृथ्वीसेनः, सोऽयं कुन्तलेश्वरः ( 348–375 A. D. ) अष्टाविंशतिवर्षाणि राज्यधुरमवहत् । अस्य पुत्रो रुद्रसेनः ( द्वितीयः ) ( 375–395 A. D. ) विंशतिवर्षाणि राज्यधुरमवहत् । योऽयं विक्रमादित्यस्य पुत्र्याः प्रभावत्याः पतिः । प्रभावतीरुद्रसेनावस्य पितरौ । रुद्रसेने दिवंगते प्रवरसेनस्य-बालभावेन राज्ञी प्रभावती ( 395–415 A. D. ) राज्यपद्मलञ्चकार । अयं च प्रवरसेनो बालभावे मातामहेनावेन विक्रमादित्येनानुवीक्ष्यमाणो विनीयमानश्च विद्यानीतिपथेष्वासीत् इति । तद्युक्तं दुहितृस्नेहातिशयतो दौहित्रे प्रेमातिशयतश्च प्रवरसेनस्यास्य मनोरथं पूरयन् कीर्तिंचास्य संपादयन् कालिदासं प्रवरसेननाम्ना सेतुबन्धकाव्यकरणे न्ययुङ्क्तेति । अन्यच्चेदं गम्यते–प्रवरसेनस्य पितामहः पृथ्वीसेनो विक्रमादित्येऽस्मिन्नन्तर्निगूढवैरोऽपि कालिदासेन विक्रमादित्यादेशात् स्वीकृत-दौत्येन प्रशमितवैरः परं प्रणयमस्मिन् विक्रमादित्ये बबन्धेति । इदं चात्र गमकम्–क्षेमेन्द्रविरचितायामौचित्यचर्चायाम्–'अधिकरणौचित्यं यथा कुन्तलेश्वरदौत्ये कालिदासस्य—

'इह निवसति मेरुःशेखरः क्ष्माधराणा–
मिह विनिहितभाराः सागराः सप्त चान्ये ।
इदमहिपतिभोगस्तम्भविभ्राजमानं
धरणितलमिहैव स्थानमस्मद्विधानाम् ।

अत्र महाराजदूतोऽपि सामन्तास्थाने स्वप्रभुसमुचितगौरवपूजार्हमासनमनासाद्य कार्यवशेन भूमावेवोपविष्टः प्रागल्भ्यगांभीर्येणैवं ब्रूते ' इति । भोजविरचिते शृङ्गारप्रकाशे अष्टमे प्रकाशे–'यथा कालिदासः किं कुन्तलेश्वरः करोतीति विक्रमादित्येन पृष्टः उक्तवान्

असकलहसितत्वात् क्षालितानीव कान्त्या
मुकुलितनयनत्वात् व्यक्तकर्णोत्पलानि ।
पिबति मधुसुगन्धीन्याननानि प्रियाणां
त्वयि विनिहितभारः कुन्तलानामधीशः ॥

इदमेवोहयित्वा विक्रमादित्यः प्राह—

पिबतु मधु सुगन्धीन्याननानि प्रियाणां
मयि विनिहितभारः कुन्तलानामधीशः । ' इति ।

इदमेव पद्यं राजशेखरविरचितायां काव्यमीमांसायामप्यनूद्यते । आभ्यां क्षेमेन्द्रभोजकृतानुवादाभ्यां विक्रमादित्यादेशेन कुन्तलेश्वरप्रवरसेनसन्निधौ कालिदासस्य गमनं समीहितं कार्यं साधयतः कालिदासस्य समयानुसारेण वर्तनं कुन्तलेश्वरविक्रमादित्ययोः प्रणयाधानं च व्यक्तं

* J. B. O. R. S. volume XIX pts. I and II
Reconstructed by Mr. K. P. Jayaswal.

गम्यते । येन प्रणयातिरेकेण पुत्रीदानप्रतिग्रहलक्षणः सम्बन्धविशेषश्च समजनि तयोः । इत्थंच कालिदासस्य समयः कैस्तचतुर्थशतकस्योत्तरार्धः पूर्वार्धस्य प्रथमो भागः पञ्चमस्येति चावसीयते । अयं च विमर्शः वडोदराराजकीयप्राच्यविद्यालये श्रौतपण्डितपदमधिवसद्भिः भीमांसा-शिरोमणिभिः श्री. रामस्वामिशास्त्रिभिः सप्तमे भारतीयप्राच्यविद्यासंमेलने सभायां प्रकटीकृतः । विशेषस्तत्र द्रष्टव्यः । कुन्तलेश्वरदौत्यानुबन्धि यदिदं चरितं क्षेमेन्द्रभोजराजकृतिभ्यां गम्यमानं तत् श्रीयदुगिरियतिराज सम्पत्कुमाररामानुजमुनिभिश्चशृङ्गारप्रकाशप्रस्तावनायां–'इदमन्यदप्रतीत मेतावता महिततममितिवृत्तमुपलभ्यते–इत्यादिना महाकवेरितिवृत्तमित्यन्तेन प्राकाशि । अत्र प्राचीनपथानुसारिणः कतिचन विमर्शकाः केचन

'एकोऽपि जीयते हन्त कालिदासो न केनचित् ।
शृङ्गारे ललितोद्गारे कालिदासत्रयी किमु ॥'

इतीमं राजशेखरकवेः श्लोकं सुभाषितहारावलीसूक्तिमुक्तावल्यादौ समुपलभ्य राजशेखरतः प्राक्त्रयः कालिदासाः कविकुलावतंसभूताः आसन् इति संभावयन्ति । शाकुन्तलादेर्दृश्यप्रबन्धस्य कर्तारं तेषु प्रथमं रघुवंशादेः काव्यस्य कर्तारं द्वितीयं ऋतुसंहारादेः कर्तारं तृतीयं सर्वानेतान् चतुर्थशतकतः प्राक्तनान् वदन्ति । कतिचन षष्ठशतकतः प्राचीनान् वदन्ति । निजनिजपक्षेषु किमपि लिङ्गं च प्रदर्शयन्ति ।

**कुमारदासः**—अयं कविः कुमारइति नाथकुमारः कुमारदासः भट्टकुमार इतिच तत्र तत्र निर्दिश्यते । अयंच सिंहलदेशीयः । विज्ञायते चैतत् 'इति जानकीहरणे महाकाव्ये सिंहलकवे-रातिशयभूतस्य कुमारदासस्य कृता'वित्यनेन समुल्लेखेन ।

'जानकीहरणं कर्तुं रघुवंशे स्थिते सति
कविः कुमारदासो वा रावणो वा यदि क्षमः ॥'

इत्यनेन राजशेखरवचनेन रघुवंशकर्तुः कालिदासात् पश्चात्तन इति विज्ञायते । विज्ञायते च वामनात्प्राक्तन इति । यदयमुदाहरति जानकीहरणस्थं

'सपदिपाङ्क्तिविहङ्गमनामभृत्तनयसंवलितं बहुशालिना ।
विपुलपर्वतवर्षिशितैः शरैः प्लवगसैन्यमुलूकमृता जितम् ॥'

इत्येतत्पद्यं स्वकृतावलङ्कारसूत्रवृत्तौ । वामनश्चायं भवभूतितोऽर्वाचीनः । यदुदाह्रियतेऽनेन भवभूतेः कृतेमहावीरचरितात् 'दोर्दण्डाञ्चितचन्द्रशेखरधनु' रितिपद्यम् । तदष्टमशतकसमुद्भवात् वामनात्प्राक्तनस्यास्य कुमारदासस्य समयः प्रायः सप्तमंकैस्तशतकं स्यात् । क्षेमेन्द्रेणौचित्यचर्चायाम्—

'अयिजहिहिदृढोपगूहनं त्यज नवसंगभीरु वल्लभम् ।
अरुणकरोद्गम एष वर्तते । वरतनु संप्रवदन्ति कुक्कुटाः ॥

इतीदं पद्यं नाथकुमारस्येति नामनिर्देशपूर्वकमुदाह्रियते । महाभाष्ये पतञ्जलिना 'व्यक्तायां-वाचि' इति सूत्रव्याख्याने 'वरतनुसंप्रवदन्ति कुक्कुटाः' इत्येकः पादः समुदाहृतः । नचैतावता कुमारदासस्य भाष्यकारतः प्राक्तनता निश्चेतुं शक्येत । पादैक्यं कृतिभेदेऽपिहि समुपलभ्यते । यावन्न बाधकं लिङ्गं तावत् कृतिभेदोऽपि नावधार्येत । पद्यमिदं सरस्वतीकण्ठाभरणे भोजेनाप्युदाहृतम् । जानकी-

हरणस्य श्लोका उणादिसूत्रवृत्तावुज्वलदत्तेन बहवः समुदाहृताः । विमर्शेऽस्मिन् विशेषतो जिज्ञासमानैः कवीन्द्रवचनसमुच्चयप्रस्तावनायां सुभाषितावलीप्रस्तावनायां च दृष्टिर्देया ।

**कुमुदचन्द्रः**—अयमार्हतमतानुयायी दिगम्बरः प्रथितो वादाहवेषु विजितानेकश्वेताम्बराचार्यो गुर्जरेश्वरस्य सिद्धराजस्य जयसिंहापरनाम्नो मातामहगुरुः सिद्धराजसभायां श्वेताम्बरसमयानुयायिनः सुप्रथितस्य हेमचन्द्राचार्यस्य कुमुदचन्द्रस्य च मिथो विजिगीषया वादः समभूत् । तदा श्रीपालकविराजो हेमचन्द्राचार्यपक्षमनुप्रविश्य कुमुदचन्द्रेण सह वादमकरोत् । परास्तश्च हेमचन्द्राचार्येण कुमुदचन्द्र इतीदं वृत्तं यशश्चन्द्रकृते मुद्रितकुमुदचन्द्रनाटके प्रभावकचरिते च निगद्यते । सिद्धराजस्य हेमचन्द्राचार्यस्य श्रीपालकविराजस्य च समयः क्रैस्तद्वादशशतकपूर्वार्धम् । स एवास्य कुमुदचन्द्रस्य समयः ।

**कुलशेखरः**—अयमाश्चर्यमञ्जर्याः कर्तुः काश्मीरात् कुलशेखरवर्मणोऽन्यः केरलदेशाधीशः । एतद्विरचिताया मुकुन्दमालाया अन्ते श्लोकोऽयम्—

यस्य प्रियौ श्रुतिधरौ कविलोक [ रविलोक ] वीरौ
मित्रे द्विजन्मवरपद्मशरा [ पारशवा ] वभूताम् ।
तेनाम्बुजाक्षचरणाम्बुजषट्पदेन
राज्ञा कृता कृतिरियं कुलशेखरेण । ' इति ।

अनेन श्लोकेनायं मुकुन्दमालायाः कर्ता कुलशेखरः पार्थिवश्चेति विज्ञायते । आसीत् पुरा क्रैस्तेऽष्टमे शतके वैष्णवाग्रेसरः परमभक्तो विरक्तश्च राज्यलक्ष्म्याः, यमद्यापि वैष्णवाः प्रतिदिनमनुस्मरन्ति पूजयन्ति चार्चारूपेण प्रतिष्ठापितं तत्र तत्र देवालयेषु । सोऽयमित्येके । नवमशतकसमुद्भवः सोऽयमिति च केचित् । नवमशतकसमुद्भवस्ततोऽन्यः केरलाधीशः कुलशेखरोऽस्या मुकुन्दमालायाः कर्ता इति च परे । ' यस्य प्रियौ ' इत्यस्मिन् श्लोके प्रथमपादे रविलोकवीरौ इति, द्वितीयपादे ' द्विजन्मवर पारशवौ ' इति च केरलीयः पाठभेदः । रविर्नाम कश्चित् द्विजवरः, ( रवेः पुत्रः वासुदेवः ) लोकवीर इति कश्चित् पारशवः ( वारियर इति कश्चन जातिविशेषः केरलेषु प्रथितः ) तत्समुद्भवः तावेतौ यस्य मित्रे इति तदर्थः ।

युधिष्ठिरविजयस्य त्रिपुरदहनस्य च कर्ता सोऽयं रविभूरिति च वदन्ति । *

**कृष्णमिश्रः**—कविरयं प्रबोधचन्द्रोदयाख्यस्य नाटकस्य कर्ता । औपनिषदेऽप्यद्वैतविज्ञाने काव्यरसास्वादव्यामुग्धानामपि रुचिं संपादयन् औपनिषदमद्वितीयात्मावबोधं तदुपकरणं विवेकादिकं च दृश्यप्रबन्धमुखेन प्रकाशितवान् । स एष कविः गोपालकीर्तिवर्मभ्यामात्मानमाराद्भिज्ञापयति । तथाच तत्र प्रस्तावनायाम्—

' अस्ति प्रत्यर्थिपृथ्वीपतिबलविपुलारण्यमूर्च्छत्प्रताप-
ज्योतिर्ज्वालावलीशत्रिभुवनविवरो विश्वविश्रान्तकीर्तिः ।

---

*Vaishnau Bhapta Kal Vichar ( first volume. ) By Mr. Mu. Raghavaingar. Ramnathpuram Madras University Tamil section Head pandit.

**गोपालो** भूमिपालान् प्रसभमसिलतामात्रमित्रेण जित्वा
साम्राज्ये **कीर्तिवर्मा** नरपतितिलको येन भूयोऽभ्यषेचि ।

'येन ××× **कर्ण**से ना सागरं निर्मथ्य मधुमथनेनेव क्षीरसमुद्र मासादिता समरविजयलक्ष्मीः ।

' विवेकेनेव निर्जित्य **कर्णं** मोहमिवोर्जितम् ।
श्रीकीर्तिवर्मनृपतेर्बोधस्येवोदयः कृतः ॥ '

'आदिष्टोऽस्मि × × × श्रीमता गोपालेन यथा खल्वस्य सुहृदोराज्ञः कीर्तिवर्मदेवस्य दिग्विजयव्यापारान्तरितपरब्रह्मानन्दरसैरस्मामिः × × × अतिवाहिता दिवसाः। इदानीं तु कृतकृत्या वयम् । × × × × तद्वयं शान्तिरसप्रयोगाभिनयेनात्मानं विनोदयितुमिच्छामः । ततो यत्पूर्वमस्मद्गुरुभिस्तत्रभवद्भिः श्रीकृष्णमिश्रैः प्रबोधचन्द्रोदयनाम नाटकं निर्माय भवतः समर्पितमासीत् तदद्य राज्ञः श्रीकीर्तिवर्मणः पुरस्तादभिनेतव्यं भवता । इति ।

अनेन विज्ञायते—गोपालकीर्तिवर्मणोर्मैत्री कीर्तिवर्मणोराज्यलक्ष्मीप्रतिष्ठायां गोपालपराक्रमप्रकर्षस्य कारणता गोपालस्य कृष्णमिश्रशिष्यताच । गम्यते चैषां समकालता गोपालसमकालताच कृष्णमिश्रस्य । इदं चरितमवलम्ब्य कृष्णमिश्रस्य समयः एकादशं क्रैस्तं शतकं गण्यते । अपरेच द्वादशं शतकं मन्यन्ते । सदुक्ति कर्णामृतप्रस्तावनायां सुभाषितावलीप्रस्तावनायांच दृष्टिर्देया ।

**केटसः**—केशट इति स्थाने केटस इत्ययमत्र निर्देशः । अस्यामेव सूक्तिमुक्तावल्यां समुदाहृतोऽयं ' विस्तारो यदि नेदृशः ' इति श्लोकः सदुक्तिकर्णामृते केशट इति नाम्ना समुपलक्ष्यते । तस्यास्य कवेरन्येऽपि श्लोकाः सदुक्तिकर्णामृते समुदाह्रियन्ते ।

' अब्जंत्वब्जमथाब्जभूस्तत इतो ब्रह्माण्डमण्डादभूत् '
' शैत्यं नाम गुणास्तवैव सहजः स्वाभाविकी स्वच्छता '

इतीदं श्लोकद्वयं केशटनाम्ना सदुक्तिकर्णामृते समुपलक्ष्यमाणमस्यां सूक्तिमुक्तावल्यां अविज्ञातकर्तृनामकं कस्यचिदिति निर्दिश्यते । कविरयमभिनन्दात्प्राचीन इति विज्ञायते । यदेनमभिनन्दः समुपवर्णयति—

उन्नीतोभवभूतिना प्रतिपदं बाणे गते यःपुरा
यश्चीर्णः कमलायुधेन सततं येनागमत् केशटः । ' इति ( सदु. ४–२६–५ )

वसुकल्पश्चैनमभिवर्णयति—

'बाणः प्राणिति केशटः स्फुटमसौ जागर्ति योगेश्वरः
प्रत्युज्जीवति राजशेखरगिरां सौरभ्यमुन्मीलति । इति ( सदु. ३–२६–५ ).

कर्पूरमञ्जर्याकोटिस इति ( अं. १ ) निर्दिश्यमानः कविरयमेव भवितुर्हति । लेशतोऽक्षरवैपरित्येन । केसटः केटसः कोटिस इति त्रिविधोप्येकस्मिन् समाव्यते निर्देशः ।

तदयं नवमशतकतो नार्वाचीन इत्योतावदवगम्यते ।

---

1 Subhashitavali, Introduction ( Peterson. )
Saduktikarnāmirta. Introduction By Hardutta Sharma, M.A., Ph.D.

**क्षेमेन्द्रः**—स एष काश्मीरः कविसार्वभौमः । पिताऽस्य **प्रकाशेन्द्रः** । आह च भारतमञ्जर्याः समाप्तौ—

'काश्मीरकोगुणाधारः **प्रकाशेन्द्र**ाभिधोऽभवत् ।
नानार्थिसार्थसङ्कल्पपूरणे कल्पपादपः ॥
संपूर्णदानसन्तुष्टाः प्राहुस्तं ब्राह्मणाः सदा ।
इन्द्रएवास्ति किं त्वेकः प्रकाशस्ते गुणोऽधिकः ॥'
**क्षेमेन्द्र**नामा तनयस्तस्य विद्वत्सपर्यया ।
प्रयातः कविगोष्ठीषु नामग्रहणयोग्यताम्'॥ इति ।

सोऽयं कविपुङ्गवः **अभिनवगुप्ताचार्यात्** प्राप्तसाहित्यविद्यः भागवताचार्य **श्रीसोमपादा**त्प्राप्तभागवतदीक्ष इति च गम्यते । यदयं तत्रैवेदमाह—

'आचार्यशेखरमणेर्विद्याविवृतिकारिणः ।
श्रुत्वाऽभिनवगुप्ताख्यात्साहित्यं बोधवारिधेः ॥
श्रीमद्भागवताचार्यसोमपादाब्जरेणुभिः ।
धन्यतां यः परां प्राप्तो नारायणपरायणः ॥' इति ।

व्यासदास इत्यपरं चास्य नाम । आह चौचित्यचर्चायाअन्ते—

'तस्यात्मजः सर्वमनीषिशिष्यः श्रीव्यासदासापरपुण्यनामा ।
क्षेमेन्द्र इत्यक्षयकाव्यकीर्तिश्चक्रे नवौचित्य विचारचर्चाम्'॥ इति ।

मित्रं चास्य श्रीरत्नसिंह इति विज्ञायते । आह च तत्रैव—

'श्रीरत्नसिंहे सुहृदि प्रयाते शार्वं पुरं श्रीविजयेशराज्ञि ।
तदात्मजस्योदयसिंहनाम्नः कृते कृतस्तेन गिरां विचारः ॥' इति ।

अयं महाकविः काश्मीरान् प्रशासत्यनन्तमहाराजे तत्तनये च कलशभूभृति आसीत् । आह च तत्रैव स्वयम्—

'यस्यासिः परिवारकृत्त्रिभुवनप्रख्यातशीलश्रुतेः
सर्वस्यावनतेन येन नितरां प्राप्ता विशेषोन्नतिः ।
आशाः शीतलतां नयान्त्यविरतं यस्य प्रतापानला-
त्तस्य **श्रीमदनन्तराजनृ**पतेः काले किलायं कृतः ॥ ( औचित्यचर्चा )
'एकाधिकेऽब्दे विहितः चत्वारिंशे स कार्तिके ।
राज्ये **कलश**भूभर्तुः काश्मीरेष्वच्युतस्तवः'॥

इति च दशावतारचरितान्ते । अयं च कलशः अनन्तस्यपुत्रःहर्षदेवस्य पिता । तस्यास्य कवेः समय एकादशं कैस्तशतकम् ।

कृतयश्चास्य सहृदयहृदयाह्लादकाः काव्यरसामृतैकपरायणानामादरणीयतमा भारतमञ्जरी रामायणमञ्जरी दशावतारचरित कविकण्ठाभरणसुवृत्ततिलकौचित्यविचारचर्चा कलाविलासदर्पालनप्रभृतयः बह्व्यो वर्तन्ते ।

गणपति:—कवेरस्य देशकालनिर्णये, नैकमपि लिङ्गमुपलभामहे । राजशेखरस्तु महामोदाख्यस्य निबन्धस्य कर्तारमेनमवगमयति । तथाचास्य श्लोकः—

'अथो गणपतिं वन्दे महामोदविधायिनम् ।
विद्याधरगणैर्यस्य पूज्यते कण्ठगर्जितम् ॥ इति ( सूक्तिमु. प. ४५ )

'वन्दे' इति निर्देशः कवेरस्य कमपि पूज्यभावमवगमयति । विद्याधरगणैरितिश्लेषगर्भो निर्देशः कवेरस्य गान्धर्वविद्यायामपि वैदुष्यं ध्वनयति ।

गोपादित्यः—अयं काश्मीरमहाराजः, यमेनं बिल्हणो विक्रमाङ्कचरिते निजान्वयमहत्तराणां पूर्वपुरुषाणां काश्मीरेषु प्रतिष्ठापकं वर्णयति—

'कर्तुं कीर्तिप्रणयिकुशलाः कौशिकं गोत्रमुच्चैः
तत्र ब्रह्मप्रवणमनसो ब्राह्मणाः केचिदासन् ।
यान् काश्मीरक्षितितिलकतां मध्यदेशावतंसान्
गोपादित्यक्षितिपतिरसौ पावनानानिनाय ॥' इति ( स. १८ )

तदयं दशमशतकतो नार्वाचीनः । राजतरङ्गिण्यां च दृष्टिर्विधेया ( १. ३४४ )

**गोभटः**—अस्यां सूक्तिमुक्तावल्ल्यां समुदाहृतेभ्यः श्लोकोभ्योऽप्यपरे द्वित्राः श्लोकाः कवेरस्य श्रीधरदासविरचिते सदुक्तिकर्णामृते समुपलभ्यन्ते । तदयं श्रीधरदासान्नार्वाचीन इत्येतावत्तु विज्ञायते । सदुक्तिकर्णामृतप्रस्तावनायां गोभटस्य पद्यानि सूक्तिमुक्तावल्ल्याः समुद्धृत्य प्रतीकग्रहणेन कानिचित् ज्ञाप्यन्ते, तेषु 'उपकारमसंप्राप्य' इत्येषः श्लोकः अस्माभिरस्याः सूक्तिमुक्तावल्ल्याः प्रकाशनाय समाहृतेषु पुस्तकेषु नैवोपलब्धः ।

**गोयिधोयिकविराजौ**—द्विवचनान्तोऽयं निर्देशःकवी द्वावुपस्थायपति । श्रीमद्भिर्भण्डरकरमहाशयैस्तु 'गोयिधोयिकविराजे' त्येव निर्दिश्यते । सदुक्तिकर्णामृतप्रस्तावनायां श्रीमान् हरदत्तशर्मा ( पि. एच्. डी. ) पवनदूतकर्तारं धोयीकं वङ्गदेशाधिपश्रीलक्ष्मणसेनसमकालिकं प्रस्तुवन् 'गोयिघोयिकाविराजे' त्येवनाम निर्देशमनुवदन् 'निजनयनप्रतिबिम्बै' रितिश्लोकं सूक्तिमुक्तावलीस्थमनुवदति । पवनदूत प्रस्तावनायां विशेषो द्रष्टव्य* इति च वदति । धोयीकविरेव धोयीक इतिच निर्दिश्यते—

'गोवर्धनश्च शरणो जयदेव उमापतिः ।
**कविराजश्च** रत्नानि समितौ लक्ष्मणस्य च ॥'

इत्यस्मिन् श्लोके 'कविराज' इतिनिर्दिश्यमानः सोऽयं धोयीकविरेवेति व्यक्तमेतत् गीतगोविन्दे—

'वाचः पल्लवयत्युमापतिधरः सन्दर्भशुद्धिं गिरां
जानीते जयदेव एव शरणः श्लाघ्यो दुरूहद्रुते ।
शृङ्गारोत्तरसत्प्रमेयरचनैराचार्यगोवर्धन.
स्पर्धीकोऽपि न, विश्रुतः श्रुतधरो धोयी कविक्ष्मापतिः ॥'

---

* The पवनदूत has been re-edited in the Sanskrit Sahitya Parisat Series, by Mr. Chintaharan Chakravarti. See Introduction.

अत्र धोयी कविक्ष्मापतिः' इत्ययं निर्देशः कविराजसंज्ञकं धोयीकं प्रत्यभिज्ञापयति । अयमेव गोयिधोयीति निर्देशेनापि क्वचित् ज्ञाप्यते । समयश्च लक्ष्मणसेनस्येतिव्यक्तम् ( 1100 शक. 1178 A. D. )

गोवर्धनाचार्यः—कविरयं वङ्गदेशाधिपस्य लक्ष्मणसेनस्य समये आसीत् । विज्ञायते चैतदनेन श्लोकेन—

'गोवर्धनश्च शरणो जयदेव उमापतिः
कविराजश्च रत्नानि समितौ लक्ष्मणस्य च' ॥ इति ।

कविरयं स्वकृतावार्यासप्तशत्यां लक्ष्मणसेनमुपवर्णयति—

'सकलकलाः कल्पयितुं प्रभुः प्रबन्धस्य कुमुदबन्धोश्च ।
सेनकुलतिलकभूपतिरेको राकाप्रदोषश्च ॥ इति ।

सेनकुलतिलको लक्ष्मणसेनः । पिताचास्य कवेर्नीलाम्बरः । कविरयं तातं ग्रन्थादौ प्रणमन् नामच निर्दिशति—

'यं गणयन्ति गुरोरनु यस्यास्ते धर्मकर्म सङ्कुचितम् ।
कविमहमुशनसमिव तं तातं नीलाम्बरं वन्दे ।' इति ।

लक्ष्मणसेनस्य समयः (1178. A. D.)

**चन्द्रकः**—कविरयं नाट्यप्रबन्धस्य कर्ता काश्मीरमहाराजस्य तुंजीनस्य समये आसीत् । आह च कल्हणो राजतरङ्गिण्यां द्वितीये तरङ्गे—

नाट्यं सर्वजनप्रेक्ष्यं यश्चक्रे स महाकविः ।
द्वैपायनमुनेरंशस्तत्काले चन्द्रकोऽभवत् ॥' इति ।

अस्यैव चन्द्रकविरित्यपि क्वचिन्निर्देशः । तुञ्जीनस्य राज्यसमयं कैस्तचतुर्थशतकं मन्यते (श्री) कनिंङ्गहाम् । अपरे तु द्वितीयं शतकम् । अस्य कवेः कृतेः केचन श्लोकाः क्षेमेन्द्रेण औचित्यचर्चायामुदाह्रियन्ते ।

**चन्द्रगोमी**—सुभाषितावल्यां वल्लभदेवविरचितायां चन्द्रगोपीति कस्यचित् कवेर्नाम निर्दिश्यते । अयमेव चन्द्रगोमीति अस्यां सूक्तिमुक्तावल्यां निर्दिश्यते उतान्यएवेति न विज्ञायते । एकाक्षरामात्रे भेदात् स एवायं स्यादिति सुभाषितावलीप्रस्तावनाकारस्याशयः । व्याकरणस्य कर्ता चन्द्रः किं स्यादेष इति च तेषामभ्यूहः ।

**चन्द्रसूरिः**—विक्रमद्वादश शताब्द्यां चन्द्रसूरिनामानो बहव आसन् । तत्रैकः सूक्ष्मार्थविचारापरनामकस्य, सार्धशतकस्य चुर्णिकारो मुनिचन्द्रसूरिः, अपरश्च यशोदेवसूरेः पिण्डविशुद्धिप्रकरण वृत्तिकृतो गुरुः श्रीचन्द्रसूरिः, न्यायप्रवेशव्याख्याकारश्चापरश्चन्द्रसूरिः, सर्वे एतेपि आर्हतनयनिष्णाताः प्रख्याताः । तेष्वायमन्यतमो वा अपरो वा न विज्ञायते ।

**चित्तपः**—( छित्तपः ) अयं महाकविर्भोजमहाराजस्य सभायामासीत् । यदयं स्तौति तम्—

'स्वामिन्नम्बुजनाथ धूर्जटिशिरश्चूडामणे चन्द्रमः
पादौ वां प्रणतोऽस्मि साधु वदतं क्षत्रप्रसूती युवाम् ।

राजा यद्युपसेवितांघ्रिरखिलक्ष्मापालचूडाशतै-
रासीदस्तिभविष्यति क्षितितले श्रीभोजदेवोपमः ॥' सदु. ३. १.१
'वाल्मीकेः कतमोऽसि कस्त्वमथवा व्यासस्य येनैषभोः
श्लाघ्यः स्यात्तव भोजभूपतिभुजस्तम्भस्तुतावुद्यमः । ......
पङ्गुः पर्वतमारुरुक्षसि विधुस्पर्शं करेणेहसे
दोर्भ्यां सागरमुत्तितीर्षसि यदि ब्रूमः किमत्रोत्तरम् ॥ सदु. ३.८.१
'पर्यङ्को राजलक्ष्म्याः हरितमणिमयः पौरुषाब्धेस्तरंगो
×××× समिति विजयते मालवाखण्डलस्य ॥' सदु. ३.३०.१ इति ।

भोजस्य समयस्तु क्रैस्तदशमशतकस्यान्तिम एकादशशतकस्यादिमो भागः । अस्य कवेः श्लोका अपरेऽपि सदुक्तिकर्णामृते समुदाह्रियन्ते ।

**जयगुप्तः**—अस्य कवेःश्लोकमपरं च समुदाहरन् सुभाषितावल्याः कर्ता वल्लभदेवोऽप्येनं प्रत्यभिज्ञापयति । नेतोऽन्यत् विज्ञायते ।

**जयदेवः**—प्रसन्नराघवाख्यस्य नाटकस्य कर्ता जयदेवोऽयं कविः वङ्गदेशाधीशस्य लक्ष्मण सेनस्य सभायामासीदित्येतत् सुव्यक्तम्—

'गोवर्धनश्च शरणो जयदेव उमापतिः ।
कविराजश्च रत्नानि समितौ लक्ष्मणस्य च ॥' इति ।

स्तौति च जयदेवो लक्ष्मणसेनम्—

'लक्ष्मीकेलिभुजङ्ग जङ्गम हरे सङ्कल्पाकल्पद्रुम
श्रेयः साधक ××× वङ्गप्रिय । गौडेन्द्र ××
प्रत्यर्थिक्षितिपाल ×× दृष्टोऽसि तुष्टा वयम् ।' सदु. ३-११-५.इति ।(1178 A. D.

**जयमाधवः**—अस्य कृतेः कतिचन श्लोकाः सुभाषितावल्यां समुदाह्रियन्ते । परिशील्य-मनाः कस्यचिन्महाकाव्यस्य कर्तारमेनमवगमयन्ति । यत्कुसुमोच्चय–सूर्यास्तमय–पानकेलि प्रभृतीनि वर्ण्यन्ते । इदं हि महाकाव्यलक्षणम् । तत्रकुसुमोच्चयवर्णनम्—

'उच्चित्य प्रथममवस्थितं मृगाक्षी
पुष्पौघं श्रितविटपं ग्रहीतुकामा ।
आरोढुं चरणमदादशोकयष्टे
रामूलं तनुरपि तेन पुष्पिताऽसौ ॥
अत्रास्मिन्सुरत ( तनु ) लतागृहेऽस्तिरम्यं
मालत्याः कुसुममनुच्चितं परेण ।
इत्युक्त्वा मृदुकरपल्लवे गृहीत्वा
मुग्धाक्षीं रहसि निनाय कोऽपि धूर्तः ॥ ×( सुभा. १८६५-१८६६ )

द्वयोः श्लोकयोरपि वृत्तैक्यं च । अथ सूर्यास्तमयवर्णनम्—

'अंशुमानपि विपाकपिशङ्गं
रूपमाप परितो दिवसान्ते ।
कःपरोऽत्र न विकारमुपेयात्
......... परिवेल्लित मूर्तिः ।
प्रोज्झ्य मित्रमपवर्जितदोषं
नाशयप्रकटनं मम युक्तम् ।
नूनमेनमवमृश्य तदानीं
मीलितं हृदयमम्बुरुहेण ।
मित्रमुज्झितवताऽऽलि निराशं
स्वाशयाद्विदितवैभवहीनम् ।
ईदृशेन महता नभसाऽन्तः
शून्यता प्रकटिताऽतिशयेन ॥ ( सुभा. १८९४-१८९६ )

इहापि वृत्तैक्यम् । अथ पानकेलिः—

मूर्तिमन्तमिव रागरसौघं
ते परस्परसमर्पितवक्त्राः ।
आननासवमिषेण तदानी-
माक्षिपन्त हृदयेषु युवानः ।
अर्धपीतमधुरा मणिपारी
शोभतां कथमितीव तरुण्या ।
चुम्बितैरधिकपाटलभासा
पूरिताधरमयूखभरेण ॥' ( सुभा. २०१६-२०१७ )

तदेव वृत्तमनुवर्तते । वर्षावर्णनम्—

अथमनसिजदिग्जयाभिशंसी
जलधरदुन्दुभिराततान शब्दम् ।
तदनु तदनुजीविभिः कदम्बैः
कवचितमुन्मदषट्पदच्छलेन ॥

अथेत्ययं निर्देशः पूर्ववृत्तान्वयं ज्ञापयति ।

अयं च कवेस्तस्य काव्यमारभमाणस्य श्लोकः—

'किं तेन किल काव्येन मृग्यमानस्य यस्य ताः ।
उदधेरिव नायान्ति रसामृतपरम्पराः ॥' इति ( सुभा. १३२ )

प्रायः कविभिः काव्यारम्भे (प्रथमसर्गे) अनुष्टुप्वृत्तमाद्रियते । तैरेतैर्लिङ्गैःकस्यचिन्महाकाव्यस्य कर्तारमेनं संभावयामः ।

तस्यास्य द्वौश्लोकौ श्रीधरदासेन सदुक्तिकर्णामृते समुदाह्रियेते । तदयं श्रीधरदासात्प्राचीन इत्येतत्तु व्यक्तम् ।

**जयवर्धनः**—काश्मीरोऽयं । कविरयमेव भागवतजयवर्धन इति च कीर्त्यते । अस्य कवेरेकः श्लोकः सदुक्तिकर्णामृतेऽपि समुपलभ्यते । तदयं श्रीधरदासान्नार्वाचीनः । नान्यद्विज्ञायते ।

**जयसिंहदेवः**—अयं गूर्जराधीशः । अयमेव सिद्धराज इति सिद्धचक्रवर्तीत्यपि ख्यातः । अस्य सभायां श्रीपालनामा कविरासीत् । अस्य राज्यसमयः ( विक्रमसंव ) ११५०–१२००

**जलमानुषीरुद्रः**—अस्यां सूक्तिमुक्तावल्यामेतन्नाम्ना समुपलक्ष्यमाणः 'एतस्माज्जलधे' रित्ययं श्लोकः क्षेमेन्द्रेण औचित्यचर्यायां मालवरुद्रस्येति निर्दिश्यते–'अपादानौचित्यं यथा मालवरुद्रस्य–एतस्माज्जलधेरिति' । तथा तेनैव तत्रैव 'अभिनववधूरोषस्वादुः' इत्ययं श्लोकः यथावा मालवरुद्रस्येति कर्तृनामनिर्देशपूर्वकमुदाह्रियते । अयंच श्लोकः काव्यमीमांसायां राजशेखरेणापि समुदाह्रियते । तदयं राजशेखरात्प्राचीन इति व्यक्तम् । अस्यैव मालवरुद्रस्य जलमानुषीरुद्र इति साङ्केतिकं नामेति प्रतिभाति । निमित्तमेतत्–यदयं 'एतस्माज्जलधे'रित्यस्य श्लोकस्य चतुर्थे पादे 'प्राप्यैकां जलमानुषीं त्रिभुवने श्रीमानभूदच्युत' इति लक्ष्मीं जलमानुषीत्वेनोत्प्रेक्षते तदिदं वैचित्र्यमभिप्रेत्य जलमानुषीरुद्रइति साङ्केतिकंनाम प्रवृत्तमिति ।

**जितनागः**—जीवनागादनन्योऽयम्, सुभाषितावल्यां जीवनागस्य नाम्ना समुपलक्ष्यमाणेष्वन्यतमः 'विकचकुमुदै' रित्ययं श्लोकः अस्यां सूक्तिमुक्तावल्यां 'कुमुदशबलैः' इति भिन्नपाठः जितनागनाम्ना समुपलक्ष्यते । यस्त्वस्यां जीवनागस्येति समुलक्ष्यते 'सख्यस्तानि' इत्ययं श्लोकः, स चामरुकस्य । नास्य कालदेशादि प्रत्यमिज्ञायते ।

**झलंझलवासुदेवः**—वासुदेव इत्येवास्य नाम, अस्यायं 'प्रहरविरताविति' श्लोकः 'सबाष्पझलंझलैरितिपरिसमाप्यते । झलंझलैरित्यस्मिन् प्रयोगे दृष्टिं निदधता केनचित् तदेवेदं पदं नाम्नोऽस्योपपदीकृतम् । वासुदेवस्यास्य बहवः श्लोकाः सुभाषितावल्यां सदुक्तिकर्णामृते च समुपलभ्यन्ते । तदयं श्रीधरदासान् नार्वाचीनः ।

**डिम्बोकः**—अयमेव तत्रतत्र बिम्भोकः हिम्बोकः इत्यपि निर्दिश्यते । अस्यकवेः श्लोकाः सदुक्ति कर्णामृते कवीन्द्रवचनसमुच्चये च समुपलभ्यन्ते ।

'जाने विक्रमवर्धन त्वयि धनं विश्राणयत्यर्थिनां
भावी शोण इवोपलैरुपचितो रत्नैरगाधोऽम्बुधिः ।
उत्पश्यामि च रोहणैर्मणिभरैराध्मायमानोदरः
पाकोत्पीडितदाडिमीफलदशां कैश्चिद्दिनैर्यास्यति ॥'

श्लोकोऽयं सदुक्तिकर्णामृते (३–१८–३) डिम्बोकस्य नाम्ना समुपलक्ष्यते । अनेन विज्ञायते कविरयं विक्रमवर्धनस्य राज्ञः सभायामासीदिति । विमृशत विक्रमवर्धनस्य समयदेशौ ।

**त्रिलोचनः**—कविरयं पार्थविजयस्य कर्ता । अनुवर्णयाति चैनं राजशेखरः—

'कर्तुं त्रिलोचनादन्यो न पार्थविजयं क्षमः ।
तदर्थः शक्यते द्रष्टुं लोचनद्वयिभिः कथमः ॥' इति ( सूक्ति. प. ४५ )

**त्रिविक्रमः**—अयंकविर्नलचम्पूप्रबन्धस्य कर्ता । कवेरस्य श्लोकमनुवदति नमिसाधुः काव्यालङ्कारटीकायाम् । टीकाकारश्चायं कैस्तैकादशशतकोत्तरार्धे आसीत् । ज्ञापयतिचायं स्वसमयम्—

'पञ्चविंशतिसंयुक्तैरेकादशसमाशतैः । विक्रमात् समतिक्रान्तैः प्रावृषीदं विनिर्मितम्' इति। टीकासमाप्तौ।

**दण्डी**—काव्यादर्शस्य दशकुमारचरितादेश्च कर्ता सुप्रथितः। अस्य महाकवेः प्रबन्धान् श्लाघते राजशेखरः—

'त्रयोऽग्नयस्त्रयो देवास्त्रयो वेदास्त्रयो गुणाः।
त्रयो दण्डिप्रबन्धाश्च त्रिषु लोकेषु विश्रुताः॥ इति (सूक्ति. प. ४५)

समयं चास्य शालीवाहनस्य पञ्चमशताब्दीं केचन मन्यन्ते। क्रैस्तसप्तमशतकप्रथमपादं परे।

**दामोदर गुप्तः**—महाकविरयं कुट्टिनीमतस्य कर्ता काश्मीरमहाराजस्य जयापीडस्य मन्त्रिप्रवर आसीत्। तथाच राजतरङ्गिण्याम्—

'सदामोदरगुप्ताख्यं कुट्टनीमतकारिणम्।
कविं कविं कलिरिव धुर्यं धीसचिवं व्यधात्। इति।

जयापीडमहाराजस्य राज्यसमयस्तु क्रैस्ताष्टमशतकस्योत्तरार्धम्। (७५५-७८६ A. D.) अयं च महीपतिः स्वयमपि समधिगतविद्यः पण्डितप्रवर आसीत्। तथाच तत्रैव—

'क्षीराभिधात् शब्दविद्योपाध्यायात् संभृतश्रुतः।
बुधैः सह ययौ वृद्धिं स जयापीडपण्डितः॥' इति

अपरे च बहवः कवयः पण्डिताश्चास्य महाराजस्य सभायामासन्। तथा च तत्रैव—

'अवस्थावेदकास्तत्र गृहीताः पृथिवीभुजा।
आर्द्रान्तःकरणैः श्लोकाः स्मर्यन्तेऽद्यापि सूरिभिः॥'

'विद्वान् दीनारलक्षेण प्रत्यहं कृतवेतनः।
भट्टोऽभूदुद्भटस्तस्य भूमीभर्तुः सभापतिः॥'

'मनोरथः शङ्खदत्तश्चटकः सन्धिमांस्तथा।
बभूवुः कवयस्तस्य वामनाद्याश्च मन्त्रिणः॥' इति॥

**दीपकः**—अस्य कवेः केचन श्लोकाः क्षेमेन्द्रकृतावौचित्यचर्चायां। समुपलभ्यन्ते।

**दुर्लभराजः**—अयं सामुद्रिकतिलकस्य कर्ता प्राग्वाटाख्यवंशसंभवः चाहिलस्य नप्ता श्रीपालराजस्य पौत्रः नृसिंहस्य पुत्रः। कविरयं सामुद्रिकतिलकस्य समाप्तौ स्वयमेवमाह—

'अत्रास्ति कोऽपि वंशः प्राग्वाटाख्यस्त्रिलोकविख्यातः।
आसीत् तत्र विचित्र श्रीमच्चाहिलसंज्ञया जातः॥
नृपसंपदि वृद्धायामालंबनयष्टिरभवद्यः।
व्ययकरणपदामात्यो नृपतेः श्रीभीमदेवस्य॥
समजनि तदङ्गजन्मा प्रथितः श्रीपालराज इतिनाम्ना।
प्रतिपक्षद्विजसिंहः [ नरसिंहाख्यः ] सुतस्तस्य॥
श्रीमान् दुर्लभराजः तदपत्यं बुद्धिधाम सुकविरयम्।
यंश्रीकुमारपालो महत्तमं क्षितिपतिः कृतवान्॥'
'तेनोपज्ञातमिदं पुरुषस्त्रीलक्षणं तदनु××कविना।' इति।

विज्ञायते चानेन कुमारपाल समकालिकोऽयममिति। कुमारपालस्य समयस्तु क्रैस्तं द्वादशशतकम्

**देवगुप्तः**—हरिगुप्तशिष्योयं देवगुप्तः । अयंच महाकविस्त्रिपुरुषस्य कर्तेति च उद्योतन सूरिविराचितकुवलयमालातोऽवगम्यते । उद्योतनसूरिश्च वैक्रमे नवमे शतके आसीत् ।

**देवबोधिः**—अयं महाकविः सत्यव्रतरुक्माङ्गदाख्यस्य नाटकस्य कर्ता । नाटकेऽस्मिन् प्रस्तावनायां 'परमहंसपरिव्राजकाचार्य 'देवबोधियमिन इति आत्मानं वर्णयति । इदंच पद्यं प्रत्यभिज्ञापयत्येनम्—

'यद्योगः परविग्रहे निज इव स्वेच्छाप्रवेशावधि-
र्यध्द्यानं व्यपनिद्रचिन्मयरसज्योतिःप्रबन्धावधिः ।
यद्वाग्बन्धघनोदयो रसनदीकल्लोललीलावधिः
तस्यास्मिन् यतिदेवबोधियमिनः कोवा गुणस्यावधिः ॥' इति । सूक्ति ४७

आख्यायिका चेयं श्रूयते 'एकदा देवबोधिनामा कश्चित्भागवतमतानुयायी कविवरः अणहिल्लपुरं गतः, तदा एनं द्रष्टुं राजा श्रीपालेन सह ययौ । तयोश्च तदा संवादः समभूत्' इति । अतोऽयं सिद्धराजसमकालिक इति विज्ञातते ।

**धनञ्जयः**—दशरूपकस्य प्रणेता धनञ्जयो मुञ्जस्य सभायामासीदेकः । अपरश्च द्विःसन्धानाख्यस्यकाव्यस्य कर्ता । यं राजशेखरः श्रीपते

द्विःसन्धाने निपुणतां सतांचक्रे धनञ्जयः
यया जातं फलं तस्य सतांचक्रे धनंजयः । इति । सू. ४६

अन्यश्च विषापहरणादिस्तोत्रप्रणेता । तेषु कोऽयमिति न निर्धारयितुं शक्यते ।

**धनपालः**—कविरयं काश्यपगोत्रः सर्वदेवस्य पुत्रः । तिलकमञ्जर्याः कर्ता । उपोद्घातप्रकरणे पद्यानीमानि वर्तन्ते—

'आकीर्णाङ्घ्रितलः सरोजकलशच्छत्रादिभिर्लाञ्छनैः
स्तस्याजायत मांसलायतभुजः श्रीभोज इत्यात्मजः ।
प्रीत्या योग्य इति प्रतापवसतिः ख्यातेन मुञ्जाख्यया
यः स्वे वाक्पतिराजभूमिपतिना राज्येऽभिषिक्तः स्वयम् ॥'
'आसीत् द्विजन्माऽखिलमध्यदेशे
प्रकाशशङ्काश्मनिवेशजन्मा ।
अलब्ध देवर्षिरिति प्रसिद्धिं
यो दानवार्षित्वविभूषितोऽपि ॥
शास्त्रेष्वधीती कुशलः कलासु
बन्धे च बोधे च गिरां प्रकृष्टः ।
तस्यात्मजन्मा समभूत् महात्मा
देवः स्वयंभूरिव सर्वदेवः ॥

तज्जन्मा जनकांघ्रिपङ्कजरजःसेवाप्तविद्यालवः
विप्रः श्रीधनपाल इत्यविशदामेतामबन्धात् कथा-
मक्षुण्णोऽपि विविक्तसूक्तिरचने यः सर्वविद्याब्धिना
श्रीमुञ्जेन सरस्वतीति सदसि क्षोणीभृता व्याहृतः। इति :

एतैरस्यान्वयः समयश्च स्पष्टं विज्ञायते ( क्रैस्तैकादशशतकस्यादिमोभागः )

**धनिकः**—दशरूपकावलोककारोऽयम्, कर्ता च काव्यनिर्णयस्य, यदयमवलोके 'यथाऽवोचाम काव्यनिर्णये' इत्यनुवदति। 'इति श्रीविष्णुसूनोर्धनिकस्य कृतौ दशरूपकावलोके' इत्युल्लेखात् विष्णोः सूनुरयमिति च गम्यते। उदाहरति चायमवलोके नवसाहसाङ्कचरितात् पद्यमेकम् 'यथा पद्मगुप्तस्य' इति। तदयं पद्मगुप्तात्परिमलापरनाम्नोऽर्वाचीनः। तत् संभाव्यते चास्य स्थितिर्दशमशतकस्त्योत्तरार्धे। अयं विष्णोः सूनुः शाली वाहनस्य नवमशताब्द्यामासीदिति श्रीमान् दुर्गाप्रसादः साहित्यदर्पणप्रस्तावनायां प्राह।

**धर्मकीर्तिः**—सौगतसमयधुरन्धरेष्वयमन्यतमो भिक्षुः। न्यायबिन्दुप्रमाणवार्तिकादिप्रबन्धकारः। दिङ्नागादर्वाचीनः, शान्तरक्षितात्तत्वसंग्रहकारात् प्राचीनः वासवदत्ताकारात्सुबन्धोरपि। समयोऽस्य क्रैस्तं षष्ठं शतकम्।

**धर्मदासः**—विदग्धमुखमण्डनस्य कर्ता।

**धर्मदेवः**—अस्यापरौद्वौश्लोकौ सुभाषितावल्यां समुपलभ्येते।

**धर्माशोकः**—कविमिमं श्रीधरदासः सदुक्तिकर्णामृते 'अनुद्घुष्टः शब्दै' रित्यनेन श्लोकेनैकेन समुपलक्षयति।

**धैर्यमित्रः**—'दिव्यचक्षुरहम्' इत्ययमेवैकः श्लोकः सुभाषितावल्यामपि कवेरस्य नाम्ना समुपलक्ष्यते।

**नन्दनः**—येन श्लोकेनायमिहोपलक्ष्यते सतु श्लोको विद्धसालभञ्जिकायां वर्तते इति नन्दनस्यास्य विचारो नास्माकं प्रकृतः।

**नरदेववर्मा**—कोऽयम् ?, अस्य कवेर्नाम्ना अस्यां सूक्तिमुक्तावल्यां 'आदाय मांस' मित्येक एव श्लोकः समुदाह्रियते। श्लोकश्चायं सदुक्तिकर्णामृते छित्तपस्यनाम्ना समुदाह्रियते। सुभाषितावलीशार्ङ्गधरपद्धत्योः कस्यचिदिति।

**नरसिंहः**—कवेरस्य श्लोकाः कवीन्द्रवचनसमुच्चयसदुक्तिकर्णामृतसुभाषिताव्वलीष्वपि समुपलभ्यन्ते। तत्र सुभाषितावल्यां समुदाहृतः-'स्मररसनदीपूरेणोढाः पुनर्गुरुसेतुभि' रित्येष कवेरस्य श्लोको ध्वन्यालोके, अलङ्कारान्तरसङ्कीर्णो यथा-स्मरनव ( रस ) नदीपूरेणोढाः इत्यादिः श्लोकः' इति प्रतीकग्रहणेनानूद्यते। तत् संभाव्यते कविरयमानन्दवर्धनात्प्राचीन इति।

**नाचिराजः**—अयं कविः कर्पूरकवेः प्रसङ्गे प्रागेवास्माभिः सामान्यतो ज्ञापितः। सोऽयं डाहलाधीशस्य कर्णस्य सभायामासीत्। स्तुतश्चायं कर्णोऽनेन—

'कुक्षेः कोटरएव कैटभरिपुर्धत्ते त्रिलोकीमिमा-
मन्तर्भूरिभरं बिभर्ति तमपि प्रीतो भुजङ्गाधिपः ।
श्रीकण्ठस्य स कण्ठसूत्रमभवद्देव त्वया तं हृदा
बिभ्राणेन परेषु विक्रमकथा श्रीकर्ण निर्णाशिता ॥ इति ।

कर्पूरकविना चायं नाचिराजः संस्तुतः—

'कन्ये कासि न वेत्सि मामपि कवे कर्पूर किं भारती
..................श्रीनाचिराजिः कविः ॥ इति ।
सोयं भोजराजकर्णराजयोः काले आसीत्

**निद्रादरिद्रः**—कोऽयं कविरिति न विज्ञायते । नामाप्येतत् साङ्केतिकम् । सङ्केतेच निमित्त-मिदमेव । यदयं 'भ्रातस्तावदहं शठेन विधिना निद्रादरिद्रीकृतः' इति निद्रादरिद्रतामाह । जानेकोपपराङ्मुखो.........निद्रादरिद्रीकृत इत्येष श्लोकः काव्यप्रकाशिकायां मम्मटभट्टेन समुदाहृतः । तदयं मम्मटभट्टान्नार्वाचीनः । मम्मटभट्टस्य समयः शालीवाहनस्यैकादश शताब्द्याः पूर्वो भागः ।

**निशानारायणः**—एतन्नाम्ना समुपलक्षिताः श्लोका वेणीसंहारे समुपलभ्यन्ते । तदयं कविर्वेणी संहारस्य कर्ता भट्टनारायणः । वेणीसंहारतो बहवः श्लोका ध्वन्यालोके आनन्दवर्धनाचार्येण समुदाह्रियन्ते । तदयं क्रैस्त नवमशतकमध्यभागतः प्राक्तन इति संभाव्यते ।

**परशुरामः**—अस्यां सूक्तिमुक्तिवल्यामेक एव श्लोकोऽस्यनाम्ना समुपलक्ष्यते । सच श्लोको बिल्हणस्येति पाठभेदः । सदुक्तिकर्णामृते एतन्नाम्ना कश्चन श्लोकः समुदाह्रियते । नेतोन्यदस्य प्रत्यभिज्ञापकं किमपि ।

**परिमलः**—नवसाहसाङ्क चरिताख्यस्य महाकाव्यस्य कर्ता पद्मगुप्तो नाम महाकवि. । अस्यैव परिमल इत्यपरं नाम । नवसाहसाङ्कचरिते सर्गसमाप्तौ इति परिमलापरनाम्नः पद्मगुप्तस्य कृतावित्युल्लेखः प्रतिसर्गं दृश्यते । पद्मगुप्त इति नैजं नाम काव्यान्ते ग्रन्थप्रशस्तौ स्वयमेवाह—

'एतद्विनिद्रकुमुदद्युति पद्मगुप्तः श्रीसिन्धुराजनृपतेश्चरितं बबन्ध' इति ।

अस्मादेव महाकाव्यात्

'नमोऽस्तु साहित्यरसायतस्मै
निषिक्तमन्तः पृषताऽपि यस्य ।
सुवर्णतां वक्त्रमुपैति साधो
र्दुवर्णतां याति च दुर्जनस्य ॥ १. १४

इतीदं पद्यं समुद्धृत्य पद्मगुप्तनाम्ना समुदाह्रियते सुभाषितावल्याम् । तथा दशरूपावलोकेऽपि—

चित्रवर्तिन्यपि नृपे तत्त्वावेशेन चेतसि ।
व्रीडार्धवलितं चक्रे मुखेन्दुमवशैव सा ॥ इति स. ६ श्लो. ४२

'परिमलकालिदासस्य कृतौ' इति तत्रैव महाकाव्ये क्वचित् क्वचित् सर्गसमाप्तौ पाठभेदः समुपलभ्यते । पाठभेदश्चायं नात्यन्तमादरणीयः । प्राशस्त्यमात्रज्ञापनाय केनाचित् कृतोऽयं कालि

दास इत्युल्लेखः । अस्यां सूक्तिमुक्तावल्यां परिमलनाम्ना समुपलक्ष्यमाणः ' आत्ते सीमन्तरत्ने ' इत्ययं श्लोकः काव्यप्रकाशे समुदाह्रियते । सोऽयं श्लोकः अन्ये च क्षेमेन्द्रेण औचित्यचर्चादौ समुदाहृताः परिमलनाम्नोपलक्षिताः श्लोकाः साहसाङ्कचरिते न सन्ति, परमेते मालवाधीशस्तुतिपरा एवेति नवसाहसाङ्कापरनाम्नःसिन्धुराजस्य योऽग्रजः श्रीवाक्पतिराजः, तस्मिन् प्रणयातिरेकमस्य कवेः सूचयन्ति । अस्मिन्नेव नवसाहसाङ्कचरिते पद्यानीमानि तस्मिन्नस्य कवेर्भक्तिं सूचयन्ति ।

' सरस्वतीकल्पलतैककन्दं
वन्दामहे वाक्पतिराजदेवम् ।
यस्य प्रसादाद्वयमप्यनन्य
कवीन्द्रचीर्णे पथि सञ्चरामः ॥' १. ७

दिवं यियासुर्ममवाचि मुद्रामदत्त यां वाक्पतिराजदेवः ।
तस्यानुजन्मा **कविबान्धवस्य** मिनत्ति तां संप्रति सिन्धुराजः ॥ १.८ '

' श्रीमद्वाक्पति राजोऽभूत् अग्रजोऽस्याग्रणीः सताम् ।
सगरापत्यदत्ताब्धिपरिखायाः पतिर्भुवः ॥
अतीते विक्रमादित्ये गतेऽस्तं शातवाहने ।
कविमित्रे विशश्राम यस्मिन् देवी सरस्वती ॥ ' ११. ९२–९३

' न्यस्तानि यानि मयि सूक्तिसुधापृषन्ति देवेन तेन कतिचित् **कविबान्धवेन** ।
चन्द्रातपस्नपितमौक्तिकसोदराणां तेषामिदं विलसितं नवसाहसाङ्क ॥

( काव्यान्ते ग्रन्थप्रशस्तौ )

इदमप्याह तत्रैव—

'लक्ष्मीलतानववसन्तमहीतलेन्द्र विद्याविलासमणिदर्पण सिन्धुराज ।
एतन्मया घटितमुज्वलकान्ति काव्यमाणिक्यकुण्डलमिह श्रवणे विधेहि इति

एतेनायं कविः श्रीवाक्पतिराज सिन्धुराजसमकालीन इति विनिश्चीयते ( क्रैस्तदशमशतकस्योत्तरार्धम् ) ( A. D. 980-1010 )

**पाणिनीः**—कस्यचित्कवेः कस्मिंश्चिद्वृत्ते प्रागल्भ्यं वदन् क्षेमेन्द्रः प्राह सुवृत्ततिलके—

' स्पृहणीयत्वचरितं पाणिनेरुपजातिभिः ।
चमत्कारैकसाराभिरुद्यानस्येव जातिभिः ॥ ' इति ।

किमयं महाकविर्व्याकरणशास्त्रप्रणेतुः पाणिनेरनन्यः उतान्य इति भवति विप्रतिपत्तिः । नामैक्येन स्वरसतः प्रतीयमानमनन्यत्वं यावन्न बाध्यते बाधकलिङ्गेन, तावत् अन्यत्वं कथमिव वक्तुं सुशकम् । राजशेखरश्च कण्ठरवेणानन्यत्वं द्रढयति—

' स्वस्ति पाणिनये तस्मै यस्य रुद्रप्रसादतः ।
आदौ व्याकरणं काव्यमनुजाम्बवतीजयः ॥ ' इति । सदु ४२

इदं च कस्याचित् कवीनुपवर्णयतः पद्यम्—

सुबन्धौभक्तिर्नः कइहरघुकारे न रमते
धृतिर्दाक्षीपुत्रे हरति हरिचन्द्रोऽपि हृदयम् । इति ।

जांबवतीजयस्य कर्ता पाणिनिरित्यनेन गम्यते । सच व्याकरणस्य कर्तेति । काव्यालङ्कार-व्याख्यायां नमिसाधुर्महाकवीनामप्यपशब्दपातं निदर्शयन्: पाणिनेः श्लोकद्वयमुदाहरति—पाणिनेर्महाकाव्ये पातालविजये—'सन्ध्यावधूं गृह्यकरेण' गतेऽर्धरात्रे ××× अपश्यती वत्सामिवेन्दुबिम्ब' मिति । अनेन च पातालविजयस्य कर्ता पाणिनिरिति विज्ञायते । यद्येष व्याकरणप्रवर्तकादनन्यः स्वयं कथं शब्दान् व्याकुर्वन् अपशब्दं प्रयुञ्जीत । यद्येवमनन्यत्वे बाधकं लिङ्गमुत्पश्यामः, कथं राजशेखरवचनस्य भ्रान्तिमूलकत्वं सहेमहि । किंञ्च—जाम्बवतीजयात्पातालविजयोनन्यःउतान्यः विचारयन्तु विमर्शकाः । पाणिनेः श्लोकाः कवीन्द्रवचनसमुच्चय सदुक्तिकर्णामृत सुभाषितावली ध्वन्यालोकादिषु समुदाहृता नाम ।

**पुनरुक्तपद**:—'पश्चादन्यत् पुरश्चान्यत् पुनरुक्तभयादिव' इत्येष कवेरस्य श्लोकः । अत्र-पुनरुक्तभयादित्यस्मिन् प्रयोगे दृष्टिं समर्पयता केन चित् कृतं साङ्केतिकं नामैतत्-कोऽयम् का चास्य कृतिरिति न विज्ञायते ।

**पुष्टिङ्करः**—अस्यां सूक्तिमुक्तावल्यां योऽस्यकवेः 'इदानींतीव्राभि' रित्येष श्लोकः समुदाहृतः स कवीन्द्रवचनसमुच्चये समुद्धृतः ।

**प्रकाशवर्षः**—अयं कविः शिशुपालवधव्याख्याकारात्वल्लभदेवान्नार्वाचीनः । सद्यनन्य-गुर्व्यास्तवेति श्लोकं ( माघ. १ स. ३५ श्लो) व्याचक्षाणः प्राह—'शाश्वतिकाभावादिति उपाध्यायः प्रकाशवर्षः' इति । उपाध्यायशब्दश्रवणादेनं प्रकाशवर्षं वल्लभदेवस्योपाध्यायं केचन मन्यन्ते । अस्मदुपाध्याय इत्यस्मत्पदघटितश्चेदुपाध्यायशब्दस्तथैव संभाव्येत । केवलोऽयमुपाध्यायशब्दः उपाध्यायपदसमलंकृततां तस्यावेदयतीत्यपि संभावनं सुशकम् ।

'श्रुत्वा प्रकाशवर्षात्तु व्याख्यातं तावदीदृशम् ।
विशेषतस्तु नैवास्ति बोधोऽत्रानुभावादृदे ॥'

इतीदं टिप्पणे क्वापि परिदृश्यमानमवलभ्य प्रकाशवर्षं वल्लभदेवसमकालमपरे मन्यन्ते । अन्यदेतत् । प्रकाशवर्षस्तस्मान्नार्वाचीन इतितु सिद्धम् । मल्लिनाथः—अनन्यगुर्वीरिति श्लोके सुरासुरानित्यत्र बहुवचनस्य साङ्गत्यं संपादयन्—' सुरासुरविरोधस्य कार्योपाधिकत्वेनाशाश्वतिकत्वात् × × × × न द्वंद्वैकवद्भाव इत्याहुः ' इति प्रकाशवर्षाभिमतं पक्षमेवानुवदति । अनेन प्रकाशवर्षेण विरचिता शिशुपालवधव्याख्या काप्यस्तीत्यपि गम्यते । वल्लभदेवोऽयं मल्लिनाथात् प्राचीनः । मल्लिनाथो हि द्वितीयसर्गे 'अन्यदा' ( स. १ श्लो. ४ ) इति श्लोकव्याख्याने 'वल्लभोक्तं प्रत्युक्तमिति वदति । काव्यालंकारकर्तृरुद्रटादर्वाचीनोऽयं वल्लभः । यदयं तत्र तत्र रुद्रटमनुस्मरति । न केवलमनुस्मरति । व्याख्यातारं च रुद्रटकाव्यालङ्काररस्यात्मानमवगमयति तत्रैव 'अस्माभिः रुद्रटालङ्कारे विवेचितमिति ।' ( स. ४ श्लो. २१ ) आनन्दवर्धनाचार्यविरचित-देवीशतकव्याख्याकर्तुः कैयटस्य पितामहो यो वल्लभदेवः स एवायमिति प्रत्यमिजानतां तस्यैव कैयटस्य वचनेन समयोऽप्यस्य व्यक्तं विनिश्चीयते—प्रायः कैस्तदशमशतकस्याद्यः पाद इति इदं च देवीशतक व्याख्यानावसाने कैयटस्य वचनम् ।

वल्लभदेवायनितश्चन्द्रादित्यादवाप्य जन्मेनाम् ।
कैयटनामाऽरचयत् विवृत्तिं देवीशतकस्तोत्रे ॥
वसुमुनिगगनोदधिसमकाले याते कलेस्तथालोके । इति ।

कैयटस्य समयः (कलौ. ४०७८) ( क्रै. ९७७ ) एवं च सति वल्लभस्यास्य समयः क्रैस्त-दशमशतकस्याद्यः पादः प्रायः—स्यात् । स एव ततः प्राक्तनो वाऽस्य प्रकाशवर्षस्य समय इति सिद्धम् । अपरं चेदमवधेयम् । माघव्याख्यानाव साने वल्लभदेवस्येदं पद्यमेकमशुद्धसंवलितं समुपलभ्यते ( चौखांबासीरियस् बनारसे )—

'सूनुरानन्ददेवस्य रणभून्योमतास्यवः ? ।
व्यधत्त टीकां काव्येऽस्मिन् वल्लभः सूरिवल्लभाम्' इति

अशुद्धिदूषितेऽस्य द्वितीयपादे दीयतां दृष्टिः । अपाकृत्याशुद्धिदोषमर्थोऽस्य समुन्नेयः । भौमित्यस्य व्योमेति संशोधनं स्वरसम् । तथा रणेत्यस्य रसेति संशोधनंच । एवंच सति रसभूव्यो-मेत्येतत्पदत्रयं संख्याङ्कलक्षकमिति व्यक्तं विज्ञायते । रसेति षट् भूरित्येकं, व्योमेति बिन्दुः । अङ्कानां वामतो गतिरितिन्यायेन बिन्दुना गणनोपक्रमस्य दुर्घटतया 'व्योमे' त्यतः परं विद्यमानेनापि-संख्योपलक्षकेन भाव्यम् । तस्मात् तास्यवः इति स्थाने तोयघाविति संशोधनं समुचितमिति प्रतिभाति । तथाचायमर्थः—रसभूव्योमतोयघ्युपलक्षिते ( ४०१६ ) कलेः समये टीकां व्यधत्तेति । कैयट तत्पितामहयोः षष्टिवर्षपरिमितं व्यवधानं न्याय्यं नाम । परमियमाशङ्काऽत्र समुद्भवति—शिशुपालवधे परिसमाप्ते विंशतितमे सर्गे, समाप्तेच काव्ये वंशवर्णनपरं मल्लिनाथेनाव्याख्यातं व्याख्यातं वल्लभेन श्लोकपञ्चकं समुपलभ्यते । तत्र पञ्चमश्लोकव्याख्याने 'सुकविकीर्ति दुराशया—सुकवीनां श्रेष्ठ विदुषां वररुचि × × × × बिल्हण भारविबाणमयूरादीनां' इति व्याख्या समु-पलभ्यते । अत्र बिल्हणग्रहणं माघस्य बिल्हणादर्वाक्तनत्वं स्फोरयाति । इदंतु व्याहतं, माघस्य कृति-रानन्दवर्धनेनानूद्यते सचनवमशतकस्थः, बिल्हणस्त्वेकादशशतकस्थः । व्याख्याता वल्लभः स्वदृष्ट्या कथयतीतिचेत् विभाव्येत, तदा वल्लभस्यास्य दशमशतकप्रथमपादे स्थितिः कथं सम्भाव्येत । कैयटस्य पितामहो वल्लभदेव इतोऽन्य एव किं न स्यादिति । वयमिह संभावयामः—वंशवर्णनपरं श्लोकपञ्चकं माघस्यकृतिरिति न विस्रम्भपदंभवति । यन्मल्लिनाथेनाव्याख्यातम् । शैलीच न माघकृतेः । सुकविकीर्तिंदुराशयेत्यत्रोपसर्गग्रहणं व्यर्थम् । सुकवीनां श्रेष्ठविदुषाभिति-व्याख्यानं च न रमणीयम् । कवीनामित्यस्य विदुषमिति न पर्यायः । काव्यरचनासामर्थ्यं वैदुष्या-द्विशिष्यते । तत् बिल्हणेति वा लेखकप्रमादायातम् । यदि विस्रंभो वंशवर्णने व्याख्याने बिल्हणग्रहणे च, तदा स्यादयं वल्लभः बिल्हणादर्वाक्तनः कश्चिदन्यः । प्रकाशवर्षसमयस्यायमुपलक्षक इत्यविवादम् ।

प्रती[दी]पवसुन्धरः—वसुन्धरादनन्योऽयम्, अस्यैव साङ्केतिकं प्रदीपेत्युपपदम् । 'विलासि-न्यासीने त्वयि × × × प्रदीपो × × × तया किं न शमितः ( सूक्ति. १६१ )' इति प्रदीप्रशमनो-पायवर्णनावैचित्र्यमूलकमेतत् । अपरे चास्य श्लोका वसुन्धरानाम्नोपलक्ष्यमाणा अस्यामेव सूक्तिमुक्ता-वल्यां सुभाषितावलौ सदुक्तिकर्णामृते च समुपलभ्यन्ते ।

फल्गुहस्तिनी—नास्याः श्लोक एकोऽप्यस्यां सूक्तिमुक्तावल्याम् । यस्तु एतन्नाम्ना समुपलक्ष्य-माणः श्लोकः सतु भर्तृहरिविरचितनीतिशतके वर्तते । तदस्या विचारो नेह प्रकृतः ।

**बङ्कलावर्तः**—अस्य नाम्ना समुदाह्रियमाणा अपि भर्तृहरिनीतिशतक एव ।

**बाणः**—स्तौति कविपुंगवमेनं राजशेखरः—

बाणेन हृदि लग्नेन यन्मन्दोऽपि पदक्रमः ।
प्रायः कविकुरङ्गाणां चापलं तत्र कारणम् ॥ इति ।

स्तौति च गोवर्धनाचार्यः—

जाता शिखण्डिनी प्राक् यथा शिखण्डी तथाऽवगच्छामि ।
प्रागल्भ्यमधिकमाप्तुं वाणी बाणो बभूवेति ॥' इति ।

धर्मदासोऽपि विदग्धमुखमण्डने—

'रुचिरस्वरवर्णपदा रसभाववती जगन्मनो हरति ।
तत्किं तरुणी नहि नहि वाणी बाणस्य मधुरशीलस्य ॥ इति ।

'बाणः सृष्टिमपूर्ववस्तुविषयामेकोऽत्र निर्व्यूढवानि'ति च भवानन्दः । जन्मभूमिरस्याग्रहारः **प्रीतिकूटाख्यः**, पितरौ चास्य **राजदेवीचित्रभानू** । **पुलिन्दो** नाम कश्चित् कविरस्य मित्रमासीत् । आह च **धनपालः**—

केवलोऽपि स्फुरन् बाणः करोति विमदान् कवीन् ।
किं पुनः क्लृप्तसन्धानः पुलिन्दकृतसन्निधिः ॥' इति

आसीदयं श्रीहर्षस्य सभायाम् । प्रथितः स **मयूरकविरपि** । अपरश्च **चण्डालदिवाकरः** । आह राजशेखरः—

'अहो प्रभावो वाग्देव्या यच्चण्डालदिवाकरः ।
श्रीहर्षस्याभवत् सभ्यः समो बाणमयूरयोः ॥' इति।

अनेन विरचिताः प्रबन्धाः प्रथिता नाम । श्रीहार्षचरितं कादम्बरी चण्डीशतकं मकुटताडितकं चेति । राजशेखरश्चेदमाह—

'सहर्षचरिताशश्वत् कृतकादम्बरीस्यदा ।
बाणस्य वाण्यनार्येव स्वच्छन्दा चरति क्षितौ ॥' इति

पार्वतीपरिणयमप्यस्यैव कृतिं केचन मन्यन्ते । समयश्चास्य श्रीहर्षस्य यः समयः स एव ( क्रैस्तं सप्तमं शतकम् )

**बिज्जाकः**—अयमेव बिज्जाकभट्टः बीजकः इत्यप्युच्यते । अस्य नाम्ना सूक्तिमुक्तावल्यां समुदाहृतेष्वेकः 'असौ मरुच्चुम्बित चारुकेसर' इत्येष श्लोकः अपरे च श्लोकाः सुभाषितावलौ समुदाह्रियन्ते । सदुक्तिकर्णामृते चास्त्यस्य श्लोकः ।

**बिज्जाका**—कोऽपि कविर्वर्णयतीमाम्—

'नीलोत्पलदलश्यामां बिज्जाकां तामजानता ।
वृथैव दण्डिनाऽप्युक्तं सर्वशुक्ला सरस्वती ।' इति । ( सूक्ति ४७)

विज्जाका विज्जा विद्या विद्याका इत्यप्यस्या नामनिर्देशो दृश्यते । बिज्जाकाया नाम्ना सूक्तिमुक्तावल्यां समुदाह्रियमाणः 'दृष्टिं हे प्रतिवेशिनि' इति श्लोकः कवीन्द्रवचनसमुच्चये सदुक्तिकर्णा-

मृते च विद्याया इति निर्दिश्यते । सुभाषितावल्यां चास्याः श्लोका बहवः समुदाह्रियन्ते । 'धन्याऽसि या कथयसि' इत्येष विज्जाकायाः श्लोकः (सूक्ति. २९९) काव्यप्रकाशे चतुर्थे उल्लासे समुदाह्रियते । तदियं शालीवाहनैकादशशतकस्थात् मम्मटात् प्राचीना ।

**बिल्हणः**—काश्मीरः कवीन्द्रोऽयमात्मनो जनपदं जन्मस्थानमाप्रपितामहादन्वयक्रममा-बाल्यादेव काश्मीरेष्वेव समधिगतं पाण्डित्यं नानादेशसञ्चरणं तत्र तत्र राजसदसिकविवरसमधिष्ठिते विजयं निजकवितारसास्वादसन्तृप्तानेकक्षितिपालप्रसादलब्धं गजान्तमैश्वर्यं कर्णाटेन्द्रात् चौलुक्य कुलतिलकात् संप्राप्तं विद्यापतिपदमन्यच्चात्मनः कीर्त्यावहं चरितं विक्रमाङ्कचरिते निजकृतौ (अष्टादशेसर्गे) विशेषेण वर्णयति । कविरयं चालुक्यकुलतिलकं विक्रमाङ्कदेवं प्रीणयन् तदीयचरितं काव्यरूपेण निबध्नन् काव्यान्ते नैजं काश्मीरदेशं, तद्देशाधिपतिं च कलशं सात्मजं सजनकं सम-नुस्मरन्नुपवर्णयति विशेषेण । यस्यैव समये काश्मीरात् कर्णाटमभिप्रतस्थे स्वयम् । आत्मीयभावेनै-वात्र मूलम् । प्रदर्शयतिचायं श्लोकः । आत्मीयेषु स्नेहविशेषम्—

'लब्धा लक्ष्मीर्दिशिदिशि कृताः संपदः साधु भोग्याः
प्राप्तायोग्यैः सह कलहतः कुत्र नोच्चैर्जयश्रीः ।
गोष्ठीबन्धः सपदि सुजनैः सारनिष्कर्षदक्ष-
प्रज्ञालब्धस्तुतिभिराचिरादस्तु काश्मीरकैर्मे ॥ इति ॥ स. १८. १०३.

लब्धप्रतिष्ठस्यास्यान्ते निर्वेदश्चैश्वर्येषु—

'आरुक्षाम नृपप्रसादकणिकामद्राक्ष्म लक्ष्मीलवान्
किञ्चिद्वाङ्मयमध्यगीष्महि गुणैः कांश्चित् पराजेष्महि ।
इत्यज्ञानमयीमकार्ष्म कियतीं नानर्थकन्थां मनः
स्वाधीनीकृतशुद्धबोधमधुना वाञ्छत्यमर्त्यापगाम् ॥' इति ॥

**समयश्चास्य** एकादश शतकस्योत्तरार्धम् । कविरयं मुक्तिकलशस्य नप्ता, राजकलशस्य पौत्रो, ज्येष्ठकलशस्य पुत्रः । कर्णसुन्दरीप्रभृतयः कृतयोऽप्यपराः कवेरस्य वर्तन्ते । विशेषो विक्रमाङ्कदेव-चरितप्रस्तावनायां द्रष्टव्यः । ( Introduction of George Buhler )

**भट्टजयन्तः**—न्यायमञ्जर्याः प्रणेता वृत्तिकार इति प्रथितः । सोऽयं मुक्तापीडसचिवस्य शक्तिस्वामिनोनप्ता कल्याणस्वामिनः पौत्रश्चन्द्रस्य पुत्रः पिता कादम्बरीकथासारकर्तुरभिनन्दस्य अनेनानन्दवर्धनोपज्ञोध्वनिमार्गो न्यायमञ्जर्यां निरस्यते—

'एतेन शब्दसामर्थ्यमहिम्ना तन्निरस्यते ।
यमन्यः पण्डितंमन्यः प्रपेदे कञ्चन ध्वनिम् ॥'
'मानान्तरपरिच्छेद्यवस्तुरूपोपदेशिनाम् ।
शब्दानामेव सामर्थ्यं तत्र तत्र तथा तथा ॥
अथवा नेदृशी चर्चा कविभिः सहशोभते ।
विद्वांसोऽपि विमुह्यन्ति वाक्यार्थगहनेऽध्वनि ॥
तदलमनया गोष्ठ्या विद्वज्जनोचितया चिरं
परमगहनस्तर्कज्ञानामभूमिरयं नयः ।

प्रकृतमधुना तस्मात् ब्रूमो न भात्यनुमानतः
तनुमपि न तेष्वार्थापत्तेर्विशेष इति स्थितम् ॥' इति । प. ५८

तस्यास्य जयन्तभट्टस्य समयः प्रायः क्रैस्तं नवमं शतकम् । आनन्दवर्धनस्य प्रायः समकालः स्यात् । यद्यपि जयन्तभट्टस्य नाम्ना समुपलक्ष्यमाणो यः श्लोकः स भर्तृहरिशतके समुपलभ्यते । अथापि तच्छतकंभर्तृहरेरेव कृतिरिति न विश्वासस्य पदम् । यदन्यदीया अपि कृतयस्तत्र दृश्यन्ते तदयमस्यां सूक्तिमुक्तावल्यां समुदाहृतः श्लोकोजयन्तस्य भवेन्नाम ।

**भट्ट गोविन्दराजः**—कविमेनं श्लाघते देवेश्वरः—

'इन्दुप्रभारसविदं विहगं विहाय
कीरानने स्फुरसि भारति का रतिस्ते ।
आद्यं यदि श्रयसि जल्पतु कौमुदीनां
गोविन्दराजवचसां च विशेषमेषः ॥' इति ( शार्ङ्ग धर )

अपरे चास्य श्लोकाः सुभषितावल्यां समुदाहृताः ।

**भट्टनायकः**—अयं हृदयदर्पणस्य कर्ता ध्वनिनिरसने प्रवृत्तः । आचार्याभिनवगुप्तः स्वकृतौ ध्वन्यालोके तत्र तत्रास्य पक्षमनूद्य निरस्यति । तद्यथा—'तेन यद्भट्टनायकेन द्विवचनं दूषितं तत् गजनिमीलिकयैव' इति । अनेनायमभिनवगुप्तात्प्राक्तन इत्यवगम्यते । दूषितं यद्द्विवचनं तत्—व्यङ्क्तः काव्यविशेषः स ध्वनिरिति सूरिभिः कथितः' ( ध्वन्या उ. १. का. १३ ) इतिकारिकास्थं व्यङ्क्त इत्येतद्द्विवचनम् । तदयमानन्दवर्धनान्न प्राक्तनः ।

'द्विजस्तयोर्नायकाख्यो गौरीशसुरसद्मनोः ।
चातुर्विद्यः कृतस्तेन वाग्देवीकुलमन्दिरम् ॥ इति

राजतरङ्गिणीवचनं प्रमाणयन् सुभाषितावलीप्रस्तावनाकारः अवन्तिवर्मणः पुत्रस्य शङ्करवर्मणः समयमस्य भट्टनायकस्य संभावयति । आनन्दवर्धनस्त्ववन्तिवर्मणः सभायामासीदिति सुव्यवस्थितम् । मीमांसकश्चायमित्यपि गम्यते-यदस्य मतं निरस्यन्नभिनवगुप्तः सोपहासमिदमाह—'भट्टनायकेन तु यदुक्तं × × × तत् श्लोकार्थमपरामृश्य × × × नच निःश्वासान्ध इवादर्श, स इव चन्द्रमा इति कल्पना युक्ता। जैमिनीयसूत्रे ह्येवं योजना, 'न काव्येऽपीत्यलम्' इति । ( ध्वन्या. प. ६३ ) उपहसतीव ह्येनम् 'जैमिनीयसूत्रेष्वेव ईदृशी ते योजना शोभेत, न काव्येऽपीति ।

**भट्टमयूरशङ्करः**—शङ्कर इति लेखकप्रमादकृतः पाठः । शङ्कुक इत्येव पाठो युक्तः श्रीभण्डारकर महाशयैर्दृष्टः पाठस्तु मयूरपुत्रशङ्कुक इति । शङ्कुको मयूरपुत्र इतिविशेषणमेतद्विचार्यम् । अस्यां सूक्तिमुक्तावल्यां मयूरशङ्करनाम्ना समुपलक्ष्यमाणः श्लोकः सुभाषितावल्यां शङ्कुकस्य नाम्ना समुदाह्रियते । शङ्कुकः प्रथितः कश्चिदलङ्कारनिबन्धस्य कर्ता प्राक्तन इति विज्ञायते । मम्मटभट्टः काव्यप्रकाशे रसं निरूपयन् 'इति भट्टलोल्लटप्रभृतयः, इति श्रीशङ्कुकः, इति श्रीभट्टनायकः, इति श्रीमदाचार्याभिनवगुप्तपादाः । इति मतभेदान् निरूपयति । अनेन निर्देशक्रमेण भट्टनायकात्प्राक्तनत्वं गम्यते । भुवनाभ्युदयाख्यस्य प्रणेताऽयमिति च राजतरङ्गिणीतो विज्ञायते—

'अथ मम्मोत्पलयोरुदभूत् दारुणो रणः
रुद्धप्रवाहा यत्रासीत् वितस्ता सुभटैर्हतैः ॥
कविर्बुधमनःसिन्धुशशाङ्कः शङ्कुकाभिधः ।
यमुद्दिश्याकरोत् काव्यं भुवनाभ्युदयाभिधम् ॥' इति (राज)

समयश्चास्य क्रैस्तं नवमं शतकम् । परमत्र मयूरपुत्रनिर्देशः कं मयूरमवलंबते इति तु विचार्यम् । सूर्यशतककर्ता मयूरस्तु बाणसमकालः ।

**भट्टवाचस्पतिः**—कविरयमन्यो वाचस्पतिमिश्रेभ्यः, यैः न्यासवार्तिकतात्पर्यटीकाप्रभृतयो बहवो दार्शनिका निबन्धा विरचिताः । अस्य श्लोका बहवः सदुक्तिकर्णामृते समुदाहृताः । अस्यां समुदाहृतः 'जनस्थाने भ्रान्तं' इति श्लोकः सदुक्तिकर्णामृते शूलपाणेरित्युपलक्ष्यते । अयमेव श्लोकः क्षेमेन्द्रेण कविकण्ठाभरणे 'रामायणपरिचयो यथा–भट्टवाचस्पतेः' इति समुदाहृतः । यश्चायमपरः कवेरस्यश्लोकः 'मृगशिशुदृशस्तस्या' इति, सदुक्तिकर्णामृते समुदाहृतः, सदृशरूपके द्वितीयप्रकाशे समुदाहृतो वर्तते । तदयं कविर्धनिकात्प्राचीन इति संभाव्यते ।

**भट्टश्यामलः**—कवेरस्य कृतेः केचन श्लोकाः सुवृत्ततिलके औचित्यचर्चायांच क्षेमेन्द्रेण समुदाह्रियन्ते । अयं कविः प्रणेता पादताडितारव्यस्य भाणस्य । राजशेखरेण काव्यमीमांसायामेष श्यामदेव इति निर्दिश्यते ।

**भट्ट सोमेश्वरः**—न्यायसुधायाः कर्ता भट्टसोमेश्वरो मीमांसक एकः अपरः काव्यप्रकाशिकाव्यख्यायाः कर्ता भट्टसोमेश्वरः, अपरस्तु सोमेश्वरः सुरथोत्सवस्य कीर्तिकौमुद्याश्च कर्ता अपरस्तु सोमेश्वरदेवो मानसोल्लासकर्ता । एष्वन्यतमोवाऽन्यो वेतिविचार्यम् ।

**भट्टस्वामी**—अयमेव भट्टिरिति प्रथितो महाकविर्वैयाकरणशिरोमणिः । यस्य कृतिर्भट्टिकाव्यमिति प्रथते । अयं श्रीस्वामिनः सूनुर्ब्राह्मणः सौराष्ट्रेषु श्रीधरसेननरेन्द्रे राज्यं प्रशासति वलभीपुरे समभूत् । काव्यस्यान्ते स्वयमिदमाह—

'काव्यमिदं विहितं मया वलभ्यां
श्रीधरसेननरेन्द्रपालितायाम् ।
कीर्तिरतो भवतात् नृपस्य तस्य
प्रेमकरः क्षितिपो यतः प्रजानाम्' ॥ इति ॥

व्याख्याता आरम्भे प्राह—श्रीस्वामिसूनुर्भट्टिनामा कविः रामकथाश्रयमहाकाव्यं चकार' इति । अस्यां सूक्तिमुक्तावल्यां समुदाहृतः 'पीतौष्ठरागाणी'ति श्लोकः (भट्टिकाव्ये एकादशसर्गे) (२१) समुपलभ्यते । सुभाषितावल्याम परे चास्य श्लोकाः समुपलभ्यन्ते । श्रीधरसेनशिलालेखतः क्रैस्तषष्ठशतकस्योत्तरार्धमस्य समयः स्यादिति संभाव्यते । (काव्यमालागुच्छे ८० प्राचीनलेखमालायां (३) द्वौ लेखौ (१६४–१६५) वर्तेते)

**भट्टेन्दुराजः**—अभिनवगुप्तस्यायमुपाध्यायः । क्रैस्तदशमशतके काश्मीरेष्वासीत् । ध्वन्यालोके मङ्गलमाचरन् अभिनवगुप्तो भट्टेन्दुराजचरणावनुस्मरति–'भट्टेन्दुराजचरणाब्जकृताधिवासे' ति । उदाहरति चास्य श्लोकांस्तत्र तत्र लोचने । 'यथा अस्मदुपाध्यायभट्टेन्दुराजस्य–' प्राणा येन समर्पिता' इत्येवमादिभिः । क्षेमेन्द्रेणास्य श्लोका औचित्यचर्चादौ समुदाहृताः ।

भट्टेन्दुराजस्य—'यः कालागुरु' ( सूक्ति. २६५ ) ( ध्वन्यालोकलोचने प. ११६ )

**भट्टोत्कटः**—कोऽसावुत्कटः ?, उद्भट इति तु भवेत् प्रसिद्धश्चायमलङ्कारनिबन्धकारः ।

**भट्टोपमन्युः**—'सान्ध्यरागरुचिरारुणमारात्' इति श्लोक एक एवायं सूक्तिमुक्तावल्यां सुभाषितावल्यां च कवेरस्येति समुदाह्रियते । नेतोऽस्याधिकं किमपि ज्ञापकमुपलभ्यते ।

**भदन्तविशाखदेवः**—मुद्राराक्षसकर्तुर्विशाखदेवादन्योऽयमिति संभाव्यते । पूज्यवाचकस्य भदन्तशब्दस्यभूरिप्रयोग आर्हतसमयनिष्ठेष्वेव । मुद्राराक्षसकर्ता तु नतत्समयानुयायी । कोऽयमिति विचार्यम् ।

**भदन्तहरिभट्टः**—बहवोऽस्य कवेः श्लोकाः सुभाषितावल्यां समुदाहृताः । अस्यां तु सूक्तिमुक्तावल्यां सूक्तिरस्यैकैव । सूक्तिश्चास्य प्राचां महाकवीनां शैलीमनुसरति ।

**भदन्तारोग्यः**—यदेव श्लोकद्वयमस्यां सूक्तिमुक्तावल्यामस्य कवेः कृतिरिति समुदाहृतं तदेव सुभाषितावल्यामप्येतस्यैवेति समुदाहृतम् । कविमेनं न विशेषतः प्रत्यभिजानीमः ।

**भर्चुः**—भर्श्चुः भर्त्सुः इत्यपि नाम्नि भेदः पठ्यते । कविरयं बाणस्य गुरुः । स्तौति च कादम्बर्यां बाण एनम् ।

'न मामि भर्त्सोश्चरणाम्बुजद्वयं
सशेखरैर्मौखरिभिः कृतार्चनम् ।
समस्त सामन्तकिरीट वेदिका
विटङ्कपीठोल्लुठितारुणाङ्गुलि ॥' इति । ( कादम्बरी )

राजशेखरश्चैनं श्लाघते—

'अवन्तिः काव्यमानर्च भर्चोर्मौखरिशेखरः
शिष्यो बाणश्च सङ्क्रातकान्तवैद्यवचाः कविः ।' ( सूक्ति. ४४ )

कवेरस्य काव्यं किमप्यस्तीत्यनेन श्लोकेन विज्ञायते काव्यस्य नाम न व्यक्तम् । कविं काव्यं च निरूपयन् राजशेखरः काव्यनामन किं ब्रूयात् ? । अपि स्यादवन्तिकाव्यमित्येकं पदम् ?। सुव्यक्तः समयोऽप्यस्य । अस्य श्लोका बहवः सुभाषितावलौ समुदाहृताः ।

**भर्तृहरिः**—अयं वाक्यपदीयस्य प्रणेता प्रणेताच शतकत्रयस्य । यद्यपि भर्तृहरेः कृतिरिति ख्यायमाने शतकत्रये सङ्कलितानाम परेषां श्लोकाः । अथापि प्राधान्यात् भर्तृहरिकृतिरेव सा । केचन मन्यन्ते—आचार्याभिनवगुप्तो 'यथाह भगवान् भर्तृहरि'रित्यादिना यं वाक्यपदीयकारं निर्दिशति तस्मादन्य एव शतककर्ता इति । अस्य समयः कैस्तं सप्तमं शतकम् ।

**भर्तृमेण्ठः**—श्लाघते धनपालः कविमेनम्—

'वक्रोक्त्या भर्तृमेण्ठस्य वहन्त्या सृणिरूपताम् ।
आविद्धा इव धून्वन्ति मूर्धानं कविकुञ्जराः ।' ( सूक्ति. ४४ )

राजशेखरो बालरामायणे सबहुमानमेनं निर्दिशति—

'बभूव वल्मीकभुवः पुरा कवि-
स्ततः प्रपेदे भुवि भर्तृमेण्ठताम् । इति ।

क्षेमेन्द्रश्चेदमुदाहरति सुवृत्ततिलके—आरम्भे यथा भर्तृमेण्ठस्य—

'आसीद्दैत्यो हयग्रीवः सुहृद्वेश्मसु यस्य ताः।
प्रथयन्ति बलं बाव्होः सितच्छत्रस्मिताः श्रियः॥' इति

अयं कविर्हयग्रीववधस्य काव्यस्य कर्ता, यस्य सर्गारम्भे श्लोकोऽयम्। शाकुन्तलव्याख्याने राघवभट्टश्चानुवदति—

'उदाहृतंच हयग्रीववधस्थम्—

'यं प्रेक्ष्य चिररूढापि निवासप्रीतिरुज्झिता।
मदेनैरावण मुखे मानेन हृदये हरेः॥' इति॥

अयं च काश्मीरः। मातृगुप्तस्य समये आसीत्। तस्य च समयः क्रैस्त चतुर्थशतकस्य प्रथमोभागः। अस्यापरे श्लोकाः सदुक्ति, कर्णामृते सुभाषितावल्यां च समुदाहृताः।

**भल्लटः**—अस्य श्लोकान् बहून समुदाहरति क्षेमेन्द्रः। अभिनवगुप्तश्च लोचने श्लोकानस्योदाहरति, तदयंमभिनवगुप्ताचार्यतः प्राक्तनः प्रायोऽस्य समयो नवमशतकान्नार्वाचीनः।

**भवभूतिः**—सुप्रथित एष महाकविः। महावीरचरितादिषु नाटकेषु कविरयमात्मानं 'श्रीकण्ठ-पदलाञ्छनः पदवाक्यप्रमाणज्ञो भवभूतिर्नाम' 'अस्ति खलु तत्रभवान् काश्यपः श्रीकण्ठपदलाञ्छनः' 'भट्टश्रीकण्ठपदलाञ्छनोभवभूतिर्नाम' इति सूत्रधारवचनैः ख्यापयति। तत्र श्रीकण्ठ इति पितृकृतं नाम। 'साम्बा पुनातु भवभूतिपवित्रमूर्तिः' गिरिजायाः स्तनौ वन्दे भवभूति सितानतौ' इति भवभूतिपदघटिताद्वर्णनादस्य साङ्केतिकं 'भवभूति'रितिनाम प्रवृत्तमिति केचित्। अपरे तु भवभूतिरित्येवास्य नाम। वश्यवाक्त्वलक्षणा सारस्वतश्रीः कण्ठे यस्य सोऽयं श्रीकण्ठ इति गुणकृतमभिधानमस्येति मन्यन्ते। अनुरूपं चैतत् श्रीकण्ठपदलाञ्छन इति प्रयोगस्य।

'कविर्वाक्पतिराज श्रीभवभूत्यादिसेवितः।
जितो ययौ यशोवर्मा तद्गुणस्तुतिवन्दिताम्॥'

इत्यनेन राजतरङ्गिणीवचनेन यशोवर्मणः समकाल इति विज्ञायते। यशोवर्मणः समयश्च क्रैस्तसप्तमशतकस्यान्तिमोऽष्टमशतकस्यादिमश्च। ( 693-730 A. D. ) अस्यैवोम्बेक इत्यपि नामान्तरम्। शिष्यश्चायं कुमारिलभट्टस्य। प्राचीने हस्तलिखिते मालतीमाधवे—' इति श्रीकुमारिलस्वामिप्रसादप्राप्तवाग्वैभवश्रीमदुम्बेकाचार्यविरचिते मालतीमाधवे षष्ठोऽङ्कः' इति वाक्यं हि समुपलभ्यते। आह च चित्सुखाचार्यस्तत्वप्रदीपिकायां ( निर्णयसागरमुद्रितायां २६५ पत्रे ) भवभूतिर्हि उम्बेक इति। अनेन कुमारिलश्लोकवार्तिकस्य व्याख्या व्यरचीत्यपि विज्ञायते। 'येनाम केचिदिह नः प्रथयन्त्यवज्ञा' मित्येषश्लोको मालतीमाधवस्थः श्लोकवार्तिकव्याख्यायमपि हि समुपलभ्यते। मण्डनमिश्रविरचितभावनाविवेकस्य व्याख्याकाप्युम्बेकेन विरचिताऽस्ति। प्रसिद्धाश्चास्य दृश्यप्रबन्धाः।

**भागवतजयवर्धनः**—अयं जयवर्धनादनन्यः। अस्य कवेरपरेऽपि श्लोकाः सुभाषितावल्यां सदुक्तिकर्णामृते च समुपलभ्यन्ते।

**भारविः**—किरातार्जुनीयस्य कर्ता कविकुलावतंसभूतोऽयम्। श्लाघतेचैनं राजशेखरः

'कृत्स्नप्रबोधकृद्वाणी भारवेरिव भारवेः।' सू. ४४

समयश्चास्य कैस्तं षष्ठं शतकम् । सभाव्यते चैतत् द्वितीयपुलकेशिनोलेखेन ( शक. ५५६.
A. D. 634 )

' येनायोजिनवेश्म स्थिरमर्थविधौ विवेकिना जिनवेश्म ।
सविजयतां रविकीर्तिः कविताश्रितकालिदास भारविकीर्तिः ॥ ' इति ॥

अनेन लेखेन रविकीर्तिः कवितायां भारविकालिदासयोः समानकीर्तिः सप्तमे शतके आसीदिति गम्यते । तथा च तदानीं भारविकालिदासयोः कीर्त्या विततया भाव्यम् । शतकव्यवधानं तु कीर्तिप्रसरणे समपेक्ष्यते । तदयं भारविः षष्ठे शतके इति संभाव्यते ।

**भासः**—श्लाघते कविमेनं राजशेखरः—

भासनाटकचक्रेऽपि छेकैः क्षिप्ते परीक्षितुम् ।
स्वप्नवासवदत्तस्य दाहकोऽभून्न पावकः ॥ ( सूक्ति. ४३ )

तथा बाणश्च श्लाघते हर्षचरिते—

सूत्रधारकृतारम्भैर्नाटकैर्बहुभूमिकैः ।
सपताकैर्यशो लेभे भासो देवकुलैरिव ॥ ( सूक्ति. ४३ )

कालिदासोऽपि सबहुमानं निर्दिशति मालविकाग्निमित्रे—

पारिपार्श्वकः—माताबत् । प्रथितयशसां भास–सौमिल्लक कविपुत्रादीनां प्रबन्धानतिक्रम्य वर्तमानकवेः कालिदासस्य क्रियायां कथं बहुमानः । इति ॥ सोऽयं कालिदासादपि प्राक्तनः । केचन कैस्तसमयतः प्राक्तनं मन्यन्ते । अनेन दृश्यप्रबन्धा बहवो विरचिता इति बाणराजशेखर-वचनतो व्यक्तं विज्ञायते । मामहवामनाभिनवगुप्तप्रभृतयो बहवः कवेरुस्य कृतेः समुदाहरन्ति श्लोकांस्तत्र तत्र स्वनिबन्धे । तत्र स्वप्नवासवदत्ताख्यं नाटकं सुप्रथितम् । ध्वन्यालोकलोचने आचार्या-भिनवगुप्तः समुदाहरति–' यथा स्वप्नवासवदत्ताख्ये नाटके–'विकासितपक्ष्मकपाटं ' इति । नाट्यदर्पण-कारो रामचन्द्रश्चाह (नाट्यदर्पणे) ' यथा भासकृते स्वप्नवासवदत्ते' इति । भोजोऽपि शृङ्गारप्रकाशे स्वप्नवासवदत्तं प्रत्यभिज्ञापयाति । शारदातनयो भावप्रकाशे–' स्वप्नवासवदत्ताख्यमुदाहरणमत्र तु ' इत्यादिना स्वप्नवासवदत्तस्य प्रथमाङ्कादिविषयानुदाहरति । सर्वानन्दः अमरटीकासर्वस्वे शृङ्गारभेदान् निरूपयन् 'तृतीयः स्वप्नवासवदत्ते तस्यैव वासवत्तापरिणयः कामशृंगारः।' इति वदति । तदेवं भास-कृतेषु अभिषेक–प्रतिमा-ऊरुभङ्ग-पाञ्चरात्र–मध्यमव्यायोग–कर्णभार–दूतवाक्य-बालचरित–चारुदत्त –अविमारक–स्वप्नवासवदत्तादिषु नाटकेषु स्वप्नवासवदत्ते भूयानादरः प्राचां विज्ञायते । इदानीं तिरुवनन्तपुरराज्यप्रकाशित संस्कृतप्राचीनग्रन्थमालायां ( Trivandrum sanskrit series ) प्रकाशिते भासनाटकचक्रे भासस्यैव वा अन्यस्य वा कृतिरितिविप्रतिः केषाञ्चिद्वर्तते । सूक्तिमुक्ता-वलीप्रस्तावनाप्रसङ्गेन कविमिममवगमयन्तो वयं न तत्र विवादे अवतरामः ।

**भास्करः**—अस्यैव ज्योतिषिकभट्टभास्कर इति भदन्तभास्कर इति च नामान्तरं सुभाषिता-वली प्रस्तावनायां सूच्यते । अन्यश्च भास्करदेवः सदुक्तिकर्णामृते यो निर्दिश्यते । भास्करस्य श्लोका अपरे सुभाषितावल्यां समुदाह्रियन्ते । कोऽयम् ? ।

**भीमपंडितः**—अस्य नाम्नाऽस्यां सूक्तिमुक्तावल्यां समुदाहृतौश्लोकौ सुभाषितावल्यां **भीमस्येति** । समुदाह्रियेते । कोऽयं भीमः ? । सुभाषितावलीप्रस्तावनायां पीटरसन् महाशयो मन्यते रावणार्जुनीयस्य कर्तारम् । नाम्निच भीमभट्टः भूमभट्टः इति प्रयोगभेदान् प्रदर्शयन् भूमभट्ट इत्येव स्थापयति । प्रदर्शयति प्रमाणतया वाक्यमिदम्—'काव्येऽत्र भूमोदिते' इति । काश्मीरश्चायमिति ।

भीमटः—राजशेखरो वर्णयत्येनम्—

'कालञ्जरपतिश्चक्रे भीमटः पञ्चनाटकीम्
तेषु प्रबन्धराजत्वं प्राप स्वप्नदशाननम् ॥' इति ( सूक्ति. ४६ )

**भूतिमाधवः**—जयमाधवात् पूर्वं विचारितादनन्य एवायम् । योऽयमस्यां सूक्तिमुक्तावल्यामस्य नाम्नोपलक्षितः श्लोकः स सुभाषितावल्यां सदुक्तिकर्णामृते च जयमाधवस्येत्युदाह्रियते ।

**भेरिभांकारः**—कवेरस्य भेरीभाङ्कार इति साङ्केतिकमभिधानमिति प्रतिभाति । देशकालावस्य न ज्ञायेते। सूक्तिमुक्तावल्यां समुदाहृतान् कवेरस्य श्लोकान् पश्यतां नः प्रतिभाति कविरयं कस्यचिद्राज्ञः सभायामात्मनो वयः पूर्वं समतिवाह्य चरमे वयसि निर्विण्णो वाराणस्यां निवसन् ईश्वरपरायणोऽभवत् । इति । इमे चास्य श्लोकाः ।

'सप्तानामयुगान्तसङ्गतिरिहस्यादर्णवानां न किं' ( ३४० ) इ यं च राज्ञः स्तुतिः ।

'कतिपयपुरस्वामी कायव्ययैरपि दुर्ग्रहः
मितवितरिता मोहेनाहो मयाऽनुसृतः पुरा ।
त्रिभुवनपतिर्बुद्ध्याऽऽराध्योऽधुना स्वपद प्रदः ।
पुनरधिगतस्तत्प्राचीनो दुनोति दिनव्ययः ॥' ( ४६० )

अयं राजसेवा निर्वेदमवगमयति श्लोकः ।

'ये तृष्णालहरीपरीतमनसस्ते मानवा निर्भरं
देशेऽन्यत्र वसन्तु हन्त सहसाऽवज्ञाय वाराणसीम् ।
अस्माभिः पुनरत्र शङ्करपुरीमध्ये स्थिरं स्थीयते
स्थातव्यं त्रिदिवापगाजलमिलद्गण्डूष सन्तोषिभिः । ( ३८० )
श्लोकोऽयं कवेर्वाराणसीनिनिवासे दृढाध्यवसायं सूचयति ।

अन्यांश्चास्य श्लोकानत्रोदाहृतान् परामृशतां नः प्रतिभाति वारणस्यामवस्थितेन महादेवस्तुतिरेका व्यरचीति ।

**भोगवर्मा**—( काश्मीरक भोगवर्मा ) कोऽयम् ? । सूक्तिमुक्तावल्यां सुभाषितावल्यां सदुक्तिकर्णामृते च श्लोकेनैकेनैवायमुपलक्ष्यते ।

**भोजदेवः**—धाराधीशः सोयं सरस्वतीकण्ठाभरणशृङ्गारप्रकाशयोः कर्ता काव्यमीमांसाकारात् पश्चात्तनः भावप्रकाशकारात् शारदातनयात्प्राक्तनः कैस्तैकादशशतके आसीत् । अस्यां सूक्तिमुक्तावल्यां कवीन्द्रवचनसमुच्चयादौ च सूक्तिसंग्रहनिबन्धे भोजदेवनाम्ना समुपलक्ष्यमाणाः श्लोकाः सरस्वतीकण्ठाभरणशृंगारप्रकाशयोर्नोपलभ्यन्ते तदस्य कृत्यन्तरेषु अन्वेषणीयाः । विशेषश्चास्य कवीन्द्रवचनसमुच्चयप्रस्तावनायां द्रष्टव्यः ।

**मङ्खणः**—अयं काश्मीरो महाकविः, प्रवराख्यं पुरमस्य जन्मस्थानम्। पिता विश्ववर्ताख्यः अग्रजावस्य शृङ्गारालङ्कारनामानौ। अलङ्कारस्य लङ्कक इति नामान्तरम्। सुस्सलदेवनन्दनेनश्रीजयसिंहमहाराजेन प्रजापरिपालनकर्मणि नियुक्तोऽयं मङ्खकस्तस्यराज्ञः समये क्रैस्तद्वादशशतकस्य पूर्वार्धे आसीत्। अस्य समये लङ्ककस्य सभायां बहवः पण्डिता अभूवन्, नन्दनः रम्यदेवः रुय्यकः लोष्टदेवः श्रीगर्भः मण्डन. श्रीकण्ठः गर्गः देवधरः नागः त्रैलोक्यः दामोदरः जिन्दुकः जल्हणः श्रीगोविन्दः कल्याणः भुड्डः श्रीवत्सः श्यानन्दः पद्मराजः श्रीगुन्नः लक्ष्मीदेवः जनकराजः प्रकटगुप्तः आनन्दः (शम्भुमहाकवेः सुतः) सुहलः गोविन्दचन्द्रः जोगराजः अपरादित्य इत्यादयः। तदिदमखिलं कवेरस्य मङ्खणस्य कृतौश्रीकण्ठचरिते व्यक्तं समुपलभ्यते।

**महामनुष्यः** (काश्मीरक महामनुष्यः) बहवः श्लोकाः कवेरस्य समुदाह्रियन्ते सुभाषितावल्याम्। सदुक्तिकर्णामृते च। नास्य देशकालादिपरिचायकं किमपि।

**माघः**—शिशुपालवधस्य कर्ता सोऽयं महाकविः। श्लाघते चैनं राजशेखरः—

'माघेनेव च माघेन कम्पः कस्य न जायते।
माघेन विघ्नितोत्साहा न सहन्ते पदक्रमे (मम्)।
स्मरन्तो भारवेरेव कवयः कपयो यथा' इति। सू. ४४

अस्य कवेः पिता दत्तकः सर्वाश्रय इति च पितुरस्य नामान्तरम्, पितामहश्चास्य सुप्रभः। सोऽयं सुप्रभः श्रीवर्मलाख्यस्य राज्ञः सर्वाधिकारी समभूत्। तस्य राज्ञः समयः क्रैस्तसप्तमशतकस्य पूर्वार्धम्। (625 A. D.) सुप्रभदेवस्य चायमेव समयः। एतत्पौत्रस्य माघस्य ततः प्रायः पश्चाशद्वर्षैर्व्यवहितः समयः स्यात्। क्रैस्तसप्तमशतकस्यान्त्यो भाग इति तु निर्विवादम्। अस्य कवेः श्लोका बहवः सुभाषितावल्यादिसूक्तिनिबन्धेषु समुदाह्रियन्ते। आनन्दवर्धनाचार्यैर्ध्वन्यालोकेऽस्य श्लोकः समुदाह्रियते॥

**मञ्जुघोषः**—अस्य कवेर्नाम्नाऽस्यां सूक्तिमुक्तावल्यां समुपलक्ष्यते श्लोक एक एव। सच सोमप्रभाचार्यविरचितायां सूक्तिमुक्तावल्यां वर्तते प्रकाशितं चैतत् अस्माभिः कविनामानुक्रमिण्याम्। तत् नेह निबन्धे कवेरस्य कृतिः, सोमप्रभाचार्यस्यैव वा मञ्जुघोष इति नामान्तरं तदिति मन्तव्यम्।

**मदनः**—अयममरुशतकव्याख्याकारस्यार्जुनवर्मदेवस्य गुरुः। अर्जुनवर्मदेवः स्वकृतावमरुशतकव्याख्यायामिदमाह—'यदुक्तमस्मदुपाध्यायेन बालसरस्वत्यपरनाम्ना मदनेन' इति। उदाहरति च तस्य श्लोकांस्तत्र तत्र। तांश्च श्लोकानस्यां सूक्तिमुक्तावल्यां मदनकर्तृकतया निर्दिष्टेषु पश्यन्तो वयं तमेनमेव मदनं सम्भावयामः। अलङ्कारनिबन्धस्य कस्यचित् कर्ताऽयमित्यपि विज्ञायते। समयश्चास्य क्रैस्तत्रयोदश शतकस्याद्यो विभाग इति संभाव्यते।

**मायुराजः**—राजशेखरः श्लाघते कविमेनम्—

मायुराजसमो जज्ञे नान्यः कलचुरिः कविः।
उदन्वतः समुत्तस्थुः कति वा तुहिनांशवः॥ इति (सूक्ति ४६)

अनेन राजशेखरवचनेन कविमेनं कलचुरिकुलालङ्कारभूतं चेदिदेशसंभवं मन्यते महामहोपाध्यायो दुर्गाप्रसादः। संभावयति चैनं रामायणकथानुसारिणो नाटकस्य कर्तारम्। (कर्पूरमञ्जरीप्रस्तावनायाम्) राजशेखरात् प्राचीन इति तु व्यक्तम्। तत् नवमशतकतो नार्वाचीनः।

**मारुला**—इयं मारुला कदा कुत्रासीदिति न विज्ञायते । स्त्रीकविमालायामियं ग्रथ्यते धनददेवेन—

' शीला—विज्जा—**मारुला**—मोरिकाद्याः
काव्यं कर्तुं सन्ति विज्ञाः स्त्रियोऽपि ।
विद्यां वेत्तुं वादिनो निर्विजेतुं
विश्वं वक्तुं यः प्रवीणः स वन्द्यः ॥ इति । ( शार्ङ्गधर )

**माहिलः**—अस्यां सूक्तिमुक्तावल्यां माहिलस्येत्यनूदितः ' कचग्रहमनुग्रहम् ' इत्ययं श्लोकः सुवृत्ततिलके क्षेमेन्द्रेण साहिलस्येत्यनूद्यते । स्यादयं साहिलः । क्षेमेन्द्रात्प्राक्तनोऽयमित्येतावदेव विज्ञायते ।

**मुक्ताकाणः**—कविरयं काश्मीरेष्ववन्तिवर्मणोराज्यसमये आसीत् विज्ञायते चैतद्राजतरङ्गिणीवचनेन—

' मुक्ताकाणः शिवस्वामी कविरानन्दवर्धनः ।
प्रथां रत्नाकरश्चागात् साम्राज्येऽवन्तिवर्मणः ॥ ' इति

समयोऽस्य क्रैस्तं नवमशतकम् ( 855-884 A. D ) अस्य श्लोका बहवः क्षेमेन्द्रेण सुवृत्ततिलकादावुदाहृताः ।

**मुञ्जः**—वाक्पतिराज इत्यस्यैव नामान्तरम् । धाराधीश्वरस्य श्रीभोजराजस्य यः पिता सिन्धुराजस्तस्यायमग्रजः श्री सीयकमहाराजस्यपुत्रः अनेककविवरसमलङ्कृतसमः स्वयं च सुललितवाग्वैभवनिधिः कविलोकप्रियः । समयश्चास्य क्रैस्तदशमशतकस्योत्तरार्धम्

**मुरारिः**—अनर्घराघवस्य कर्ता । पितरावस्य तन्तुमतीवर्धमानकौ । रत्नाकरो हरविजये मुरारिमधिकृत्येदमाह—

' अङ्कोत्थनाटक इवोत्तमनायकस्य
नाशं कविर्व्यधित यस्य मुरारिरित्थम् । ' इति ( हरविजय. ६७ )

तेनायं रत्नाकरात्प्राचीन । इति गम्यते । रत्नाकरस्य समयः क्रैस्तं नवमं शतकम् ।

**मोरिका**—सुभाषितावल्यामपरे चास्याः श्लोकाः समुदाहृताः । धनदः कविरेनां निर्दिशति—

' शिलाबिज्जामारुलामोरिकाद्या ' इति ।

**यशोवर्मा**—अयं कान्यकुब्जाधीश्वरः कर्ता रामाभ्युदयनाटकस्य । गीयते चायं राजतरंगिण्याम् ।

' कविवाक्पतिराजश्रीभवभूत्यादिसेवितः ।
जितो ययौ यशोवर्मा तद्गुणस्तुतिवन्द्यताम् ॥ ' इति ।

आनन्दवर्धनेन ध्वन्यालोके रामाभ्युदयनाटकात् कवेरस्य श्लोकोऽयमुदाह्रियते—

' आक्रन्दाः स्तनितैर्विलोचनजलान्यश्रान्तधाराम्बुभिः ' इति ।

' कृतककुपितै ' रित्यादिश्लोकश्च । तथा लोचनेच—' रामाभ्युदये यशोवर्मणा—स्थितमिति यथा शय्याम् । ' इति । क्षेमेन्द्रेण च सुवृत्ततिलकादावस्य श्लोकाः समुदाह्रियन्ते । भोजेनाप्युदाह्रियन्ते श्रृंगारप्रकाशे । अस्य च यशोवर्मणः समयः क्रैस्ताष्टमशतकस्य प्रथमः पादः ।

**योगेश्वरः**—कविमेनं भवानन्दः श्लाघते

‘ बाणः सृष्टिमपूर्ववस्तुविषयामेकोऽत्र निर्व्यूढवान्
निष्णातः कविकुञ्जरेन्द्रचरिते मार्गे गिरां वा गुरुः ।
वेधा विन्ध्यपुलिन्द पामर वधू भूगोल झंझा निल-
प्रायेऽर्थे वचनानि पल्लवयितुं जानाति **योगेश्वरः** ॥ ’ इति ।

तथा वसुकल्पश्च—

बाणः प्राणिति केशटः स्फुटमसौ जागर्ति **योगेश्वरः**
प्रत्युज्जीवति राजशेखरगिरां सौरभ्यमुन्मीलति । ’ इति । ( सदु. ५–२६. १–३ )

कवीन्द्रवचनसमुच्चये सदुक्तिकर्णामृते चास्य श्लोकाः समुदाह्रियन्ते । विशेषः कवीन्द्रवचनसमुच्चयप्रस्तावनायां सदुक्तिकर्णामृतप्रस्तावनायां च बोध्यः ।

**रत्नाकरः**—अस्य राजानकरत्नाकर इति रत्नाकरवागीश्वर इति रत्नाकरविद्याधिपतिरिति च प्रथितं नाम । कविरयं हरविजयस्य वक्रोक्तिपञ्चाशिकायाश्च कर्ता, अवन्तिवर्मणः समये आसीत् । तथाच राजतरङ्गिण्याम्—

मुक्ताकाणः शिवस्वामी कविरानन्दवर्धनः ।
कवी रत्नाकरश्चागात् साम्राज्येऽवन्तिवर्मणः ।

श्लाघते चैनं राजशेखरः—

मास्म सन्तु हि चत्वारः प्रायो रत्नाकरा इमे ।
इतीव स कृतो धात्रा कवी रत्नाकरोऽपरः ॥ इति । ( सू. मु. ४६ )

समयोऽस्य क्रैस्तं नवमं शतकम् ( 855 A. D. )

विशेषः सुभाषितावलीप्रस्तवनायां द्रष्टव्यः ।

**रविगुप्तः**—कविरयं चन्द्रप्रभाविजयकाव्यस्य कर्ता । आह च यशोधरो वात्स्यायनप्रणीतकामसूत्रव्याख्यायां जयमंगलायाम्—‘ तथा आचार्यरविगुप्तेन चन्द्रप्रभाविजयकाव्ये प्रकरणं पृथक्कृतम् । यथोक्तम्—

गहनप्रसन्नसर्वा कतिपयसूत्रामिमामनन्तमुखीम् ।
अनधीत्याक्षरमुद्रां वादसमुद्रे परिप्लवते ’ । इति

अन्योऽप्यनेन लोकसंव्यवहारनामक निबन्धोऽस्ति विरचितः । सोऽयं यशोधरात् प्राक्तनः

**राजशेखरः**—कविरयं विद्धसालभञ्जिका बालभारत बालरामायण प्रभृतिनाटकानां कर्ता, कर्ताच प्राकृतभाषात्मकस्य कर्पूरमञ्जर्याख्यस्य सट्टक स्य, प्रणेताच काव्यमीमांसायाः प्रथितः कविकुले । जन्म चास्य यायावरकुले । आह च स्वयम्—

‘ यायावरीयः संक्षिप्य मुनीनां मतविस्तरम् ।
व्याकरोत् काव्यमीमांसां कविभ्यो राजशेखरः ॥ ’ इति । ( काव्यमी. प. २ )

गुरुश्चायं महेन्द्रपालस्य । तथा च कर्पूरमञ्जर्याम्—

भाव कहिज्जदु एदं कोभणई रअणिवल्लहसिहण्डो ।
रहुउलचूडामणिणो महेन्द्रपालस्स को अ गुरू ॥ इति

स्तुतश्चायमपराजितेन मृगाङ्कलेखाकारेण—( कर्पूरमञ्जर्याम् )

वालकई कइराओणिम्भयराअस्स तह उव ज्झाओ । इति–

अस्य कवेर्जाया अवन्तिसुन्दरी । आहच कविः कर्पूरमञ्जर्याम्—

चाउहाणकुलमौलिमालिया राअसेहरकइन्देगेहिणी ।
भत्तुणो किदिमवन्तिसुन्दरी सापउज्ज इदुमेदमिच्छदि ॥

कवेरस्य पिता दर्दुकः, माता शीलवती अकालजलदः प्रपितामहः । पूर्वपुरुषा सुरानन्दतरल प्रभृतयः तथाच बालरामायण नाटके प्रस्तावनायाम्—

'समूर्तो यत्रासीद्गुणगण इवाकालजलदः
सुरानन्दः सोऽपि श्रवणपुटपेयेन वचसा ॥
न चान्ये गण्यन्ते तरलकविराजप्रभृतयो
महाभागस्तस्मिन्नयमजनि यायावरकुले ॥

तदामुष्यायणस्य महाराष्ट्रचूडामणेरकालजलदस्य चतुर्थो दौर्दुकिः शीलवतीसूनुः उपाध्यायश्रीराजशेखरः ।' इति ।

'सौजन्याङ्कुरकन्द ××× राजशेखरकवे दृष्टोऽसि यामो वयम्' इति ( सदु. ३·११·२ ) वदति चाभिनन्दः—

अस्य कवेः कृतिभ्यः केचन श्लोकाः सरस्वतीकण्ठाभरण ध्वन्यालोकलोचन काव्यप्रकाश साहित्यदर्पणादिषु समुदाह्रियन्ते ।
अस्य समयः क्रैस्तनवमशकस्यान्तिमः आद्यश्च दशमशतकस्य ।
विशेषः कर्पूरमञ्जरीप्रस्तावनातः काव्यमीमांसा प्रस्तावनातश्चावगन्तव्यः ।

**रामः**—कोऽयं कविः ? । 'अमुष्मिन् लावण्यामृतसरसि' इत्येक एव श्लोकोऽस्यां सूक्तिमुक्तवल्यां अस्य नाम्ना समुपलक्ष्यते । अयमेव सुभाषितावल्यामप्यस्यैव नाम्ना समुपलक्ष्यते । काव्यप्रकाशे चायमनूद्यते । तदयं कोऽपि कविः काव्यप्रकाशकारात्प्राचीन इत्येतावद्गम्यते । 'एका गङ्गा प्रयागे' इत्येष एकः श्लोकः कवेरस्यैव समुदाह्रियते सदुक्तिकर्णामृते ।

**रामिलसोमिलौ**—द्वाविमौ शूद्रककथाकारौ । आह च राजशेखरः–

'तौ शूद्रककथाकारौ रम्यौ रामिलसोमिलौ ।
काव्यं ययोर्द्वयोरासीदर्धनारीश्वरोपमम् ॥' इति ( सूक्ति. ४३ )

कालिदासस्तयोरन्यतरं सोमिलं निर्दिशति मालविकाग्निमित्रे प्रस्तावनायाम् । 'परपुरुषादिव सवितुः' इत्ययं रामिलश्लोकः सुभाषितावल्यामुदाह्रियते । तावेतौ कालिदासात्प्राचीनावित्येतावत् व्यक्तमवगम्यते ।

**रिस्सुकः**—क्षेमेन्द्रः 'विपरीतं यथा रिस्सोः' इति नामनिर्देशपूर्वकं श्लोकमेकमुदाहरति—

स्नातुं वाञ्छसि किं मुधैव धवल क्षीरोदफेनच्छटा-
च्छायाहारिणि वारिणि द्युसरितो डिण्डीरविस्तारिणि ।
आस्ते ते कलिकालकल्मषमषीप्रक्षालनैकक्षमा
कीर्तिः संनिहितैवसप्तभुवनस्वच्छन्दमन्दाकिनी ।' इति ।

सोऽयमेव रिस्सुकः। अयं च श्लोकेनानेन कस्यचिद्राज्ञः सभायामासीदिति विज्ञायते।

**रुदतीब्राह्मणः—**

'विश्रान्तो दिवसस्तटीमयमटत्यस्ताचलस्यांशुमान्
संप्रत्यङ्कुरितान्धकारपट लैलम्बालका द्यौरभूत्।
एह्यन्तर्विश वेश्मनः शशिमुखि द्वारस्थलीतोरण-
स्तम्बालम्बितबाहुवल्लि रुदती किं त्वं पथः पश्यसि॥ (सूक्ति. १४०)

इत्ययमेकएव श्लोकोऽस्य नाम्ना समुदाह्रियते। रुदती किं त्वं पथः पश्यसीति श्लोकसमाप्तौ दृष्टिं विदधता केनचित्कवेरस्य कृतं साङ्किकं नामैतत्। नेतो विज्ञायते किमप्यधिकम्।

**रुद्रः**—सूक्तिमुक्तावल्यां रुद्रस्य नाम्ना निर्दिश्यमाना बहवः श्लोकाः शृङ्गारतिलकात् काव्यालङ्कारादपि समुदाह्रियन्ते। सदुक्तिकर्णामृते शृङ्गारतिलकस्य श्लोका बहवो रुद्रटस्य नाम्ना समुदाह्रियन्ते। तत् विज्ञायते काव्यालङ्कारस्य कर्ता शृंगारतिलकस्य च कर्ता एक एवेति। रुद्रस्यैव रुद्रट इति च नामेति। अत्र केचन मन्यन्ते—काव्यालङ्कारस्य कर्ता 'रुद्रट' इति स्वनाम काव्यालङ्कारे (अ,५) अष्टभिः श्लोकैः संपादिते महाचक्रे श्लोकनिबद्धं ज्ञापयति। सचायं श्लोकः—

शतानन्दापराख्येन भट्टवामकसूनुना।
साधितं रुद्रटेनेदं सामाजा धीमतां हितम्॥ इति।

व्याख्याता नमिसाधुरपि—

पूर्वमहामतिविरचितवृत्त्यनुसारेण किमपि रचयामि।
संक्षिप्ततरं **रुद्रट** काव्यालङ्कार टिप्पणकम्॥
एवं रुद्रटकाव्यालङ्कृतिटिप्पणकविरचनापुण्यम्।

आदावन्ते च **रुद्रट** इत्येव नाम निर्दिशति। काव्यप्रकाशे साहित्यदर्पणे च रुद्रटमतमनूद्यते। रुद्रट इत्येव च तत्रापि नाम्नो निर्देशः। भोजः सरस्वतीकण्ठाभरणे काव्यालङ्कारस्थं 'किं गौरिमां प्रति रुषा' इति श्लोकं समुदाहरति। तदयं दशमशतकतो नार्वाचीनः। व्याख्याता नमिसाधुः कैस्तैकादशशतकोत्तरार्धे आसीदिति तस्यै व व्याख्यान्ते वर्तमानेन

'पञ्चविंशतिसंयुक्तैरेकादशसमाशतैः
विक्रमात् समतिक्रान्तैः प्रावृषीदं समर्थितम्।

इत्यनेन वचनेन विज्ञायते। स एव वदति व्याख्यारम्भे पूर्वमहामति विरचितवृत्त्यनुसारेण किमपि रचयामीति। ततश्च विज्ञायते काव्यालङ्कारवृत्तिकारान्नमिसाधोः प्राक्तनात् काव्यालङ्कारकारो रुद्रटः प्राक्तन इति। तत् प्रायो रुद्रटो नवमशतकान्नार्वाचीनः। शृङ्गारतिलकस्य कर्ता तु रुद्रो रुद्रटादन्य एव, नाम्न्येव भेदात्। अयं हि रुद्रः। तथा च शृङ्गारतिलकान्ते—

त्रिपुरवधादेव गतामुल्लासमुमां समस्तदेवनताम्।
शृङ्गारतिलकविधिना पुनरपि **रुद्रः** प्रसाधयति। इति।

अनेन श्लोकेनायं रुद्रः त्रिपुरवधाख्यस्य कस्याचित् काव्यस्यापि कर्तेति विज्ञायते। यदि काव्यालङ्कारस्य कर्ता अयमेव स्यात् किमिति त्रिपुरवधस्येव तस्य सूचनं नाकरिष्यत्। यदि

काव्यालङ्कारः पश्चात्तनः, तस्मिन् शृङ्गारतिलकं त्रिपुरवधं वा किमिति न सूचितवान् । प्रथते च काव्यालङ्कारो रुद्रटकृतिरिति । रुद्रकृतिरित्येव तु प्रथते शृंगारतिलकम् । सदुक्तिकर्णामृतादि सूक्तिसंग्रहग्रन्थेतु क्रियमाणो नामनिर्देशस्तु प्रस्खलनभूयिष्ठतया नातीव प्रामाण्यमर्हति । नामनिर्देशो हि पश्चात्तनैरप्युल्लिखितः स्यात् । निबन्धकारास्तु काव्यालङ्कारकारं रुद्रटनाम्नैव निर्दिशन्ति । तथाच काव्यप्रकाशे–'तथाह्युक्तं रुद्रटेन' ( ४२५ प. उ. ९ ) इति । साहित्यदर्पणेच– 'रुद्रटस्तु' (  ) इति । रुद्रश्चायं पञ्चतन्त्रसंग्रहकारात् विष्णुशर्मणः प्राचीनः । शृंगारतिलकस्थः 'सार्धं मनोरथशतैरित्ययंश्लोकः पञ्चतन्त्रे चतुर्थे तन्त्रे अनूद्यते । विष्णुशर्मा तु क्रैस्ताष्टमशतकमध्यभागतो न प्राचीनः । यत् जयापीडसमकालिकदामोदरविरचितकुट्टिनीमतस्थः पर्यङ्कः स्वास्तरण इत्येष श्लोकः पञ्चतन्त्रे प्रथमे तन्त्रे अनूद्यते । जयापीडश्च काश्मीरेषु अष्टमशतकोत्तरार्धे आसीत् । इति ।

**लक्ष्मणः**—सेनकुलतिलको वङ्गदेशाधीशो लक्ष्मणः किमन्यो वा ?

**लक्ष्मीधरः**—कोसलेषु कोऽप्यस्य कवेर्ग्रामः । कुलं चास्य भट्टावटङ्कम् । भट्टनरवाहनस्य पुत्रो भट्टाजितः । तस्यायं प्रपौत्रः, वैकुण्ठस्य पौत्रः, श्रीस्तम्भस्य पुत्रः कर्ता चक्रपाणिविजयाख्यस्य काव्यस्य । भोजसमकालिकश्चायम् । तथाच स्वयं चक्रपाणिविजये ( स. १ ) वदति—

'ग्रामोऽस्ति शांडिल्यकुलोद्भतानां गौडेषु भट्टाङ्कितकोसलेषु ।
गङ्गेव नैवोज्झति यत्प्रसूतिरेकान्ततः केशवपादसेवाम् ॥
तत्राननश्रेणिशुचौ विरिञ्चेर्बभूव भट्टो **नरवाहनाख्यः** ।
श्रुतेः समस्कन्धतयाऽऽश्रितानि श्रुत्यन्तराणीव वचांसि यस्य ॥
देवो विवस्वानिव कश्यपस्य तस्याजितो नाम बभूव सूनुः ।
त्रयीमयस्य ज्वलतस्तपोभिर्यस्यार्घ्यमादत्त समस्तलोकः ॥
आकण्ठतृप्तं प्रशमामृतैः स वैकुण्ठनामानमकुण्ठविद्यम् ।
असूत सूनुं स बभूव यस्य विद्यातपोधामसु तत्सनामा (?)
नत्वोपनीतामपि पार्थिवेन्द्रैर्गुणानियं न क्षमते शठेति ।
द्वारिश्रियं स्तम्भयतो बभूव श्रीस्तंभ इत्येवहि यस्य नाम ॥
लक्ष्मीधरो नाम तदाद्यसूनुरनुप्रविष्टः सुजनस्य कक्षाम् ।
ओजोविहीनाऽपि विनाऽपि कान्तिं कृता हरेः कीर्तिसमाधिनेति ।
चन्द्रोदयध्यानपरायणेव कुमुद्वती यस्य न नीरसागीः ।
श्रीभोजदेवेन्दुविराजितायां तस्यां सभापञ्चदशीनिशायाम् ।
विनाऽपि मुद्रामतिबाह्यमेव (?) दूरीकृतं दुर्जनतस्करेण ।
आकर्ण्यतां काव्यमिदं तदीयं जितं यदप्यादिकविप्रबन्धैः । इति
इतश्चास्य समयः क्रैस्तमेकादशशतकम् ॥

**लीलाशुकः**—कृष्णकर्णामृतस्य कर्ता कर्ता च बालगोपालस्तुतेः नाम्ना बिल्वमङ्गलः क्रैस्ते एकादशशतके आसीत् । विशेषः A. B. कीथमहाशयेन विरचिते संस्कृतग्रन्थचरिते द्रष्टव्यः ।

**लोष्टसर्वज्ञः**—मङ्खकः स्वकृतेः श्रीकण्ठचरितस्यान्ते स्वसमकालं यं लोष्टदेवं रम्यदेवसूनुं काश्मीरं वर्णयति—

'वाग्देवतालिनीलीलाघुतपक्षतिचातुरीम् ।
वदनाम्बुरुहे यस्य भाषाः षडतिशेरते ॥
खलानां यत्प्रबन्धेषु दृढव्युत्पत्तिवर्त्मसु ।
प्रोद्यच्चोद्यमया दूरेकुण्ठिता इव पत्रिणः ॥' इति ।

स एवायं सर्वज्ञपदविशेषितो लोष्टकमहाकविः । श्रीमान् दुर्गाप्रसादः पण्डितप्रवरः प्राह—'जल्हण-संकलितसूक्तिमुक्तावलौ च

प्रकृत्यैवातिवक्रेण गुणदैर्घ्यं वितन्वता ।
मया शरासनेनेव बाणो दूरं निरस्यते ॥

इत्ययं श्लोको लोष्टदेवनाम्ना समुद्धृतो वर्तते' इति । अस्मदुपलब्धेषु पुस्तकेषु लोष्टदेवस्येति स्थाने लोष्टसर्वज्ञ इति । तत् लोष्टदेवात् लोष्टसर्वज्ञोऽनन्य एव । समयश्चास्य स एव मङ्खकस्य ।

**वत्सराजः**—कविरयं रूपकषट्कस्य कर्ता । समयश्चास्य 1163-1203 A. D. रूपक-षट्कप्रस्तावनायां विशेषो द्रष्टव्यः ( G. O. S. No. 8 )

**वररुचिः**—असौ शब्दशास्त्रप्रवर्तकेषु त्रिषु मुनिषु पाणिनिप्रभृतिष्वन्यतमः प्रथितो वार्तिक-कारः—वार्तिकं च सूत्रमनुप्रवृत्तं शाब्दं शास्त्रम् । अनेन काव्यमप्येकं व्यरचीति ख्यायते नाम । आह राजशेखरः—

'यथार्थता कथं नाम न स्याद्वररुचेरिह ।
व्यधत्तकण्ठाभरणं यः सदारोहणप्रियः । इति ( सू. ४३ )

तथा—महाभाष्ये 'वाररुचं कव्य' मितिच पतञ्जलेर्निर्देशः । सुभाषितावलीप्रस्तावनायां विशेषो द्रष्टव्यः । प्रायः पाणिनेः समकालो वा पश्चात्तनो वा महाभाष्यकारात् पतञ्जलेः प्राक्तनः । क्रैस्ततः पूर्वं शतकत्रयतो नार्वाचीनः ।

**वराहमिहिरः**—प्रथितोऽयं निबन्धकारो ज्योतिःशास्त्रविदामग्रेसरो बृहज्जातकस्य बृहत्संहिता-याश्च कर्ता । अस्य समयः क्रैस्तं षष्टं शतकम् ( 587 A. D. ) अस्यैवाचार्यस्य बृहत्संहितास्थः 'आर्तस्य यानमशनं च बुभुक्षितस्य' इत्येष श्लोक एकः अस्मदुपलब्धेषु सूक्तिमुक्तावल्याः पुस्तकेषु नैकस्मिन्नप्युपलभ्यमानः श्रीमद्भिर्भण्डरकरमहाशयैः क्वचन सूक्तिमुक्तावलीपुस्तके परिदृष्टः प्रकाश्यते । ( Collected Works of Sir R. G. Bhandarkar Vol. II Page 401 )

**वर्धमानः**—कोऽयम् ? यो वर्धमानसूरिरार्हतः उपदेशपदटीकाकारः पञ्चाधिकपञ्चाशद्युक्ते संवत्सरसहस्रे आसीत् । उत मुरारेः पिता वर्धमानः ?

**वल्लभदेवः**—यो व्याख्याता देवीशतकस्यानन्दवर्धनविरचितस्य, तस्य कैयटस्य पितामहोऽयं प्रायोऽयं स्यात् । स ह्याह—देवीशतकव्याख्यानान्ते—'वल्लभदेवायनि-तश्चन्द्रादित्यादवाप्य जन्मेमाम् । कैयटनामाऽरचयत् व्याख्यां देवीशतकस्यान्ते । वसुमुनि-

गनोदधिसमकाले याते कलेस्तथालोके। द्वापञ्चशे वर्षे रचितेयं भीमगुप्तनृपे।' इति अनेन विज्ञायते कैयटसमयः क्रैस्तं दशमं शतकमिति। ( 977 A. D. ) अस्य पितामहेनानेन वल्लभदेवेन ( 900 A. D. ) समये भाव्यम्। सूक्तिमुक्तावल्याः सङ्ग्रहकारो वल्लभदेवस्त्वितोऽर्वाचीनः यस्तु वल्लभदेवो माघादिव्याख्याकारः प्रायोऽयंस्यात्। स एवायमिति न किममप्यवधारकं लिङ्गमुपलभ्यते। प्राक् प्रकाशवर्षविचारावसरे माघव्याख्यान्तिमश्लोकमशुद्धिसंवलितमवलंब्य कथमपि संशोध्य कालसंभावनामत्रेण प्रायः कैयटस्य पितामहो माघव्याख्याता भवितुमर्हतीत्येतावत् संभावितमस्माभिः अत्र विशेषः सदुक्तिकर्णामृतप्रस्तावनायामवलोकनीयः।

**वल्लालसेनः**—अयं वङ्गदेशाधीशः पिता लक्ष्मणसेनस्य अद्भुतसागरस्य निवन्धस्य रचयिता, असमाप्त एव निबन्धे पुत्रे लक्ष्मणसेने विन्यस्तराज्यमरोदिवं ययौ। सच लक्ष्मणसेनः तन्मनोरथं पूरयामास तथा च श्लोकाः—

"शाके नवखेन्द्वब्दे आरेमेऽद्भुतसागरम।
गौडेन्द्रकुञ्जरालानस्तम्भबाहुर्महीपतिः।
ग्रन्थेऽस्मिन्नसमाप्त एव तनयं साम्राज्यरक्षामहा—
दीक्षापर्वणि दीक्षक्षणान्निजकृते निष्पत्तिमभ्यर्थ्य सः
नानादानचिताम्बुसंचलनतः सूर्यात्मजासंगमं
गंगायां विरचय्य निर्जरपुरं भार्यानुयातो गतः।
श्रीमल्लक्ष्मणसेनभूपतिरतिश्लाघ्यो यदुद्योगतो
निष्पन्नोऽद्भुतसागरः कृतिरसौ वल्लालभूमीभुजः॥ इति।

समयश्चस्य क्रैस्तमेकादशशतकम्। विशेषः सदुक्तिकर्णामृतप्रस्तावनायमवलोक नीयः॥

**वसुनागः**—एतन्नाम्ना समुपलक्ष्यमणः श्लोक एकएव। सच राजशेखरकृतावुपलभ्यते। आकरेऽवलोक्यताम्। अथैवं सति कवेरस्य विमर्शे न नः प्रयोजनम्।

**वसुन्धरः**—कवेरस्यापरेऽपि श्लोकाः श्रीधरदासेन सदुक्तिकर्णामृते संगृह्यन्ते। तदयं श्रीधरदासाल्लक्ष्मणसेनसमकालात्प्राक्तन इत्येतावद्वक्तुं शक्यते। नेतोधिकम्।

**वस्तुपालः**—अयं गुर्जरमण्डलेश्वरस्य वीरधवलदेवस्य प्रधानामात्यः, भ्रातास्य तेजःपालः, वैक्रमे ( सं ) त्रयोदशशतके आसीत्। विज्ञायते चैतत् गिरिनारपर्वतस्थशिलालेखैः ( काव्यमाला ८० प्राचीनलेखमालाभागः २ लेखाङ्कः—१६८–१७३ )

**वाकूटः**—अस्य श्लोकाः सदुक्तिकर्णामृते कवीन्द्रवचनसमुच्चेय च समुदाहृताः नास्य देशकालादिर्विशेषो विज्ञायते। कवीन्द्रवचनसमुच्चयप्रस्तावनायां सदुक्तिकर्णामृतप्रस्तावनायां च द्रष्टव्यम्।

**वाक्पतिनाथः**—कोऽयम्? वाक्पतिराज एव वा अन्योवा?। परमस्य नाम्ना समुपलक्ष्यमाणाः श्लोकाः खण्डप्रशस्तौ हनुमत्कृतायां समुपलभ्यन्ते। तदिह वाक्पतिनाथः कोऽयमिति विचारोऽपि नापेक्ष्यते।

**वाग्भटः**—अलङ्कार शास्त्रस्य प्रणेता वाग्भटएकः, अपरो वाग्भटः अष्टाङ्गहृदयाख्यस्य वैद्यशास्त्रस्य प्रणेता। तयोरलङ्कारशास्त्रप्रणेता वाग्भटः अणहिल्लपाटकपुराधीश्वरस्य जयसिंहदेवस्य कर्णदेवनृपसूनोः अमात्यः कविप्रवरश्चासीत्। अस्यैव बाहड इति च नामान्तरम्। पिताऽस्य सोमः। 'बंभण्ड सुत्तिसंपुड × × × सिरिबाहडेत्ति तणयो आसि बुहोतस्स सोमस्स।' इतीमं वाग्भटालङ्कारस्थं सङ्करालङ्कारोदाहरणं व्याचक्षाणेन दिनवर्धनसूरिणा इदमभिहितम्–'एतद्ग्रन्थकारेण स्वनामसहितं सङ्करालङ्कारोदाहरणं भणितम्।' इति। समुच्चयालङ्कारोदाहरणे नगरीं राजानं च वर्णयति–'अणहिल्लपाटकपुरमवनिपतिः कर्णदेवनृपसूनुः' इति। प्रभावचन्द्रमुनीद्रविरचितप्राभाविकचरित्रे विशेषतोऽस्य चरित्रमुपवर्ण्यते। समयश्चास्य कैस्तं द्वादशशतकम् (1123. A. D.) अष्टाङ्गहृदयप्रणेता वाग्भटस्तु सिंहगुप्तसूनुः कैस्तसप्तमशतकपूर्वार्धतोनार्वाचीनः। (671) सप्तमशकोत्तरार्धे भारतदेशं सञ्चरन् इट्सिङ्गनामकस्तमेनं वाग्भटं प्रस्तौतीति कीथ महाशयो वदति।

**वात्स्यायनः**—कामसूत्रस्य प्रणेता सोऽयं प्रायः कैस्ताब्दीतः प्राक्तन इति संभाव्यते।

**वादीश्वरकाञ्चनः**—धनञ्जयविजयव्यायोगस्य कर्ता काञ्चनः, वादी श्वरापरनाम्नो नारायणस्य सूनुर्जयदेवनाम्नो राज्ञः समायामासीत्।

**वामनः**—अयं काव्यालङ्कारसूत्राणां प्रणेता भवभूतेः कृतीरुदाहरति, ध्वन्यालोकलोचने प्रथमोद्योते 'वामनाभिप्रायेणायमाक्षेपः भामहाभिप्रायेणतुसमासोक्तिरित्यमुमाशयं हृदये गृहीत्वा समासोक्त्याक्षेपयोरिदमेकमेवोदाहरणं व्यतरत् ग्रन्थकृत्' इति व्याचक्षते अभिनवगुप्ताचार्याः, तेनायं भवभूतेः पश्चात्तनः प्राक्तनश्चानन्दवर्धनात् इति विज्ञायते। 'मनोरथः शङ्खदत्तश्चटकः सन्धिमांस्तथा। बभूवुः कवयस्तस्य वामनाद्याश्च मन्त्रिणः' इति राजतरङ्गिणीवचनतो जयापीडसमये सोऽयमासीदिति च विज्ञायते। जयापीडस्य समयः कैस्तमष्टमशतकम्। काशिकावृत्तिकारस्तु इतोऽन्यः। यतः काशिकावृत्तेः पठनपाठनप्रचारः सप्तमशतकएवासीत्, भारततीर्थयात्रार्थंचीनादेशतः समागतस्य हुएन्त्सङ्गनाम्नश्चरिते चैतद्विज्ञायते। पण्डितमहामहोपाध्यायदुर्गाप्रसादविरचित काव्यालङ्कारप्रस्तावनायां व्यक्तम्।

विकटनितम्बा—राजशेखरो वर्णयत्येनाम्

'के वैकटनितंबेन गिरांगुम्फेन रञ्जिताः।
निन्दन्ति निजकान्तानां न मौग्ध्य मधुरं वचः॥' इति। (सूक्ति. ४७)

इममेव राजशेखरश्लोकं भोजः शृङ्गारप्रकाशे 'पुन र्भूविषये यथे'त्युदाहरति। सुभाषितावलीप्रस्तावनायां कवीन्द्रवचनसमुच्चयप्रस्तावनायां च विशेषो द्रष्टव्यः।

**विक्रमादित्यः**—यस्य सभायां कालिदासो महाकविरासीत् अस्य समयदेशादि प्राक् निरूपितेन कालिदासदेशकालविमर्शेनैवव्यक्तम्।

**विज्ञानात्मा**—अस्य नाम्ना समुपलक्ष्यमाणः 'रम्यं हर्म्यतलमिति श्लोकः सदुक्तिकर्णामृतेऽपि अस्यैव नाम्ना समुपलक्ष्यते। भर्तृहरिशतके चायमुपलभ्यते।

**विद्यापतिः**—अनेन डाहालाधीश्वरस्य कर्णमहाराजस्य सदसि समवस्थितेन लब्धविद्यापतिपदेन केनचित् कविना भाव्यम्। यत् स्तौति विद्यापतिः कर्णम्—

त्वं द्वित्राणि पदानि गच्छसि महीमुल्लङ्घ्य यान्ति द्विषः
त्वं बाणान् दश पञ्च मुञ्चसि बहून्यस्त्राणि मुञ्चन्ति ते ।
ते देवीपतयः तवासिनिहताः त्वं मानुषीणां पतिः
ते निन्द्यास्तव वर्णनं कथमिति श्रीकर्ण निर्णीयताम् ॥

( विद्यापतेः सदु–३·१३·४ )

कर्ण चक्षुरजीगण–तव पितुस्तातः पिता ते पुनः
शल्क्याधारकुमारमण्यजगणत्त्वं कातरत्वेन सः ।
देवो गां महिषीति पश्यति, जगत्तत्त्वं विवेक्तुं पुनः
प्रागल्भ्यं प्रथयन्ति वस्तदपि च प्रज्ञाघनाः साधवः ॥ इति ॥

( विद्यापतेः सदु. प्र. ३. वी. ५४ श्लो. २ )

कर्णसभायां प्रधानः कविः कोऽपि विद्यापतिरासीदित्येतत् ज्ञापयत्ययं च श्लोकः—

‘ वल्मीकप्रभवेण रामनृपतिर्व्यासेन धर्मात्मजो
व्याख्यातः किल कालिदासकविना श्रीविक्रमाङ्को नृपः ।
भोजश्चित्तप बिल्हण (?) प्रभृतिभिः **कर्णोऽपि विद्यापतेः** ।
ख्यातिं यान्ति नरेश्वराः कविवराः स्फारैर्न भेरीरवैः ॥ इति ।

( सुभाषितावली १८६ )

आस्मिन् श्लोके बिल्हणेति प्रामादिकः पाठः प्रतिभाति । भोजसमये बिल्हणो यद्यप्यासीत् किन्तु तस्य समागम एव नासिदिति बिल्हणवचनेनैव विज्ञायते । तथाच विक्रमाङ्कदेवचरिते श्लोकः—( सर्गः १८. श्लो. ९६ )

भोजः क्ष्माभृत् स खलु न खलैस्तस्य साम्यं नरेन्द्रैः
तत्प्रत्यक्षं किमिति भवता नागतं हा हताऽस्मि ।
यस्य द्वारोड्डमरशिखरक्रोडपारावतानां
नादव्याजादिति सकरुणं व्याजहारेव धारा ॥ इति ।

अथैवं सति कः प्रसङ्गो बिल्हणस्य भोजदेवोपवर्णने । कर्णश्चायं डाहालक्ष्मापतिः, अस्य सभायां गङ्गाधरो नाम कविरासीत्, स च मया जित, इति बिल्हणो वदति—

‘ कान्तः कालञ्जरगिरिपतेः यः प्रयाणे धरित्रीं
तुरुष्काराणां खुरपुटरवैः क्ष्मापशून्यां चकार ।
श्रीडाहालक्षितिपरिबृढः सोऽपियं प्राप्य वृत्तं
कर्णः कर्णामृत रसास्वादमन्तस्तताान ॥ ( वि. १८. ९३ )
“ नीत्वा गङ्गाधरमधरतां डाडलाधीशधाम्नि
क्रीडाक्रान्तप्रतिभटकवेः पूर्वदिक्कोटरेषु ।
निर्जित्यैरावतमदजलभ्रान्तभृङ्गालिनादान्
सुत्राम्णोऽपि श्रवण लुठितं यस्य शङ्के कथाभिः इति ( १८,९५ )

तस्यास्य कर्णस्य समयएवास्य विद्यापतेः । कै. एकादशशतकस्योत्तरार्धमिति ।

**विभाकरवर्मा**—अयं कदा कुत्राभूदिति न विज्ञायते । अस्य श्लोकाः सदुक्ति कर्णामृते सुभाषितावल्यां च समुदाह्रियन्ते ।

**विशाखदेवः**—मुद्राराक्षसनाटकस्य कर्ता कश्चिन्महाराजः, पृथोः पौत्रः वटेश्वरदत्तस्य पुत्रः, विशाखदत्त इत्यपि नामान्तरम् । अ .य श्लोकः काव्यप्रकाशे समुदाहृतः । तमेनं अष्टमशतकस्थं संभावयन्ति ।

**विश्वेश्वरः**—वाराणस्यां कश्चित् विश्वेश्वरनामा कविः वैक्रमत्रयोदशशतकप्रथमभागे आसीत् । विज्ञायते चैतत् मेरुतुङ्ग सूरिविरचिते प्रबन्धचिन्तामणौ । तथाहि तत्रत्यं वाक्यम्–' कस्मिन्नप्यवसरे विश्वेश्वरनामाकविर्वाराणस्याः श्रीपत्तनमुपागतः श्रीहेमसूरीणां संसदि प्राप्तः, तत्र कुमारपालनृपतौ विद्यमाने सः ' इत्यादि । तथा कुमारपालचरितमहाकाव्ये—

' पञ्चलक्षाणि द्रम्माणां दशचोच्चैस्तुरंगमान् ।
विश्वेश्वराय कवये तुष्टः श्रीकुमरो ददौ ॥
सार्धं नृपतिना सोऽथ विश्वेश्वरकविर्ययौ ।
श्रीहेमसूरिशालायां विद्वद्गोष्ठीरसेरितः ॥ ' इति ।

कुमारपाल नृपतेश्च समयः कैस्तं द्वादशशतकम् ।

**वैद्यभानुपण्डितः**—सूक्तिमुक्तवल्या अस्याः जल्हणस्य नाम्ना प्रथितायाः प्रणेता । आकरसूच्यां अस्य श्लोकाः सूक्तिमुक्तावल्यामेव वर्तन्ते । अतः पृथगाकरो न प्रदर्शितः । अस्य कालदेशादि प्रस्तावनारम्भे निरूपितम् ।

**शकवृद्धिः**—अस्य श्लोकाः सुभाषितवल्यां शार्ङ्गधरपद्धतौ च समुपलभ्यन्ते ।

**शङ्करगणः**—कवेरस्यापरोऽपि श्लोकः सुभाषितावल्यमुपलभ्यते सरस्वतीकण्ठाभरणे श्लोकोऽस्य समुदाहृतः ।

**शङ्करवर्मा**—अयमवन्तिवर्मणः पुत्रः, अस्य नाम्ना समुपलक्ष्यमाणः श्लोकस्तु राजशेखरकृतौ बालरामायणे वर्तते । तदत्रास्य न प्रसङ्गः ।

**शाण्डिल्यः**—अस्य नाम्ना अस्यां सूक्तिमुक्तावल्यां समुपलक्ष्यमाणः श्लोकः सुभाषितावल्यामप्यस्ति नेतोऽधिकं विज्ञायते ।

**शिलाभट्टारिका**—राजशेखरः समुपवर्णयत्येनाम् ।

' शब्दार्थयोः समो गुंफः पाञ्चालीरीतिरुच्यते ।
शिलाभट्टारिकावाचि बाणोक्तिषु च सा यदि ॥ ' इति ( सू. ४७ )

धनददेवश्च प्रस्तौति–शीला बिज्जा मारुला मोरिकाद्याः इति । विशेषः सुभाषितावलीप्रस्तावनायां सदुक्तिकर्णामृत प्रस्तावनायां च द्रष्टव्यः ।

**शिवस्वामी**—अयमवन्तिवर्मणः सभायामासीत् ।

'मुक्ताकाणः शिवस्वामी कविरानन्दवर्धनः ।
प्रथां रत्नाकरश्चागात् साम्राज्येऽवन्तिवर्मणः ॥'

इति राजतरंगिण्याम् । समयश्चास्य 855-885 A. D.

**श्रीपालकविराजः**—अयमार्हतमतानुयायी कविराजः कविचक्रवर्ती च ख्यातः गुर्जरेश्वरस्य सिद्धराजापरनाम्नो जयसिंहदेवस्य बालमित्रं समयश्चास्य संवत् ११५१–१२१० क्रैस्त द्वादशशतक-पूर्वार्धम् । समुपवर्णितश्चायं कविः ।

'प्राग्वाटान्वयसागरेन्दुरसमप्रज्ञः कृतज्ञः क्षमी
वाग्मीसूक्तिसुधानिधानमजनि श्रीपालनामा कविः ।
यं लोकोत्तरकाव्यरंजितमतिः साहित्यविद्यारतिः
श्रीसिद्धाधिपतिः कवीन्द्र इति च भ्रातेति च व्याहरत् ।'

इति कुमारपालप्रतिबोधप्रान्ते ।

एकाहनिष्पन्नमहाप्रबन्धः श्रीसिद्धराजप्रतिपन्नबन्धुः ।
श्रीपालनामा कविचक्रवर्ती सुधीरिमं शोधितवान् प्रबन्धम् ॥

इति च हेमचन्द्रसूरीयद्विसन्धानकाव्यप्रान्ते ।

**श्रीहर्षः**—अयं हर्षदेवोमहाराजः कविकुलमणिः रत्नावल्यादेर्नाटकस्य कर्ता, यस्य सभायां बाणमयूराद्यः कवयः आसन् । विप्रतिपद्यन्ते केचन नायं रत्नावल्यादेः कर्ता, किन्तु बाणोमहाराजं प्रीणयन् स्वयं विरच्य तन्नाम्नाख्यापितवानिति । इदं तु न मन्यन्ते प्रमातारः । बिल्हणश्च विक्रमाङ्क-देवचरिते १८ सर्गे ६४ श्लोके हर्षं वर्णयन् काव्यरचनायां श्रीहर्षादप्यधिकनिपुणं कथयति । सुभाषितावली–सदुक्तिकर्णामृत–कवीन्द्रवचनसमुच्चय प्रस्तावनासु विशेषो द्रष्टव्यः ।

**श्रीहर्षपण्डितः**—अयं नैषधीयचरितस्य खण्डनखण्डखाद्यस्य च कर्ता पण्डितकुलमण्डनं कविप्रवरः, पिताऽस्य श्रीहरिः, माता मामल्लदेवी, कान्यकुब्जाधीश्वरेण जयन्तचन्द्रेण आसनताम्बूलप्रदानेन संमानितः । समयश्चास्य ( 1169 A. D. ) क्रैस्तं द्वादशं शतकम् । इति नैषधीयचरितप्रस्तावनायां श्रीमान् शिवदत्तशर्मा । केचन नवमं शतकं दशमं शतकं वा मन्यन्ते, सर्वमेतत् तस्यामेव प्रस्तावनायां विस्तरशो निरूपितम् । सुभाषितावलीप्रस्ता-वनायां सदुक्तिकर्णामृतप्रस्तावनायां च विशेषो द्रष्टव्यः ।

**श्रुतधरः**—अयं कविर्धोयीक इति स्वनाम्ना ख्यातो लक्ष्मणसेनस्य वङ्गदेशाधीश्वरस्य समये आसीत् ।

'गोवर्धनश्च शरणो जयदेव उमापतिः ।
कविराजश्च रत्नानि समितौ लक्ष्मणस्य च ॥'

इति श्लोकेन निरूपितान् लक्ष्मणसेनसभायां समवस्थिताम् कवींश्चतुरोऽपि वर्णयन्नयं श्लोकः प्रवर्तते—

'वाचः पल्लवयत्युमापतिधरः, सन्दर्भशुद्धिं गिरां
जानीते जयदेव एव, शरणः श्लाघ्यो दुरूह द्रुतेः ।
श्रृंगारोत्तरसत्प्रबन्धरचनैराचार्यगोवर्धन-
स्पर्धी कोऽपिन, विश्रुतः **श्रुतधरो धोयी** कविक्ष्मापतिः ॥' इति ।

अनेन श्लोकेन धोयीकविः श्रुतधर इति कविराज इति विश्रुत इति च विज्ञायते । सदुक्ति-कर्णामृतप्रस्तावनायां च दीयतां दृष्टिः । समयोऽस्य लक्ष्मणसेनस्येति व्यक्तम् ।

**सीत्काररत्नम्**—कोऽयम् ?

समादिष्टं शिष्टैः परममिहयन्निर्वृत्तिपदम्
× × × स सीत्कारः पायादमृतविजयी सुन्दरदृशाम् ।' सू. २७७

इति सीत्कारवर्णनवैचित्र्यमूलकमिदं सीत्काररत्न इति साङ्केतिकं नाम ।

**सुबन्धुः**—वासवदत्ताख्य काव्यस्य कर्ता प्रथितः कविः वासवदत्तायां धर्मकीर्तिविरचित बौद्धसंगतिग्रन्थोऽनूद्यते । षष्ठशतकस्थाद्धर्मकीर्तेः पश्चात्तनः समयोऽस्य सप्तमशतकपूर्वार्धम् सुभाषितावलीप्रस्तावनायां सदुक्तिकर्णामृतप्रस्तावनायां चावलोक्यताम् ।

**सोमकविः**—अयमेव सोमदेव इत्यपि प्रथितः । कथासरित्सागरस्य कर्ता काश्मीरमहा-राजस्य समकालः समयश्चास्यक्रैस्तमेकादशं शतकम् । सुभाषितावलीप्रस्तावनायामालोक्यताम् ।

**सोमप्रभसूरिः** ( सोमप्रभाचार्यः ) सूक्तिमुक्तावल्याः कर्ता च कर्ता च कुमारपालप्रतिबोधस्य । समयोऽस्य क्रैस्तद्वादशशतकस्योत्तरार्धम् ।

हनुमान्—महानाटकस्य खण्डप्रशस्तेश्च कर्ता प्रथितः । सदुक्तिकर्णामृतादावस्य श्लोकाः समुपलभ्यन्ते ।

**हरिहरः**—शिवदत्तशर्मविरचितनैषधीयचरितप्रस्तावनायामिदमनूद्यते–'राजशेखरोऽपि स्वग्र-न्थैकखण्डे प्रसङ्गतोऽवर्णयत्, नैषधीयस्य प्रथमपुस्तकं **हरिहरो** गुजरातेति ख्यातदेशं वीर धवलनामानि राजनि वसुमतीं शासत्यानयत्, तत्पुस्तकाच्च वीरधवल प्रधानामात्यो **वस्तुपालो** नामान्यदेकं पुस्तकमवतारयामासेति, तेनास्य समयो वस्तुपालसमय एवेति विज्ञायते । वस्तुपाल-समयश्च प्राक्निरूपितः ।

**हेमचन्द्रसूरिः**—अयं प्रख्यात अर्हतमतानुयायी साधुप्रवरः समधिगताचार्यपदः । अयमेव हेमसूरिः । समयोऽस्य क्रैस्तैकादशशतकस्योत्तरार्धम्' द्वादशशतकप्रथमभागश्च । असौ सिद्धराज समये कुमारपालसमयेचासीत् । अनेन बहवोनिबन्धा विरचिताः ।

एतावता निबन्धेन विचारपदवीमुपनीतेभ्यः कविभ्योऽन्येऽपि कवयोऽस्यां सूक्तिमुक्तावल्यां-निर्दिष्टानाम, परं येषां देशकालकृत्यादि न किञ्चिदुपलभ्यते तान् निर्दिश्य 'न किञ्चिद्विज्ञायते' इति विलेखने न लाभ इति तेऽस्मिन् सन्दर्भे न गृहीताः । आकरानुक्रमण्यां तेषां नामानि व्यक्तानि नाम । यद्यपि सूच्याः सूचीपत्रे (Catalogus Catalogorum) अत्रत्यानां कोषांचिदस्ति नामनिर्देशः, नाम्ना

सजातीया अपि बहवः स्युः । परं ते जल्हणात् प्राक्तनाः पश्चात्तनावेति यावन्न निश्चेतुं शक्नुमः तावत् नातीव प्रयोजनं ततः । अतस्तदन्वेषणप्रयासो नादृतोऽस्माभिः । विमर्शकुशलैर्महाशयैस्तत्र तत्र प्रविश्य समुन्नेयमित्याशास्महे । अथ प्रक्रान्तां प्रस्तावनाम् परिसमापयन्तोवयमग्रतः प्रसरामः ।

अस्याः संशोधने सहायतया समादृतानि पुस्तकानि पञ्च, एकं क. संज्ञितं यदुगिरिसपत्कुमार श्रीयतिराजस्वामिनाम् अपरं ख. संज्ञितं मद्रास ओरियण्टल् लैब्रेरीतः समाजीतम्, अपरं च. संज्ञितं महीशूर राजकीयपुस्तकालयरस्थम्, अन्यत् ग. संज्ञितं वडोदराराजकीयप्राच्यविद्यालयस्थं ( गयकवाड ओरियण्टल इन्सूट्यूटस्थं ) सूक्तिमुक्तावलीसंग्रहाख्यं पुस्तकम्, इतरत् पूनाभण्डारकर पुस्तकालयतः समानीतं सूक्तिमुक्तावलीसंग्रहाख्यं पुस्तकम् इति । तान्येतान्यवलम्ब्य परिशोधितमेतत् सत्यपि प्रामादिके प्रस्खलने गच्छतः स्खलनमिति न्यायेन सहृदयैः पण्डितैर्दोषमपश्यद्भिः सन्तोष्टव्यमित्यभ्यर्थयामः । श्रीमता चिदंबरनगरस्थेन वेदान्तशिरोमणिना. एं. विजयराघवाचार्येण आकरान्तेणणे महत् साहाय्यं कृतम्, अभिनन्द्यामश्चतदीयं साहाय्यम् ।

पं. कृष्णमाचार्यः ( श्रीरंगम् ) वडताल,

संस्कृतपाठशालाप्रधानपण्डितः

# विषयानुक्रमणी


| | | |
|---|---|---|
| अनुक्रमणिकाप्रकरणम् | ... | १–७ |
| नमस्कारपद्धतिः | ... | ८-१५ |
| आशीर्वादपद्धतिः | ... | १६–३५ |
| सुभाषितप्रशंसा | ... | ३६ |
| सामान्यकविकाव्यप्रशंसा | ... | ३७–४१ |
| विशेषकविकाव्यप्रशंसा | ... | ४१–४९ |
| कुकविपद्धतिः | ... | ५०–५१ |
| सुजनपद्धतिः | ... | ५२–५५ |
| मनस्विपद्धतिः | ... | ५६ |
| दुर्जनपद्धतिः | ... | ५७–६० |
| कृपणपद्धतिः | ... | ६१–६२ |
| अन्योक्तयः | ... | ६३–१२९ |
| रविपद्धतिः | ... | ६३–६४ |
| चन्द्रपद्धतिः | ... | ६५–६७ |
| वायुपद्धतिः | ... | ६८ |
| मेघपद्धतिः | ... | ६९–७० |
| कोकिलपद्धतिः | ... | ७१-७३ |
| हंसपद्धतिः | ... | ७४-७५ |
| मयूरपद्धतिः | ... | ७६ |
| काकपद्धतिः | ... | ७७-७८ |
| बकपद्धतिः | ... | ७९–८० |
| भ्रमरपद्धतिः | ... | ८१-८२ |
| खद्योतपद्धतिः | ... | ८३ |
| चातकपद्धतिः | .... | ८४–८५ |
| सिंहपद्धतिः | ... | ८६–८७ |
| गजपद्धतिः | ... | ८८–८९ |
| करभपद्धतिः | ... | ९०–९१ |
| धवलपद्धतिः | ... | ९२ |
| हरिणपद्धतिः | ... | ९३–९४ |
| समुद्रपद्धतिः | ... | ९५–९७ |
| रत्नपद्धतिः | ... | ९८–९९ |
| शङ्खपद्धतिः | ... | १००–१०१ |
| नदीपद्धतिः | ... | १०२ |
| सरःपद्धतिः | ... | १०३–१०४ |
| कमलपद्धतिः | ... | १०५–१०६ |
| वृक्षसामान्यपद्धतिः | ... | १०७–१०८ |
| वृक्षविशेषाः | ... | १०९–११७ |
| दावानल पद्धतिः | ... | ११८ |
| मरुपद्धतिः | ... | ११९–१२० |
| संकीर्णवस्तु.प. | .... | १२१ १२९ |
| शृङ्गारपद्धतिः | ... | १३०–२०५ |
| दयितागमन पद्धतिः | ... | १३०–१३२ |
| विरहिण्यवस्था. पद्धतिः | ... | १३३–१३७ |
| सखीप्रश्न. प. | ... | १३८–१४० |
| वियोगिनी प्रलाप. पद्धतिः | ... | १४०–१४३ |
| दूतीप्रेषण. प. | ... | १४४–१४५ |
| वियोग्यवस्था. पद्धतिः | ... | १४६–१४७ |
| वियोगिप्रलाप. पद्धतिः | ... | १४८–१५५ |
| दूत्युक्ति. पद्धतिः | ... | १५६–१६१ |
| विरहिसन्देश. पद्धतिः | ... | १६२–१६३ |
| विरह्यवस्थाकथनम् | ... | १६४–१६५ |
| नायिकाप्रश्न. पद्धतिः | ... | १६५ |
| दूत्युपहास. पद्धतिः | ... | १६६ |
| नायिकावलोकनम् | ... | १६७–१७० |
| नायकावलोकनम् | ... | १७० |
| स्त्रीवर्णने बाल्यावस्था | ... | १७१–१७२ |
| वयःसन्धिः | ... | १७३–१७५ |
| तारुण्य. पद्धतिः | ... | १७६–१७७ |
| स्त्रीणामङ्गवर्णनम् | ... | १७८–१८९ |
| स्त्रीस्वरूपवर्णनम् | ... | १९०–१९१ |
| नायकातिथ्यम् | ... | १९२–१९३ |
| मानिन्यवस्था. पद्धतिः | .... | १९४–१९५ |
| सख्यनुनय. प. | ... | १९६–१९७ |
| नायिकानायकयो रुक्तिप्रत्युक्ती | ... | १९८–२०३ |
| प्रसादवर्णन. पद्धतिः | ... | २०४–२०५ |
| वसन्तवर्णनपद्धतिः | ... | २०६–२१२ |
| ग्रीष्मपद्धतिः | ... | २१३–२१८ |
| वर्षापद्धतिः | ... | २१९–२२५ |

| | | |
|---|---|---|
| शरत्पद्धतिः | ... | २२६–२३१ |
| हेमन्तप. | ... | २३१–२३५ |
| शिशिर. पद्धतिः | ... | २३६–२३८ |
| कुसुमापचयः | ... | २३९–२४१ |
| मदनपूजा. पद्धतिः | ... | २४१–२४२ |
| डोलाकेलि. पद्धतिः | ... | २४२ |
| कन्दुकक्रीडा | ... | २४३–२४४ |
| जलक्रीडा. पद्धतिः | ... | २४५–२४७ |
| सूर्यास्तमय वर्णनम् | ... | २४८–२५१ |
| अन्धकार वर्णनम् | ... | २५२–२५४ |
| कामिजनप्रलाप. प. | ... | २५४–२५६ |
| अभिसारिका. पद्धतिः | ... | २५७–२५९ |
| चन्द्रोदयवर्णनम् | ... | २६०–२६५ |
| पानगोष्ठी | ... | २६६–२६७ |
| प्रियचाटु. पद्धतिः | ... | २६८–२७० |
| सुरतप्रशंसा | ... | २७१–२७२ |
| सखीवाक्य. पद्धतिः | ... | २७३ |
| नववधूरत. पद्धतिः | ... | २७४–२७५ |
| सुरतकेलि. पद्धतिः | ... | २७६–२७९ |
| विपरीतरत. पद्धतिः | ... | २८०–२८१ |
| सुरतनिवृत्तिः | ... | २८२–२८३ |
| नायकानुनयः | ... | २८४–२८५ |
| प्रभातवर्णनम् | ... | २८६–२९१ |
| प्रभातवायुः | ... | २९२ |
| कलहान्तरिताप्रलापः | ... | २९३–२९४ |
| नायकशिक्षा. प | ... | २९५–२९६ |
| संभोगाविष्करणम् | ... | २९७–२९९ |
| कुलटा. पद्धतिः | ... | ३००–३०२ |
| संकीर्णपद्धतिः | ... | ३०१–३०५ |
| हासपद्धतिः | ... | ३०६–३११ |
| करुणपद्धतिः | ... | ३१३–३१६ |
| रौद्रपद्धतिः | ... | ३१७ |
| वीररसपद्धतिः | ... | ३१८–३२५ |
| भयानक. प. | ... | ३२६–३२७ |
| बीभत्सपद्धतिः | ... | ३२८–३२९ |
| अद्भुतपद्धतिः | ... | ३३०–३३१ |
| जातिपद्धतिः | ... | ३३२–३३३ |
| राजवर्णनम् | ... | ३३५–३४७ |
| चित्रपद्धतिः | ... | ३४८–३५४ |
| वक्रोक्तिपद्धतिः | ... | ३५५–३५६ |
| रथवर्णनपद्धतिः | .... | ३५७ |
| गजवर्णनम् | ... | ३५८–३५९ |
| अश्ववर्णनपद्धतिः | ... | ३६०–३६१ |
| पर्वतवर्णनम् | ... | ३६२–३६६ |
| समुद्रवर्णनपद्धतिः | ... | ३६७–३६८ |
| नदीवर्णनपद्धतिः | ... | ३६९–३७४ |
| सरोवर्णनम् | ... | ३७५–३७६ |
| नगरीवर्णनम् | ... | ३७७–३८१ |
| भैरवादिस्तवनम् | ... | ३८२ |
| सर्वपदार्थसंस्तुतिः | ... | ३८३–४०२ |
| नीतिपद्धतिः | ... | ४०३–४१० |
| विद्यापद्धतिः | ... | ४११–४१२ |
| दैवपद्धतिः | ... | ४१३–४१४ |
| पुरुषकारप. | ... | ४१५ |
| साहसपद्धति. | ... | ४१६ |
| श्रीवर्णनप. | ... | ४१७–४१९ |
| पानपद्धतिः | ... | ४१९–४२१ |
| कुलस्त्रीपद्धतिः | ... | ४२२–४२३ |
| कुलवधूवृत्तम् | ... | ४२३–४२४ |
| अपत्यपद्धतिः | ... | ४२५–४२६ |
| मित्रपद्धतिः | ... | ४२७–४२८ |
| गुणपद्धतिः | ... | ४२९–४३० |
| कलापद्धतिः | ... | ४३१ |
| सेवापद्धतिः | ... | ४३२–४३६ |
| धर्मपद्धतिः | ... | ४३५–४३६ |
| अर्थप्रशंसापद्धतिः | ... | ४३७ |
| तृष्णापद्धतिः | ... | ४३–८४४० |
| दारिद्र्यपद्धतिः | ... | ४४१–४४२ |
| सन्तोषपद्धतिः | ... | ४४३–४४४ |
| क्षमापद्धतिः | ... | ४४५ |
| दयापद्धतिः | ... | ४४६ |
| वैराग्यपद्धतिः | ... | ४४७–४५६ |
| हरिस्तुतिः पद्धतिः | ... | ४५७–४५८ |
| हरस्तुतिपद्धतिः | ... | ४५९–४६३ |

# सूक्तिमुक्तावली



यत्पादाम्भोजसेवारुचिशुचिमनसां प्रातिभं तत्तिरश्चां
चक्राङ्गानामपि द्राग्विलसति मिलितक्षीरनीरप्रभेदे ।
उद्दामाज्ञानरूपप्रबलतमतमःस्तोमसोमस्वभावां
देवीमानन्दकन्दां विधुमणिविशदां शारदां तां नमामि ॥ १ ॥

जनयतु नतिभाजामेष सन्तोषपोषं
कुवलयदलकान्तिः कालिकायाः कटाक्षः ।
प्रकटयति पुरारेः केतकीगर्भपत्र-
त्विषि वपुषि लिपिं यः पञ्चबाणप्रशस्तेः ॥ २ ॥

लसन्मृणालाङ्कुरकोमलानि स्फुरत्सुधाधामकलामलानि ।
पीयूषसारैकनिकेतनानि जयन्ति सूक्तानि महाकवीनाम् ॥ ३ ॥

गीर्वाणासुरमौलिरत्ननिकरप्रेङ्खन्मयूखाम्भसः
संसेकादिव पादमूलकलितैः स्निग्धैः प्रभापल्लवैः ।
आश्वासं कृपयेव शश्वदकरोन्मुग्धैणसार्थस्य यः
सोऽभूद्वत्समुनिः पवित्रचरणन्यासेन पूतावनिः ॥ ४ ॥

[1]तस्यान्वयेऽभूत्करिवृन्दनाथो दादाः सदा दाननिदानभूतः ।
यस्येक्षणाद्भिल्लजणभूपसैन्यं दैन्यं गतं संयति विक्रमेण ॥
चत्वारस्तस्य सञ्जातास्तनया नयशालिनः ।
भुजा इव हरेः शश्वद्विक्रमश्रीविभूषिताः ॥ ५ ॥

चतुर्मुखमुखोद्गीर्णा निगमा इव ते बभुः ।
ख्यातो महीधरो जल्हः साम्बगङ्गाधरावपि ॥ ६ ॥

उपायैरिव तैः काले चतुर्भिः सुप्रयोजितैः ।
[3]मैलुगिक्षोणिपालस्य राज्यं जातं सदोन्नतम् ॥ ७ ॥

---

१. This verse is found in R. G. Bhandarkar's description of the MS. in is Report 1887-91. २. ता. क. ३ मे. ख. ४ णिभूपाल. ख.

[1]बिज्जणबलजलराशिं त्रिमथ्य[2] भुजमन्दरेण यः कृतवान् ।
वीरश्रियमङ्कस्थां स न कस्य महीधरः स्तुत्यः ॥ ८ ॥

किं चित्रं यदि भोगीन्द्रोऽनन्तस्तत्तनयो बहून् ।
आनीय बलिसद्मस्थान्नागान् स्वस्वामिने ददौ ॥ ९ ॥

विजित्य [3]बिज्जणं याते सुरलोकं महीधरे ।
निनाय भिल्लमं जल्हो राजतां क्षयवर्जिताम् ॥ १० ॥

घुर्जरभूभृत्कटके कण्टकविषमेऽतिदुर्गमे येन ।
भगदत्तकीर्तिभाजा दुष्टगजः स्वेच्छया नीतः ॥ ११ ॥

[4]मल्लः पल्लवितोरु[5]भीतिरभितस्त्रस्यद्बलो मैलुगि-
मुञ्जः [6]खञ्जितविक्रमस्त्रिभुवनब्रह्मा किल ब्राह्मणः ।
अन्नो नुन्नपराक्रमो [7]विजितभूर्वंभ्रू रणप्राङ्गणे
येनाकारि मुरारिविक्रमभृता किं किं न तस्योर्जितम् ॥ १२ ॥

हारं हारं रि[8]पूणां समिति गजघटा भिल्लमा[9]यादितासा-
वाशामाशागजाना[10]मपि हरणविधौ साम्प्रतं [11]ही विधत्ते ।
स्मारं स्मारं सुराणामधिपतिरिति यद्विक्रमाणां स्म भीत-
श्शङ्के सङ्केतभूमौ नियमयति निजं कुञ्जरं कुञ्ज[12]रन्ध्रे ॥ १३ ॥

यदसिनिहतदन्तिव्रातरक्ताक्तमुक्ता-
फलविहितविभूषा मत्तवेतालयोषाः ।
रिपुनृपतिकबन्धान्नृत्यतोऽद्यापि दृष्ट्वा
करकलितकपालास्ताल[13]मुद्धट्टयन्ति ॥ १४ ॥

आसीद्गङ्गाधरस्तस्य भ्राता गङ्गाधरोपमः ।
एकान् बबन्ध यो व्यालान् मुमोचैकान् यदृच्छया ॥ १५ ॥

सङ्गं द्विजिह्वैर्न चकार दुष्टैरुवाह मूर्ध्ना न जडं कदाचित् ।
ददाह कामं न जनस्य रुष्टस्तथाऽपि गङ्गाधर एव सोऽभूत् ॥ १६ ॥

१ सि. क. २ विजित्य. क. ३. सिज्जणं क. ४ मल्ली. क. ५ भाक्ति. क. ६ पुञ्जित. ख. ७ विधुत. ख. ८ नृपाणां. ख. ९ तिभीता. क. १० मसि. क. ११ स्त्रीम्रियन्ते १२ रेन्द्रं. क. १३ द्धाटयन्ति. क.

तस्याभवत्सूनुरनूनसत्त्वो जनार्दनाह्वः करिवाहिनीशः ।
समुद्रवद्यो भुवनं बभार सह श्रिया चित्रमशेषमेतत् ॥ १७ ॥

उत्पन्नं सुधियां कुले यदखिलैस्त्यक्तं बुधैर्न क्षणं
यन्नो विस्मृतमेकदाऽपि सुजनैर्यद्यन्न युक्तं खलैः ।
दौर्गत्यस्य तथाविधस्य महतस्तस्यापि केनापि नो
यद्दानाम्बुसरित्प्रवाहपतितस्याकारि हस्तार्पणम् ॥ १८ ॥

सिह्नोऽप्यध्यापितस्तेन गजशिक्षां तदद्भुतम् ।
येयाऽर्जुनं लसत्पत्रं समूलमुदमूलयत् ॥ १९ ॥

विश्वत्राणपरायणः स्फुरद्दुरुस्वर्णचिंतार्थिव्रज
स्तस्मादद्भुतविक्रमः समभवच्छ्रीलक्ष्मदेवः सुधीः ।
मन्त्रैर्निर्जितदेवमन्त्रिधिषणैर्जाग्रन्नयैपक्रमै
राज्यं कृष्णमहीपतेरविकलं दत्वा स्थिरं यो व्यधात् ॥ २० ॥

अगस्त्य इव यस्यासिर्न्यग्भावितक्षितिभृद्धभौ ।
चित्रं सोऽप्यकरोन्नृत्यत्कबन्धं समरार्णवम् ॥ २१ ॥

यद्रावितोद्यानश्रीः परिपाकस्फुटितदाडिमव्याजात् ।
विहसत्यनेकरम्भा प्रकटितदशनेव नन्दनं विपिनम् ॥ २२ ॥

जटोत्कटं लसत्कुल्यं नीलकण्ठोपशोभितम् ।
भाति यद्रचितोद्यानमुत्तमाङ्गमिवैश्वरम् ॥ २३ ॥

तत्क्षारत्वं परिहृतमहो दूरमूरीकृता द्राक्
पीयूषस्य प्रकृतिसुभगा माधुरी सा धुरीणा ।
इत्थं यानः सरिदधिपतिर्लुप्तवेषोऽन्यदेशं
भीत्याऽगस्त्यादिति जनवदैस्तर्क्यते यत्तडागः ॥ २४ ॥

तस्यास्ते तनयो नयोदधिविधुर्बन्धुर्बुधानां सुधीः
सारासारविचारणासु चतुरः श्रीजल्हणाख्यः क्षितौ ।
यद्दानोदकवाहिनीभवनवाम्भोधेर्यशश्चन्द्रमा
जातोऽन्यः सततोदितो धवलयत्युच्चैर्जगन्त्र्युल्बणः ॥ २५ ॥

१ यश्वा. ख. २ दरि. क. ३ नयप्रक्रमैः ख. ४ किं पीयूष. क. ५टाकः. क. ६ सीत. क. ७ विंहणाख्यः. क. ८त्युल्बणम्. क.

मतिपत्रा दत्तमस्मै प्रतिहतबलवद्वेषिवर्गोपसर्गं
राज्यं प्राज्यप्रभावप्रथितगुणभृता कृष्णराजाय भवत्या।
तन्निर्वाह्यं मयेति द्विगुणितधिषणाशक्तिभक्तिर्विधत्ते
सर्वं यः स्वामिकार्यं हितमनयहृता भावुकेनानुजेन ॥ २६ ॥

ध्रुवं यस्यास्ति हस्ताब्जे मदान्धा करिवाहिनी।
दानोदकप्रवाहोऽत्र दृश्यते कथमन्यथा ॥ २७ ॥

यद्गुणैर्ग्रथितः शुद्धैरमितैर्ब्रह्मगोलकः।
विधत्ते कीर्त्तिकन्यायाः क्रीडाकन्दुकविभ्रमम् ॥ २८ ॥

ब्रूमहे किमगाधत्वं यत्कृपाणपयोनिधेः।
मग्ना[1] यत्रारिवाहिन्यो न लक्ष्यन्ते परःशताः ॥ २९ ॥

निर्दलितराजमाषैरार्द्रकखण्डैः ससैन्धवक्षोदैः।
यदसिगुणो रसवत्यां संयति भैक्ष्यं[2] करोति कालस्य ॥ ३० ॥

न्यञ्चद्भूवलयं चलत्क्षितिधरं क्षुभ्यत्समस्तार्णवं
त्रस्यद्वैरिवधूविलोचनजलप्रारब्धवर्षोद्गमम्।
प्रोदञ्चत्तुरगावलीखुरपुटव्याधूतधूलीपट-
च्छन्नादित्यपथं कथं न विदितं यज्जैत्रयात्रादिनम् ॥ ३१ ॥

यद्वैरिवीरैरसिखण्डिताङ्गैः समुत्सुकाभिः सुरसुन्दरीभिः।
वशीक्रिया[3]चूर्णमिव प्रकीर्णमाभाति धूलीपटलं समीके ॥ ३२ ॥

क्षणं कान्तारा[4]गप्रकटितमनोवैकृतयुतः
क्षणं शालोत्सङ्गे द्विजकुलरवाकृष्टहृदयः।
क्षणं पत्रध्वानश्रुतिपुलकितो यद्भयभरा-
द्वसन् प्राप्तोऽरण्ये रिपुरवनिपालस्थितिमिव ॥ ३३ ॥

माश्वादैन्यलघूकृतास्तृणमिव क्षिप्रं निरालम्बना
नीयन्ते प्रतिसद्म मार्गणगणा दौर्गत्यवातेन ये।
तेषां येन तथाकृतोऽतिगरिमा स्वर्णोच्चपुञ्जार्पणै-
र्यस्मात्सम्प्रति ते[5]ऽपि चित्रकटकैर्भूभृत्तुलां[6] बिभ्रति ॥ ३४ ॥

१ सन्ना. क. २ भिक्षां. ख. ३ वशक्रिया. ख. ४ राम. क. ५ ते वि. क. ६ त्कुलं. क.

कोऽप्यन्यः कल्पवृक्षोऽयं चकास्ति वसुधातले ।
यत्पाणिपल्लवोऽप्येकः कुरुतेऽधः सुरद्रुमम् ॥ ३५ ॥

कीर्त्या यस्य जगत्त्रये धवलिते सह्याचले मन्दरे
विन्ध्ये हेमगिरौ हरक्षितिधरे नो भाति रूपान्तरम् ।
नो चेदर्थिजनाय तेन ददता स्वर्णं जगत्यूर्जितं
विख्यातः कनकाचलः कथमिव स्वैरं न विश्राणितः ॥ ३६ ॥

तेनेयं क्रियते वीक्ष्य सत्सुभाषितसङ्ग्रहान् ।
सूक्तिमुक्तावली कण्ठ[1]कदलीभूषणं सताम् ॥ ३७ ॥

विबुधैः सन्निवेशज्ञैः सङ्गृहीतान्यनेकशः ।
सुधारससनाभीनि सन्ति सूक्तानि यद्यपि ॥ ३८ ॥

तथाऽपि खर्वतां नीत्वा विबुधैर्गर्वपर्वतम् ।
शश्वदालोकनीयोऽयं मत्सरः किं गुणेष्वपि ॥ ३९ ॥

साहित्यविद्याहृदयं ज्ञातुमिच्छसि चेत्सुखम् ।
तत्पश्य जल्हणकृतां सूक्तिमुक्तावलीमिमाम् ॥ ४० ॥

नाङ्गुलीयैर्न केयूरैर्न ग्रैवेयैर्न कङ्कणैः ।
तथा भाति यथा विद्वान् कण्ठसङ्गतयाऽनया ॥ ४१ ॥

श्रीवैद्यभानुपण्डितस्यैते ।

आदौ नमस्कृतिः पश्चादाशंसावचनानि च ।
सुभाषितप्रशंसा च कविकाव्यस्तुतिस्ततः ॥ ४२ ॥

कुकवीनां ततो निन्दा सन्मनस्विखलास्ततः ।
कदर्यपद्धतिरथो द्विविधाऽन्योक्तिपद्धतिः ॥ ४३ ॥

कृताः खेचरभूचारिभेदास्तेष्वादितो रविः ।
खेचरेषु ततश्चन्द्रवातमेघास्ततः खगाः ॥ ४४ ॥

तेषु[3] प्राक् कोकिलो हंसः शिखिध्वांक्षबकालयः ।
खद्योतश्चातकः पश्चादित्युक्ताः खेचरास्ततः ॥ ४५ ॥

---

१ कन्दली. ख, २ नाथानि. ख. ३ ते काक. क.

भूचरास्तेषु सिंहः प्राक् ततः कुञ्जरपद्धतिः ।
दासेरकबलीवर्दमृगपद्धतयः पृथक् ॥ ४६ ॥

जलधिमणिशङ्खतटिनीसरसीपद्मद्रुमाश्च शिखिमरवः ।
सङ्कीर्णवस्तुवर्णनमित्यन्योक्तिर्द्विधाऽथ शृङ्गारः ॥ ४७ ॥

प्रथमोऽत्र विप्रलम्भस्तदनु च सम्भोगशृङ्गारः ।
तत्र वियोगः प्रथमं प्रियसङ्ग[1]ः स्त्रीषु मदनजाऽवस्था[2] ॥४८ ॥

प्रश्नः सखीनां विविधाः प्रलापा वियोगिनीनामथ दूतिकायाः ।
सम्प्रेषणं मन्मथजाऽप्यवस्था सह प्रलापेन वियोगिनश्च ॥ ४९ ॥

दूतीवचः प्रियं प्रति सन्देशो विरहिणः प्रियतमायाः ।
तस्या विरहावस्था कथनं दूत्या प्रियाप्रश्नः ॥ ५० ॥

दूत्युपहासस्तदनु प्रियस्य कान्तावलोकने वाचः ।
बाल्यं वयसः सन्धिर्यौवनमखिलाङ्गवर्णनं क्रमशः ॥ ५१ ॥

माने मानिन्यवस्था तु नायिकातिथ्यपूर्विका ।
सख्या चानुनयः पश्चादुक्तिप्रत्युक्तयस्ततः ॥ ५२ ॥

प्रसादोऽथ च सम्भोगे ऋतवः कुसुमोच्चयः ।
कन्दुकोदकयोः क्रीडा रवेश्चास्तमयस्ततः ॥ ५३ ॥

प्रलापाः कामिनामादावभिसारेऽभिसारिका ।
चन्द्रोदयः पानगोष्ठी प्रियाच दुरतः परम् ॥ ५४ ॥

सुरतेषु तत्प्रशंसा नवयोषित्[3]सङ्गमे सखीवाक्यम् ।
निधुवनमथ नववध्वा रतिकेली रतिविपर्यासः ॥ ५५ ॥

निवृत्तिः सुरतस्यादौ कलहः प्रणयस्य च ।
नायिकानुनयः पश्चात् प्रभातं तत्समारणः ॥ ५६ ॥

कलहान्तरिताप्रलपनमतः परं नायकस्य शिक्षा च ।
सम्भोगाविष्करणं कुलटा सङ्कीर्णमिति च शृङ्गारः ॥ ५७ ॥

---

१ गमनं ख. २ मदनावस्था. क. ३ षा. क.

रसा हास्यादयो जातिस्ततो भूपतिवर्णनम् ।
क्रियागुप्त्यादिचित्राणि तथा वक्रोक्तिपद्धतिः ॥ ५८ ॥

रथकरिगिरिवारिधिनदीसरोनगरवर्णनं क्रमशः ॥
कूर्मादीनां स्तवनमथ सर्वपदार्थसंस्तुतिर्विविधा ॥ ५९ ॥

[ भैरवकूर्मादीनां स्तवनं मृगयादिवर्णनं चाथ । ]

नीतिर्विद्या दैवं सपुरुषकारं च साहसं लक्ष्मीः ।
दानं कुलजा नारी तद्वृत्तमपत्यकं च मित्रगुणौ ॥ ६० ॥

कला सेवाऽथ धर्मार्थौ तृष्णादारिद्र्यपद्धती । 
सन्तोषक्षान्तिकरुणा वैराग्यं तदनु स्तुतिः ॥ ६१ ॥

हरीशयोस्त्रयस्त्रिंशत्पद्धतीनामिदं शतम् ।
श्रीमता भगदत्तेन जल्हणेन व्यरच्यत ॥ ६२ ॥

इति श्रीमदारोहकभगदत्तजल्हणदेवविरचितायां सूक्तिमुक्तावल्यामनुक्रमणिकाप्रकरणम् ॥



१. मुद्यानाश्रमनगरमुन्यादेः ख. २. निबन्धशरीरपर्यालोचने ईदृशेनैव पाठेन भाव्यमिति प्रतिभाति
३. तृप्ति. ख. ४ तिः क.

(१)

# नमस्कारपद्धतिः

शिवः

नमस्तुङ्गशिरश्चुम्बिचन्द्रचामरचारवे ।
त्रैलोक्यनगरारम्भमूलस्तम्भाय शम्भवे ॥ १ ॥

भट्टबाणस्य ।

सुप्तद्रुहिणगोविन्दचन्द्रेन्द्रधनदादिषु ।
कल्पान्तरात्रिषु नमो यामिकाय यमारये ॥ २ ॥

राजशेखरस्य ।

आदाय चापमचलं कृत्वाहीनं गुणं विषमदृष्टिः ।
यश्चित्रमच्युतशरो लक्ष्यमभाङ्क्षीन्नमस्तस्मै ॥ ३ ॥

श्रीभोजदेवस्य ।

बाणीभूतपुराणपूरुषधृतिप्रत्याशया धाविते
विद्रा [ तीक्ष्णगा ] शुशुक्षणिकणक्लान्ते शकुन्तेश्वरे ।
नम्रोन्नम्रभुजङ्गपुङ्गवगुणव्याकृष्टबाणासन-
क्षिप्तास्त्रस्य पुरद्रुहो विजयते सन्धानसीमाश्रमः ॥ ४ ॥

नमस्तुभ्यं देवासुरमकुटमाणिक्यकिरण-
प्रणालीसम्भेदस्नपितचरणाय स्मरजिते ।
महाकल्पस्वाहाकृतभुवनचक्रेऽपि नयने
निरोद्धुं भूयस्तत्प्रसवमिव कामं हुतवते ॥ ५ ॥

एतौ श्रीमुरारेः ।

चूडोत्तंसितचारुचन्द्रकलिकाचञ्चच्छिखाभासुरो
लीलादग्धविलोलकामशलभः श्रेयोदशाग्रे स्फुरन् ।
अन्तर्गूढदुरन्तमोहतिमिरप्राग्भारमुच्छेदयं-
श्चेतःसद्मनि योगिनां विजयते बोधप्रदीपो हरः ॥ ६ ॥

१ विद्रातिक्ष्णगा. क. ख.

अर्धनारीश्वरः

सन्ध्यानतौ नै[1]तपुरन्ध्रितनोः सरोषमुत्सारिते गिरिजया निजपाणिपद्मे ।
उत्सर्पिकङ्कणफणीन्द्रफणार्पणेन पूर्णोऽञ्जलिर्जयति बालमृगाङ्कमौलेः॥ ७॥

वन्दे तदेकं शिवयोः शरीरं यद्वामभागे कुचकुम्भदम्भात् ।
अवाप्तमृत्युः किल लिङ्गरूपी वीरः स्वयम्भूरभवन्मनोभूः ॥ ८ ॥

करस्पर्शारम्भात्पुलकितपृथूरोजकल[2]शे
श्रमाम्भो वामार्द्धे वमति मदनाक्रा[3]न्तिसुलभ[4]म् ।
विभोर्वारं वारं कृतसमधिकोद्धूलनविधे-
स्तनौ भस्मस्नानं कथमपि समाप्तं विजयते ॥ ९ ॥

मौनादस्तमि[5]तैव चाटुभणितिः स्रस्तैकहस्ताद्गतं
दूरेऽप्यञ्जलिबन्धनं प्रणमनं स्तब्धार्द्धमूर्ध्नः कुतः ।
इत्थं सङ्घटितैकविग्रहतया व्यग्रो गिरिग्रामणी[6]-
जातां जातरुषं जयत्यनुनयन् देवस्त्रिलोकीगुरुः ॥ १० ॥

कस्यापि ।

देहार्द्धं कुरु पार्वति स्थिरपदं [हस्ते] धनुर्धारय
स्वेदार्द्रं यदि मृज्यतां करतलं भस्माङ्गरागेण मे ।
एवं जल्पत एव बाणशिखिनि प्रोड्डीय शिञ्जाफणि
श्वासैः प्रज्ज्वलिते पुरेषु जयति स्मेरं पुरारेर्मुखम् ॥ ११ ॥

बिल्हणस्य ।

हरस्य जटाभरणं पन्नगः

कण इव पुरां वह्नेर्भस्मावधूलनसङ्गतो
जयति बहलालोकस्फारावधूतनिशोदयः ।
स्मरहरजटाबन्धग्रन्थिर्भुजङ्गफ[10]णामणि[11]-
स्त्रि[12]दशतटिनीपूरानीतः स्फुरन्निव तारकः ॥ १२ ॥

भट्टसोमेश्वरस्य ।

---

१ नर. शार्ङ्गधरपद्धतौ. २ श. क. ३ त. ख. ४ भः ख. ५ ते. ख. ६ णीजायां. क. ७देहं क. ख. ८ रा. ख.
९ न्धे. क. ख. १० शिखा. क. ख. ११ णे. क. ख. १२ स्मर. क. ख.

हरस्य ताण्डवम्

उच्चैरुत्तालखेलद्भुजवनपवनोद्धूतशैलौघपात-
स्फारोदञ्चत्पयोधिप्रकटितमकुटस्वर्धुनीसङ्गमानि ।
जीयासुस्ताण्डवानि स्फुटविकटजटाकोटिसङ्घट्टभूरि-
भ्रश्यन्नक्षत्रचक्रव्यवहितसुमनोवृष्टिपातानि शम्भोः ॥ १३ ॥

भेरीभाङ्कारस्य ।

हरस्य ललाटलोचनम्

नीललोहितललाटलाञ्छने लोचने जयति कोऽपि पावकः ।
रक्षितस्य जगदन्तहेतवे यस्य संज्वलनमात्मभूरभूत् ॥ १४ ॥

मुरारेः ।

हरस्य जटा

जयति हरजटाभरो यदन्तर्वहति निराकुलमेव देवसिन्धुः ।
लहरिषु तरलेन्दुराजहंसा विततविरिञ्चिकपालफेनमाला ॥ १५ ॥

हरविलोचने

प्रणमत नयने हरस्य पूजाकमलकुलं पदयोः कृतं कृतार्थैः ।
विकसनविनिमीलने विचित्रं युगपदुपैति ययोर्विलोकनेन ॥ १६ ॥

सूक्तिमहस्रादेतौ ।

हरजटाभरणं चन्द्रकला

स जयति हिमकरलेखा चकास्ति यस्योमयोन्मुखी विहिता ।
नयनप्रदीपकज्जलजिघृक्षया रजतशुक्तिरिव ॥ १७ ॥

सुबन्धोः ।

लसल्लीलाचन्द्रश्चरणगतमौलेः स्मरजितः
किरद्भिः सुज्योत्स्नां नखमणिभिरापूरितकलः ।
व्यलीके पार्वत्याः परिलघुलवैरञ्जनजुषः
पतद्भिर्बाष्पस्य क्रमलिखितलक्ष्मा विजयते ॥ १८ ॥

कस्यापि ।

१ सुकाविहिता. क. २ ज्योत्स्नाभिर्नख० क.

श्रीकण्ठस्य कपर्दबन्धनपरिक्लान्तोरगग्रामणी-
　सन्दष्टां मकुटावतंसकलिकां वन्दे कलामैन्दवीम् ।
या बिम्बप्रतिपूरणाय परितो निष्पीड्य संदंशिका-
　यन्त्रेणेव ललाटलोचनशिखिज्वालाभिरावर्त्यते ॥ १९ ॥

मुरारेः ।

पार्वती

हरकण्ठग्रहानन्दमीलिताक्षीं नमाम्युमाम् ।
कालकूटविषस्पर्शजातमूर्च्छागमामिव ॥ २० ॥

बाणस्य ।

क्रीडासरोषगिरिजाचरणारविन्दं
　वन्दे यदग्रपतिता हरिणाङ्कलेखा ।
कामार्पहस्तितवृषध्वजधैर्यलक्ष्मी-
　पातावभग्नवलयार्द्धनिभा विभाति ॥ २१ ॥

गोत्रानन्दस्य ।

प्रातः कालाञ्जनपरिचितं वीक्ष्य जामातुरोष्ठं
　कन्यायाश्च स्तनमुकुलयोरङ्गुलीभस्ममुद्राम् ।
प्रेमोल्लासाज्जयति मधुरं सस्मिताभिः सखीभि-
　र्गौरीमातुः किमपि किमपि व्याहृतं कर्णमूले ॥ २२ ॥

कस्यापि ।

गजाननः

उच्चैर्ब्रह्माण्डखण्डद्वितयसहचरं कुम्भयुग्मं दधानः
　प्रेङ्खन्नागारिपक्षप्रतिभटविकटश्रोत्रतालाभिरामः ।
देवः शम्भोरपत्यं भुजगपतितनुस्पर्द्धिवर्द्धिष्णुहस्त-
　स्त्रैलोक्याश्चर्यमूर्तिः स जयति जगतामीश्वरः कुञ्जरास्यः ॥ २३ ॥

विश्वेश्वरस्य ।

१ णैव. ख. २ भिपीडित. ख. ३ बिम्बाधरोष्ठं. ख. ४ युग्म. क.

गङ्गा

गौरीविभँज्यमानार्द्धसङ्कीर्णे हरमूर्धनि।
अम्ब द्विगुणगम्भीरे भागीरथि नमोऽस्तु ते ॥ २४ ॥

मन्मथः

कुलगुरुरबलानां केलिदीक्षाप्रदाने
परमसुहृदनङ्गो रोहिणीवल्लभस्य।
अपि कुसुमपृषत्कैर्देवदेवस्य जेता
जयति सुरतलीलानाटिकासूत्रधारः ॥ २५ ॥

राजशेखरस्य।

स एष भुवनत्रयप्रथितसंयमः शङ्करो
बिभर्त्ति वपुषाऽधुना विरहकातरः कामिनीम्।
अनेन किल निर्जिता वयमिति प्रियायाः करं
करेण परिताडयन् जयति जातहासः स्मरः ॥ २६ ॥

कस्यापि।

रतिः

देवी रतिर्विजयते मृगनाभिचित्र-
पत्रावली पृथुपयोधरसीम्नि यस्याः।
भाति त्रिलोकविजयोपनतस्वकान्त-
प्रक्रान्तसायकनिशातनँकालिकेव ॥ २७ ॥

मदनस्य।

हरिः

लँक्ष्मीलतासमाश्लिष्टं कौस्तुभस्तबकोज्ज्वलम्।
स्वर्गापवर्गफलदं हरिकल्पद्रुमं नुमः ॥ २८ ॥

कस्यापि।

जयति स नाभिसरोरुहमधुकरपटलैरिवासिताकारः।
शौरिः श्रीमुखचन्द्रे यत्कान्तिर्लाञ्छनच्छाया ॥ २९ ॥

क्षेमेन्द्रस्य।

१ संभुज्य. क. २ करालिकेव. ख. ३ वनमाला. ख.

अतिविपुलं कुचयुगलं रहसि करैरामृशन् लक्ष्म्याः।
तदपहृतं निजहृदयं जयति हरिर्मृगयमाण इव ॥ ३० ॥

[1]अरसिठक्कुरस्य।

कनककलशस्वच्छे राधापयोधरमण्डले
नवजलधरश्यामामात्मद्युतिं प्रतिबिम्बिताम्।
असितसिचयप्रान्तभ्रान्त्या मुहुर्मुहुरुत्क्षिपन्
जयति जनितव्रीडाहासः प्रियाहसितो हरिः ॥ ३१ ॥

दृक्पातः कमलासनेऽस्तु भवतु ज्ञानं मनाङ् मारुते
श्रीकण्ठोऽयमितः सुरानिति नतांस्ताक्ष्येण विज्ञापितः।
प्रेयस्याः क्व तदासनं क्व च रुतं कण्ठः क्व चेत्युल्लपन्
लक्ष्म्यावासितमानसो विजयते सुप्तप्रबुद्धो हरिः ॥ ३२ ॥

कस्यापि।

विरमति महाकल्पे नाभीपदैकनिकेतन-
स्त्रिभुवनपुरीशिल्पी यस्य प्रतिक्षणमात्मभूः।
किमिह करणं कीदृक् कस्य व्यवस्थितिरित्यसा-
वुदरमविशद्द्रष्टुं तस्मै जगन्निधये नमः ॥ ३३ ॥

मुरारेः।

जीयासुः शकुलाकृतेर्भगवतः पुच्छच्छटाच्छोटना-
दुद्यन्तः शतचन्द्रिताम्बरतलास्ते बिन्दवः सैन्धवाः।
यैरुत्पत्य पतद्भिरौर्वशिखिनस्तेजोजटालं वपुः
पानाध्मानवशादरोचकरुजां चक्रे चिरायास्पदम् ॥ ३४ ॥

न पङ्कैरालेपं कलयति धरित्रीव्ययवशा-
न्न मुस्तामन्विष्यत्युरगनगरभ्रंशचकितः।
न धत्ते ब्रह्माण्डस्फुटनभयतो घुर्घुररवं
वराहो माहात्म्यादिति जयति सङ्कोचितवपुः ॥ ३५ ॥

[2]एतौ हनूमतः।

---

१ अरसिंकुरस्य. क. २ थैक० ख.

जयन्ति नरसिंहस्य स्फुरन्नखशिखाङ्कुराः।
हरिणक्रोधकृष्टेन्दुकलाखण्डैरिवाङ्किताः ॥ ३६ ॥

कस्यापि।

दैत्यानामधिपे नखाङ्कुरकुटीकोणप्रतिष्ठात्मनि
स्फारीभूतकडारकेसरसटासङ्घातघोराकृतेः।
सक्रोधं च सविस्मयं च सगुरुव्रीडं च सान्तस्मितं
क्रीडाकेसरिणो हरेर्विजयते तत्कालमालोकितम् ॥ ३७ ॥

इन्द्रकवेः।

वपुर्दलनसम्भ्रमात् स्वनखरं प्रविष्टे रिपौ
क्व यात इति विस्मयात् प्रहितलोचनः सर्वतः।
वृथेति करधूतिभिर्निपतितं पुनर्दानवं
निरीक्ष्य भुवि रेणुवज्जयति जातहासो हरिः ॥ ३८ ॥

कस्यापि।

लक्ष्मीपाणिद्वयपरिचितं मूलमूर्द्धश्रुतीनां
व्यक्तं वन्दे कमलचरणद्वन्द्वमाद्यस्य पुंसः।
यत्रैकस्य व्यधित बलिना पाद्यतोयैर्वितीर्णै-
रार्द्रस्यैव प्रणतितरलः क्षालनं पद्मयोनिः ॥ ३९ ॥

सूक्तिसहस्रात्।

दिङ्मातङ्गघटाविभक्तचतुराघाटा मही साध्यते
सिद्धा सा च वदन्त एव हि वयं रोमाञ्चिताः पश्यत।
विप्राय प्रतिपाद्यते किमपरं रामाय तस्मै नमो
यस्मादाविरभूत् कथाद्भुतमिदं यत्रैव चास्तं गतम् ॥ ४० ॥

कस्यापि।

खिन्नोऽसि मुञ्च भारं बिभृमो वयमिति वदत्सु शिथिलभुजः।
भरभुग्नवितथबाहुषु गोपेषु हसन् हरिर्जयति ॥ ४१ ॥

हरिहरस्य।

---

१ शिखाः कराः. ख. २ घाता. ख.

क्व[1] यासि खलु चौरिके[2] प्रमुषितं स्फुटं दृश्यते
  द्वितीयमिह मामकं वहसि कञ्चुके कन्दुकम्।
त्यजेति नवगोपिकाकुचयुगं निमथ्नन् बला-
  ल्लसत्पुलकपिञ्जरो जयति गोकुले केशवः॥ ४२॥

दीपकस्य।

हेलोद्स्तमहीधरस्य तनुतामालोक्य दोष्णो[3] हरे-
  र्हस्तेनांसतटेऽवलम्ब्य चरणाधारोत्पतत्पादकैम्[4]।
शैलोद्धारसहायतां जिगमिषोरस्पृष्टगोवर्धना
  राधाया गगने जयन्ति सुचिरं वन्ध्याः करभ्रान्तयः॥ ४३॥

ब्रह्मा

तं वन्दे पद्मसद्मानमुपवीतच्छटाच्छलात्।
गङ्गास्रोतस्त्रयेणेव यः सदैवाभिषिच्यते॥ ४४॥

राजशेखरस्य।

मूर्त्तिः स्मर्तृतमोहरा सहचरी वाचां परा देवता
  व्याहाराः श्रुतयः कुटुम्बकमिदं विश्वं चरस्थावरम्।
यस्यैतच्छ्रुतिमूलमूलकतया सन्दर्शितप्रक्रियं
  स्वारम्भं भगवन्तमन्तरहितं ब्रह्माणमीडामहे॥ ४५॥

सारस्वतम्

सूक्ष्माय शुचये तस्मै नमो वाक्तत्त्वतन्तवे।
विचित्रो यस्य विन्यासो विदधाति जगत्पटीम्॥ ४६॥

अयं जयतुङ्गोदयात्।

ज्योतिस्तमोहरमलोचनगोचरं त-
  ज्जिह्वादुरासदरसं मधुनः प्रवाहम्।
दूरं त्वचः पुलकबन्धि परं प्रपद्ये
  सारस्वतं किमपि कामदुघं प्रपद्यम्॥ ४७॥

सूक्तिसहस्रात्।

इति सूक्तिमुक्तावल्यां नमस्कारपद्धतिः।

---

१ त्वयासि. क. २ चौरिम. क. ३ दोर्ष्णा. क. ४ योः क. ख. ५ त्कृति. क.

# ( २ )

# आशीर्वादपद्धतिः

तत्र अष्टमूर्तेरम्मयं वपुः

जगज्जीवनमव्याद्वः शम्भोरम्भोमयं वपुः।
ब्रह्माण्डमपि यस्यान्तस्तरत्तुम्बीफलायते॥ १॥

कस्यापि।

हरजटा

स धूर्जटिजटाजूटो जायतां विजयाय वः।
यत्रैकपलितभ्रान्तिं करोत्यद्यापि जाह्नवी॥ २॥

[1]शिवस्वामिनः।

शिवः

हिमगिरितनया[2]मयार्द्धमूर्तिस्तुहिनशिलास्रुतसिन्धुबद्धमौलिः।
शिशिरकरकलाकृतावतंसो हरतु शिवः परितापमान्तरं वः॥ ३॥

उमापतिधरस्य।

असोढा तत्कालोल्लसदसहभावस्य तपसः
कथानां विस्रम्भेष्वथ च रसिकः शैलदुहितुः।
प्रमोदं वो दिश्यात् कपटवटुवेषापनयने
त्वराशैथिल्याभ्यां युगपदभियुक्तः स्मरहरः॥ ४॥

कस्यापि।

पाणौ कङ्कणमुत्फणः फणिपतिर्नेत्रं ज्वलत्पावकं
कण्ठः कुण्ठितकालकूटकुटिलो वस्त्रं गजेन्द्राजिनम्।
गौरीलोचनलोभनाय सुभगो वेषो हरस्येति मे
गण्डोल्ला[3]सविभावितः पशुपतेर्हासोद्गमः पातु वः॥ ५॥

[4]रुद्रस्य।

---

१ द्विश० क. ख. २ युता० ख. ३ सि. क. ४ शूद्रस्य. क.

शैलेन्द्रप्रतिपाद्यमानगिरिजाहस्तग्रहमोल्लस-
रोमाञ्चादिविसंस्थुलाखिलविधिव्यासङ्गभङ्गाकुलः ।
हा शैत्यं तुहिनाचलस्य करयोरित्यूचिवान् सस्मित-
श्शैलान्तःपुरमातृमण्डलगणैर्दृष्टोऽवताद्वः शिवः ॥ ६ ॥

कस्यापि ।

चूडाभस्मकणाङ्कितावित्र जटापत्राञ्चलेनामृशन्
नेत्राग्निद्युतितापितानिव करैः सिञ्चन् सुधादीधितेः ।
नागश्वासकलङ्कितावित्र मुहुर्गङ्गाजलैः क्षालयन्
मानिन्याश्चरणौ गिरीन्द्रदुहितुर्भूत्यै गिरीशोऽस्तु वः ॥ ७ ॥

उमापतिधरस्य ।

दूरे दारुवनाभिसारक वृथाचाटूनि मुञ्चाधुना
भूयस्त्वं पुनरप्यहं यदि तदा चन्द्रः क्षितिं यास्यति ।
इत्युक्तः शशिमौलिरद्रिसुतया चूडेन्दुभूलम्बन-
व्याजव्यञ्जितपादपद्मपतनप्री[त]प्रियः पातु वः ॥ ८ ॥

हर्षपण्डितस्य ।

सहस्राक्षैरङ्गैर्नमसितरि नीलोत्पलमयी-
मिवात्मानं मालामुपनयति पत्यौ दिविषदाम् ।
जिघृक्षौ च क्रीडारभसिनि कुमारे सह गणै-
र्हसन् वो भद्राणि द्रढयतु मृडानीपरिवृढः ॥ ९ ॥

मुरारेः ।

विश्लिष्टेऽभिनये रुषं रचयतः सम्पादिते शंसतो
रोमाञ्चं वहतः स्वहस्तरचितस्थानक्रियास्पर्शजम् ।
खिन्नां श्वासयतश्च शैलतनयां गाढैः समालिङ्गनै-
र्नानाभावरसात्मकं पशुपतेराचार्यकं पातु वः ॥ १० ॥

मौलिस्त्रै[ ग्गृ ]हिणां दृगर्चिरुदयस्विन्नार्द्धचन्द्रामृत-
प्रत्युज्जीवितदेवदैत्यशिरसामन्योन्यविद्वेषिणाम् ।

१ प्रीति क. ख. २ चिक्रीडा. क. ३ सग्र. क. ख.

जाते वाक्कलहे प्रहासनपरे तन्द्रायितारे परं
किं कुर्यादिति( ? )तद्वचःस्मितमुखः पायात्स वः शङ्करः ॥ ११ ॥

कयोरप्येतौ ।

कपालदाम

भूत्यै वोऽस्तु कपालदाम जगतां पत्युर्यदीयां लिपिं
क्वापि क्वापि गणाः पठन्ति पदशो नातिप्रसिद्धाक्षराम् ।
विश्वं स्रक्ष्यति वक्ष्यति क्षितिमपामीशिष्यते[1] शेष्यते
भोगे[2] राशिषु रंस्यतेऽत्स्यति जगन्निर्वेक्ष्यति द्यामिति ॥ १२ ॥

छित्तपस्य[3] ।

निटिलनयनाग्निः

पायात्कृतानङ्गपतङ्गदाहः खट्वाङ्गिनो नेत्रशिखिप्रदीपः ।
यस्यान्तिके शुभ्रदशानिवेशश्रियं किरीटेन्दुकलाः श्रयन्ते ॥ १३ ॥

मङ्खणस्य ।

नेत्रत्रयम्

एकं ध्याननिमीलनान्मुकुलितं चक्षुर्द्वितीयं पुनः
पार्वत्या वदनाम्बुजस्तनतटे शृङ्गारभारालसम् ।
अन्यद्दूरविकृष्टचापमदनक्रोधानलोद्दीपितं
शम्भोर्भिन्नरसं समाधिसमये [4]नेत्रत्रयं पातु वः ॥ १४ ॥

कण्ठः

पायाद्वः शितिकण्ठस्य कण्ठः श्यामाम्बुदोपमः ।
गौरीभुजलता यत्र विद्युल्लेखेव राजते ॥ १५ ॥

कयोरप्येतौ ।

शिवस्याङ्गम्

ऋक्षाणां भूरिधाम्नां श्रितमधिपतिना प्रस्फुरद्भीमतारं
स्फारं नेत्रानलेन प्रसभनियमितोच्चापमीनध्वजेन ।

---

१ शेष्यते. ग. २ नागे. ग. ३ सित्तपस्य. ख छत्तपस्य. क. ४ नेत्रं चिरं. क.

रामायत्तं पुरारेः कुमुदशुचि लसन्नीलसुग्रीवमङ्गं
　　स्नावङ्कं सैन्यमन्यद्दशवदनशिरच्छेदहेतु श्रियै वः ॥ १६ ॥

धनपालस्य ( हरवानरसैन्ययोः श्लेषः )

अर्धनारीश्वरः

तद्वः पुनातु शिवयोरर्धनारीश्वरं वपुः ।
भवेद्दिव यदद्य श्वः शिव एव शिवैव वा ॥ १७ ॥

अर्धाङ्गनापुंवपुषः पुरारेर्मूर्त्तिः श्रियं नौरिव वस्तनोतु ।
प्रेमातिभारादपरं यदर्धं ममज्ज शृङ्गाररसाम्बुराशौ ॥ १८ ॥

वैरन्धस्य[1] ।

कल्याणमावहतु वः शिवयोः शरीरमेकं यदीयमसितच्छविकण्ठमूलम् ।
वामेतरेऽपि कुरुते सितभासि भागे आरब्धशैलतनयापरिणामशङ्काम् ॥ १९ ॥

उत्प्रेक्षावल्लभस्य ।

स्वेदार्द्रवामकुचमण्डनपत्रभङ्ग-
　　संशोषिदक्षिणकराङ्गुलिभस्मरेणुः ।
स्त्रीपुंनपुंसकपदव्यतिलङ्घिनी व [ः]
　　शम्भोस्तनुः सुखयतु प्रकृतिश्चतुर्थी ॥ २० ॥

स्वच्छन्दैकस्तनश्रीरुभयमतमिलन्मौलिचन्द्रः फणीन्द्र-
　　प्राचीनावीतग्राही सुखयतु भगवानर्द्धनारीश्वरो वः ।
यस्यार्द्धे विश्वदाहव्यसनविसृमरज्योतिरर्द्धे[2] कृपोद्य-
　　द्बाष्पं चान्योन्यवेगप्रहतिसिमिसिमाकारि चक्षुस्तृतीयम् ॥ २१ ॥

मुरारेरेतौ ।

आश्लेषाधरबिम्बचुम्बनसुखालापस्मितान्यासतां[3]
　　दूरे तावदिदं मिथो न सुलभं जातं मुखालोकनम्[4] ।
इत्थं व्यर्थकृतैकदेहघटनाविन्यासयोरावयोः
　　केयं प्रेमविडम्बनेत्यवतु वः स्मेरोऽर्द्धनारीश्वरः ॥ २२ ॥

शूरवर्मणः ।

१ वैरड in Bhandarkar's Report. २ रर्द्धे. ख. ३ न्यासितं. क. ४ मुखा. क.

गिरितनयैकपयोधरनिहितकरः पातु वश्चिरं गिरिशः ।
विश्वासयितुं मनसिजमिव स्पृशन् काञ्चनं लिङ्गम् ॥ २३ ॥

जयदेवस्य ।

कल्पान्तरुद्रः

कल्पान्ते शमितत्रिविक्रममहाकङ्कालबद्धस्फुर-
च्छेषस्यूतनृसिंहपाणिनखरप्रोतादिकोलामिषः ।
विश्वैकार्णवताविशेषमुदितौ तौ मत्स्यकूर्मावुभौ
कर्षन् धीवरतां गतोऽस्यतु सतां मोहं महाभैरवः ॥ २४ ॥

छित्तपस्य ।

स्पष्टव्याकृष्टदंष्ट्राविकटमुखतटोत्तालदंष्ट्रान्तराल-
न्यस्तब्रह्माण्डखण्डग्रसनघनठणात्कारकोलाहलिन्यः ।
चण्डीनाथस्य युष्मानविरलविलसज्जैत्रलालाटनेत्र-
ज्वालाहेलानिपीतप्रलयजलधयः पान्तु कल्पान्तलीलाः ॥ २५ ॥

कल्पान्तक्रोधनस्य त्रिपुरविजयिनः क्रीडया सञ्चरिष्णोः
कृत्वाऽपि प्राणिजातैर्निजमुखकुहरातिथ्यमप्राप्ततृप्तेः ।
दिग्भित्तीः प्रेक्ष्य शून्याः प्रलयजलनिधिप्रेक्षितात्मीयमूर्ति-
ग्रासव्यासक्तिमोघश्रमजनितरुषः पान्तु वो गर्जितानि ॥ २६ ॥

एतौ भेरीभाङ्कारस्य ।

ईश्वरताण्डवम्

अस्थीन्यस्थीन्यजिनमजिनं भस्म भस्मेन्दुरिन्दु-
र्गङ्गा गङ्गोरग उरग इत्युल्लसत्सम्भ्रमाणाम् ।
भूषावेषोपकरणकरणप्रापणव्यापृतानां
नृत्तारम्भप्रणयिनि शिवे पान्तु वाचो गणानाम् ॥ २७ ॥

धनपालस्य[१] ।

इन्दोः किं द्रुहिणस्य वा सुरपतेः किं वा कृतान्तस्य वा
किं भूतेश दिशास्थि भूषणगणेष्वाकृष्य[ देयं ]मया[२] ।
इत्थं मण्डनमन्दिरोदरचरव्याहारतो भीकरात्
भीता यस्य सुराः प्रसाधनविधौ पायात् स वः शङ्करः ॥ २८ ॥

१ धनपस्य क; २ ष्यते यन्म. क. ख.

आर्द्रां कण्ठे मुखाब्जस्नजमुपनयत्यम्बिका जानुलग्नां
स्थाने कृत्वेन्दुलेखां निबिडयति जटाः पन्नगेन्द्रेण नन्दी ।
कालः कृत्तिं निबध्नात्युपनयति करे कालरात्रिः कपालं
शम्भोर्नृत्तावतारे परिषदिति पृथग्व्यापृता वः पुनातु ॥ २९ ॥

कयोरप्येतौ ।

भो[1] [ भो ] दिक्पतयः प्रयात परतः खं मुञ्चताम्भोमुचः
पातालं व्रज मेदिनि प्रविशत क्षोणीतलं भूधराः
ब्रह्मन्नुन्नय दूरमात्मभवनं नाथस्य नो नृत्यतः ।
शम्भोः सङ्कटमेतदित्यवतु वः प्रोत्सारणा नन्दिनः ॥ ३० ॥

महानाटकात् ।

सन्ध्याताण्डवडम्बरप्रणयिनो भर्गस्य चण्डभ्रम-
व्यावृत्तोद्भुजदण्डमण्डलभुवो झञ्झानिलाः पान्तु वः ।
येषामुच्चलतां जवेन झटिति व्यूहेषु भूमीभृता-
मुड्डीनेषु बिडौजसा पुनरसौ दम्भोलिरालोकितः ॥ ३१ ॥

सोमनाथप्रशस्तेः ।

उद्दामभ्रमिवेगविस्तृतजटावल्लीमृणालीपत-
त्स्वर्गङ्गाजलदण्डिकावलयि[2] [ तं ]निर्माय तत्पञ्जरम् ।
सम्भ्राम्यद्भुजषण्डपक्षपटलद्वन्द्वेन हंसायित-
स्त्रैलोक्यव्ययनाटिकानवनटस्वामी[3] जगन्त्रायताम् ॥ ३२ ॥

यन्नाट्यभ्रमिघूर्णमानवसुधाचक्राधिरूढे भृशं
मेरौ पार्श्वनिवेशिवासरनिशाचक्रे[4] परिभ्राम्यति ।
तैजस्यस्तडितो भवन्ति शतशो दृष्टा हि जाताः कथं
तामस्योऽपि स वः पुनातु जगतामन्त्येष्टियज्वा विभुः ॥ ३३ ॥

एतौ मुरारेः ।

संरम्भादविभावितत्रिभुवनायासस्य कामद्विषो
नृत्तारम्भविजृम्भितैरवयवैर्ब्रह्माण्डमुच्छिन्दतः ।

१ भो वा. क. ख. २ वलयितो. क. ख. ३ दण्ड ख; ४ लोक्या क; ५ चक्रो क; ६ द्य. क.

निर्यन्मौलि विनिर्गताग्रचरणं प्रोल्लासिदोःपल्लवं
पायाद्वो बहिरम्भसः प्रविचलत्कूर्मायमाणं वपुः ॥ ३४ ॥

कूर्मवार्हतस्य ।

भद्रं चन्द्रकले शिवं सुरनदि श्रेयः कपालावले
कल्याणं भुजगेन्द्रवल्लि कुशलं विष्वक्जटासन्तते ।
इत्याहुर्मिलिताः परस्परममू यस्मिन् प्रशान्तिं गते
कल्पान्तारभटीनटस्य भवताच्चद्वः श्रियै ताण्डवम् ॥ ३५ ॥

कस्यापि ।

पार्वती

गोनासाय[1] नियोजिताग[ द ]रजाः सर्पाय बद्धौषधिः
कण्ठस्थाय विषाय वीर्यमहतः पाणौ मणीन् बिभ्रती ।
भर्त्तुर्भूतगणाय गोत्रजरतीसन्दिष्टमन्त्राक्षरा
रक्षत्वद्रिसुता विवाहसमये प्रीता च भीता च वः ॥ ३६ ॥

राजशेखरस्य ।

प्रत्यासन्नविवाहमण्डनविधौ देवार्चनव्यग्रया
दृष्ट्वाऽग्रे परिणेतुरेव लिखितां गङ्गाधरस्याकृतिम् ।
उन्मादस्मितरोपलज्जितधिया गौर्या कथञ्चिच्चिरात्
वृद्धस्त्रीवचनात् प्रिये विनिहितः पुष्पाञ्जलिः पातु वः ॥ ३७ ॥

पादाग्रस्थितया मुहुः स्तनभरेणानीतया नम्रतां
शम्भोः सस्पृहलोचनत्रयपथं यान्त्या तदाराधने ।
[3]ह्रीमत्या शिरसीहितः सपुलकस्वेदोद्गमोत्कम्पया
विश्लिष्यन् कुसुमाञ्जलिर्गिरिजया क्षिप्तोऽन्तरे पातु वः ॥ ३८ ॥

औत्सुक्येन कृतत्वरा सहभुवा व्यावर्त्तमाना ह्रिया
तैस्तैर्बन्धुवधूजनस्य वचनैर्नीताऽभिमुख्यं पुनः ।
दृष्ट्वाऽग्रे धवमात्तसाध्वसरसा गौरी नवे सङ्गमे[4]
संरोहत्पुलका हरेण हसता श्लिष्टा सुखायास्तु वः ॥ ३९ ॥

श्रीहर्षस्यैतौ ।

१ गोदानाय. ख. गोनाथाय. क. २ गत. क. ख. ३ श्रीमत्या क ४ मरा. क.

व्यानम्रा दयितानने मुकुलिता शार्दूलचर्माम्बरे
सोत्कम्पा भुजगे निमेषरहिता चन्द्रेऽमृतस्यन्दिनि ।
मीलङ्कः सुरसिन्धुदर्शनविधौ म्लाना कपालोदरे
पार्वत्या नवसङ्गमप्रणयिनी दृष्टिः शिवायास्तु वः ॥ ४० ॥

भासस्य ।

भ्रूलास्योत्सविनी सविभ्रमगतिर्मूर्च्छन्नितम्बस्थली
सङ्कीर्णे वयसि स्मितार्द्रफणितिः सा पार्वती पातु वः ।
यस्याः कर्णतटं दृशावगमता तूर्णं तदन्तःपथे
गत्वा द्रष्टुमिवेश्वरं हृदि कृताधिष्ठानमुत्कण्ठितम् ॥ ४१ ॥

मदनस्य ।

षण्मुखः

अर्चिष्मन्ति विदार्य वक्त्रकुहराण्यासृक्कतो वासुके-
स्तर्जन्या विषकर्बुरान् गणयतः संस्पृश्य दन्ताङ्कुरान् ।
एकं त्रीणि नवाष्ट सप्त षडिति प्रध्वस्तसङ्ख्याक्रमा
वाचः क्रौञ्चरिपोः शिशुत्वविकलाः श्रेयांसि पुष्णन्तु वः ॥ ४२ ॥

स्वेच्छारम्यं लुठित्वा पितुरुरसि चिताभस्मधूलीसिताङ्गो
गङ्गावारिण्यगाधे झटिति पृथुजटाजूटतो दत्तझम्पः ।
सद्यः सीत्कारकारी जलजडिमरणद्दन्तपङ्क्तिर्गुहो वः
कम्पी पायादपायाज्ज्वलितशिखिशिखे चक्षुषि न्यस्तहस्तः ॥ ४३ ॥

बाणस्यैतौ ।

विकसदमरनारीनेत्रनीलाब्जषण्डा-
न्यधिवसति सदा यः संयमाधःकृतानि ।
नवरुचिरकलापे वर्त्तते यो मयूरे
वितरतु स कुमारो ब्रह्मचर्यश्रियं वः ॥ ४४ ॥

विनायकः

पायाद्गजेन्द्रवदनः स इमां त्रिलोकीं यस्योद्धतेन गगने महता करेण ।
मूलावलग्नसितदन्तबिसाङ्कुरेण नालायितं तपनबिम्बसरोरुहस्य ॥ ४५ ॥

( गणपतेः )

सुवर्णगिरिकर्णिके तरलतारकाकेसरे
चलज्जलदषट्पदे स्फुरदिगन्तपत्राष्टके ।
स वः प्रथमनायकः प्रदिशतु श्रियं चक्करः
करोति जगदम्बुजे वलितनाललीलायितम् ॥ ४६ ॥

क्षेमेन्द्रस्य ।

दानस्रोतस्सहस्रैर्दशनरुचिचयैः कुम्भसिन्दूरपूरै-
रुद्भूतैरेककालं प्रकटितरजनीघस्रसन्ध्याविलासाः ।
आस्फालस्फारघण्टाबहलकलकलव्याकुलाहीन्द्रदारा
हेरम्बस्याङ्गहारप्रचलदवनयः पान्तु वो नृत्तलीलाः ॥ ४७ ॥

कुम्भो[ पान्तात्पत ]द्भिर्मदजलनिवहैर्लब्धसेकातिरेका
प्रोन्मीलद्बालचन्द्राकृतिदशनमिषादङ्कुरं धारयन्ती ।
आलोलत्कर्णतालप्रचलमधुकरा शीकरासारपुष्पा
विस्तीर्णा हस्तवल्ली दिशतु गणपतेः प्रार्थ्यमानं फलं वः ॥ ४८ ॥

ते दूरोद्दण्डशुण्डाकुहरकवलितोत्क्षिप्तसप्ताब्धिलब्ध-
स्वेच्छासेकप्रमोदप्रभवनवरवद्राविताशागजेन्द्राः ।
देवस्याकाण्डकण्डूकरकरटतटाटोपसङ्घट्टभग्न-
क्षोणीभृत्तुङ्गशृङ्गाः पुरमथनशिशोः पान्तु वो दुर्विलासाः ॥ ४९ ॥

विश्वेश्वरस्यैते ।

विघ्नेशो वः स पायाद्विहृतिषु जलधीन् पुष्कराग्रेण पीत्वा
यस्मिन्नुद्धृत्य तोयं वमति बहुतरं दृश्यते व्योम्नि देवैः ।
क्वाप्यम्भः क्वापि विष्णुः क्वचन कमलभूः क्वाप्यनन्तः क्वचिच्छ्रीः
क्वाप्यौर्वः क्वापि शैलाः क्वचन मणिगणाः क्वापि नक्रादिसत्त्वाः॥५०॥

चन्द्रकला

दिश्याद्धूर्जटिजूटकोटिसरिति ज्योत्स्नालवोद्भासिनी
चान्द्री वः कलिका जलभ्रमिवशादाकृष्टनष्टा मुदम् ।
यां चञ्चच्छफरीभ्रमेण मुकुलीकुर्वन् फणाली मुहु-
र्मुह्यल्लक्ष्ममहिर्जिघृक्षतितमामाकुञ्चनप्रोञ्चनैः ॥ ५१ ॥

---

१ स्फाल ख. २ अम्भोत्पातं त्यज क. कुंभोत्प्रान्तं त्यज ख.

देहमविष्टाद्रिसुतामुखेन्दुद्वितीयखण्डार्थमिवागतो यः।
अवाप्तुकामः परिपूर्णभावं स पातु वः शम्भुजटार्धचन्द्रः ॥ ५२ ॥

बिल्हणस्य।

गङ्गा

मुक्ताभा नृकपालशुक्तिषु जटावल्लीषु मल्लीनिभा
वह्नौ लाजनिभा दृशो मणिनिभा भोगोत्करे भोगिनाम्।
नृत्तावर्त्तविवर्त्तनेरितपयः स्मूर्च्छनोच्चारिताः
खेलन्तो हरमूर्ध्नि पान्तु भवतो गङ्गापयोबिन्दवः ॥ ५३ ॥

कृष्णमिश्रस्य।

जङ्घालस्फूर्जदूर्जस्खलकरिमकरप्रौढसम्मर्दखेल-
त्कल्लोलोत्फुल्लबिन्दुस्तबकतिलकितव्योमकुक्षिम्भरीणि।
वारीणि स्वर्गसिन्धोस्त्रिपुरहरजटाजूटरथ्याध्वनीना—
न्युच्चैरुच्चण्डजाग्रत्कलिकलुषमषीशोषमुत्पोषयन्तु ॥ ५४ ॥

वेदव्यासस्य।

चण्डिकाभृङ्गिरिटी

देवी सूनुमसूत नृत्यत गणाः किं तिष्ठतेत्युद्भुजे
हर्षाद्भृङ्गिरिटाववाञ्चितगिरा( ? ) चामुण्डयाऽऽलिङ्गिते।
अव्याद्वो हतदेवदुन्दुभिघनध्वानातिरिक्तस्तयो—
रन्योन्यमचलास्थिपञ्जरजरत्कङ्कालजन्मा रवः ॥ ५५ ॥

सूर्यः

सिन्दूरस्पृहया स्पृशन्ति करिणां कुम्भस्थमाधोरणा
भिल्ली पल्लवशङ्कया विचिनुते सान्द्रं द्रुमद्रोणिषु।
कान्ताः कुङ्कुमकाङ्क्षया करतले मृद्नन्ति लग्नं च यत्
तत्तेजः प्रथमोद्भवं भ्रमकरं सौरं चिरं पातु वः ॥ ५६ ॥

त्रिविक्रमभट्टस्य।

१ च्छालि. ग. २ मोषमुद्धोषयन्तु. ग. शेषमुत्पोषयन्तु. ख ३. पपाञ्चित. ख.

एकस्मिन्नयने भृशं तपति यः काले सँ दाहक्रमो।
येनातन्यत यत्प्रकाशसमये नैशं पदं दुर्लभम्।
सव्योमावयवस्य यस्य विदिता लोके प्रकाशस्थितिः
श्रीसूर्यः क्षणसेवितोऽपि हि महादेवः स वस्त्रायताम्॥ ५७॥

(हरसूर्ययोः श्लेषः) कस्यापि।

खं येऽत्युज्ज्वलयन्ति लूनतमसो ये चानैखोद्भासिनो
ये पुष्णन्ति सरोरुहश्रियमधिक्षिप्ताब्जभासश्च ये।
ये मूर्धस्ववभासिनः क्षितिभृतां ये चामराणां शिरां-
स्याक्रामन्त्युभयेऽपि ते दिनपतेः पादाः श्रियै सन्तु नः॥ ५८॥

आनन्दवर्धनस्य।

अवतु वः सवितुस्तुरगावली स्फुरति मध्यगतारुणनायका।
समभिलम्भिततुङ्गपयोधरा मरकतैकलतेव नभश्रियः॥ ५९॥

कस्यापि।

पृथ्वी

भागीरथीहारलता कालिन्दीकबरीभरा।
सुमेरुशेखरा पृथ्वी पातु वः सागराम्बरा॥ ६०॥

राजशेखरस्य।

विष्णोराशिषः

हृदयं कौस्तुभोद्भासि हरेः पुष्णातु वः श्रियम्।
राधाप्रवेशरोधाय दत्तमुद्रमिव श्रिया॥ ६१॥

कुमुदस्य।

१ पदाह. ख. २ नघो. क. ३ लम्बित ख.

प्रत्यग्रोन्मेषजिह्मा क्षणमनभिमुखी रत्नदीपप्रभाणा-
मात्मव्यापारगुर्वी जनितजललवा जृम्भणैः साङ्गभङ्गैः।
नागाङ्कं मोक्तुमिच्छोः शयनमुरुफणाचक्रवालोपधानं
निद्राच्छेदाभिताम्रा चिरमवतु हरेर्दृष्टिराकेकरा वः॥ ६२॥

विशाखदेवस्य।

पाथोधेः परिमथ्यमानसलिलादुद्धोत्थितायाः श्रियः
सानन्दोल्लसितभ्रुवा कुटिलया दृष्टयैव पीताननः।
अज्ञातस्वकरद्वयीविगलितव्यालोलमन्थोरग-
शून्ये बाहुगतागतानि रचयन्नारायणः पातु वः॥ ६३॥

भक्तिप्रह्वविलोकनप्रणयिनी नीलोत्पलस्पर्धिनी
ध्यानालम्बनतां समाधिनिरतैर्नीते हितप्राप्तये।
लावण्यस्य महानिधी रसिकतां लक्ष्मीदृशोस्तन्वती
युष्माकं कुरुतां भवार्तिशमनं नेत्रे तनुर्वा हरेः॥ ६४॥

( वचनश्लेषः ) भार्गवतामृतदत्तस्य।

वत्से मागा विषादं श्वसनमुरुजवं सन्त्यजोर्ध्वप्रवृत्तं
कम्पः को वा गुरुस्ते भवतु बलभिदा जृम्भितेनात्र याहि।
प्रत्याख्यानं सुराणामिति भयशमनच्छद्मना कारयित्वा
यस्मै लक्ष्मीमदाद्वः स दहतु दुरितं मन्थमूढो पयोधिः॥ ६५॥

कस्यापि।

मत्स्यः

आदिमत्स्यस्य जयताद्यः श्वासोल्लासितैर्जलैः।
विदधे गगनेऽम्भोधिं गगनं च महोदधौ॥ ६६॥

क्षेमेन्द्रस्य।

१ ग. पाठः.

कर्मः

यन्निःश्वाससमीरमेदुरतया दूरं समुल्लासिता
धत्ते शेषभुजङ्गभोगकलिता भूरातपत्रश्रियम् ।
स्तोत्रे यस्य चतुर्मुखी श्रुतिकवेः कुण्ठत्वमभ्यस्यति
क्रीडाकूर्मतनुर्जगन्ति स विभुः पायादपायाद्धरिः ॥ ६७ ॥

मेधी(?)भूय महाब्धिमन्थनविधौ पृष्ठे निजे भ्राम्यतो
माऽभून्मन्दरपर्वतस्य च परिभ्रंशः समुद्रस्य च ।
इत्यङ्गैः सह सञ्जहार किल यः श्वासान् स वो रक्षतात्
स्वेच्छावर्त्तितकच्छपायिततनुस्त्रैलोक्यरक्ष्यो हरिः ॥ ६८ ॥

कयोरप्येतौ ।

पृष्ठभ्राम्यदमन्दमन्दरगिरिग्रावाग्रकण्डूयना-
न्निद्रालोः कमठकृतेर्भगवतः श्वासानिलाः पान्तु वः ।
यत्संस्कारकलानुवर्त्तनवशाद्वेलाच्छलेनाम्भसा
यातायातमतन्द्रितं जलनिधेर्नाद्यापि विश्राम्यति ॥ ६९ ॥

हनूमतः ।

वराहः

हरेर्लीलावराहस्य दंष्ट्रादण्डः स पातु वः ।
हेमाद्रिकलशा यत्र धात्री छत्रश्रियं दधौ ॥ ७० ॥

वादीश्वरकाञ्चनस्य ।

मुक्तैर्यास्यति कुत्रचिद्वसुमती दंष्ट्राङ्कुरस्थेयसी
कुक्षौ [क्षोभ]मवाप्स्यति त्रिभुवनं रुद्धैरमीभिः किल ।
इत्यस्वल्पविकल्पमीलितमतेः कण्ठे लुठन्तो ज्वल-
त्कोलाकारधरस्य कैटभजितः श्वासोर्मयः पान्तु वः ॥ ७१ ॥

बिभ्राणोऽभिनवेन्दुकोटिकुटिलं दंष्ट्राङ्कुरं लीलया
क्रोडाकारधरो हरिः स भवतां भूय द्विभूतिप्रदः ।
यस्योत्क्षिप्तवतः क्षमाकमलिनीमालम्बमानः क्षणं
लोलद्वालमृणालतन्तुतुलनां भेजे भुजङ्गेश्वरः ॥ ७२ ॥

१ कर्णत्व. क. २ लक्ष्यो. क. ३. क्षेम. क. ख. ४ कलनाम्. ख.

पातु त्रीणि जगन्ति सन्ततमकूपारात्समभ्युद्धरन्
धात्रीं कोलकलेवरः स भगवान् यस्यै[1]कदंष्ट्राङ्कुरे।
कूर्मः कन्दति नालति द्विरसनः पत्रन्ति दिग्दन्तिनो
मेरुः कोशति मेदिनी जलजति व्योमापि लोलम्बति ॥ ७३ ॥

हनूमतः।

लीने श्रोत्रैकदेशे नभसि नयनयोस्तेजसि क्वापि याते
श्वासग्रासोपभुक्ते मरुति जलनिधौ पादरन्ध्राद्धपीते।
पोत्रप्रान्तैकरोमान्तरविवरगतां मार्गतः शार्ङ्गपाणेः
क्रोडाकारस्य पृथ्वीमविकलवि[2]भ[वं] वैभवं वः पुनातु ॥ ७४ ॥

वराहमिहिरस्य।

नृसिंहः

चन्द्रार्धायितरिष्वयान(?)दशनो व्योमायितान्तर्मुखो
बालार्कायितलोचनः सुरधनुर्लीलायितभ्रूलतः।
अन्तर्नादनिरोधपीवरगलन्यक्कापनिर्यत्तडि-
त्तारस्फारसटावरुद्धगगनः पायान्नृसिंहो जगत् ॥ ७५ ॥

हनूमतः।

किं किं सिंहस्ततः किं नरसदृशवपुर्देव चित्रं ग्रहीतो
नैवाद्यापि प्रचण्डो द्रुतमुपनयतायं ननु प्राप्त एव।
चापं चापं नखा[3] [ग्रं] त्वरितमहहहा कर्कशत्वं नखाना-
मित्येवं दैत्यराजं निजनखकुलिशैर्जघ्निवान् यः स वोऽव्यात् ॥ ७६ ॥

चटिच्चटिति चर्मणि च्छमिति चोच्चलच्छोणिते
धगिद्धगिति मेदसि स्फुटरवेऽस्थिनि ष्ठादिति।
पुनातु भवतो हरेरमरवैरिनाथोरसि
क्वणत्करजपञ्जरक्रकचकोपजन्मा रवः ॥ ७७ ॥

वाक्पतिनाथस्यैतौ।

१ न्व. क. २ विभवो. क. ख. ३ ङ्गं. क. ख. ४ त्वान्न क. ख.

क्वेदं गर्जितमेष किन्नु दलति स्तम्भो नृसिंहस्तत-
स्सोऽत्राधात्रति कोऽत्र भो धनुरसी हुंहेति दैत्येश्वरम्।
जल्पन्तं निजगर्जितेन बलवत् स्तम्भान्निरीयावधी-
देकस्मिन् क्षण एव हा नरहरिस्त्राता स एवास्तु वः॥ ७८॥

सूक्तिसहस्रात्।

सन्ध्यारञ्जितशीतदीधितिकलासौन्दर्यभाजो नखाः
प्रीतिं पीवरयन्तु कैटभरिपोः क्रोडानृसिंहस्य वः।
दैत्योरस्थलपीठकुण्ठिततया दीनेन दम्भोलिना
सासूयं सकुतूहलं सविनयं साश्चर्यमालोकिताः॥ ७९॥

बालसरस्वत्याः।

पूर्यन्ते जलराशयो वसुमती मज्जत्यधो लुप्यते
पातालं शतधा गतं निपतति ब्रह्माण्डखण्डं दिवः।
निक्षिप्तेन सुरद्विषोऽस्य वपुषा मत्वेति मन्ये वह-
न्नुत्सङ्गेन हतं हिरण्यकशिपुं सिंहो हरिः पातु वः॥ ८०॥

कस्यापि।

वामनः

अपसर पृथिवि समुद्राः संवृणुताम्बूनि भूधरा नमत।
वामनहरिलघुतुन्दे जगतां कलहः स वः पायात्॥ ८१॥

कस्यापि।

आकृष्टः शिखया नखैर्विलिखितः स्पृष्टः कपोलस्थले
मौलौ दामभिराहतः प्रतिदिशं क्रामन् सलीलं पथि।
इत्थं वारविलासिनीकृतपरीहासस्य दैत्याध्वरे
विष्णोर्वामनवेषविभ्रमभृतो हासोर्मयः पान्तु वः॥ ८२॥

कस्त्वं ब्रह्मन्नपूर्वस्त्वदनुचरजनो नास्त्यनाथोऽहमेकः
किं दद्यामीप्सितं ते त्रिपदविहरणस्थानमेतत् कियत्ते।
त्रैलोक्यं तद्द्विजातेर्मम शमनिरतस्येति संमू( गू ? )ढभावा
विष्णोर्वाचः सुरारौ कृतकपटपदन्यासमुग्धाः पुनन्तु॥ ८३॥

एतौ हनूमतः।

त्रिविक्रमः

हरिपादः स वः पायाल्लम्भितो यः स्वयम्भुवा ।
यस्यासन्नरवेरासीत् स्वेदरेखेव जाह्नवी ॥ ८४ ॥

राजशेखरस्य ।

किं छत्रं किन्नु रत्नं तिलकमुत तथा कुण्डलं कौस्तुभो वा
चक्रं किं वारिजं वेत्यमरयुवतिभिर्यद्बलिद्वेषिदेहे ।
ऊर्ध्वं मौलौ ललाटे श्रवसि हृदि करे नाभिदेशे च दृष्टं
पायात्तद्वोऽर्कबिम्बं स च दनुजरिपुर्वर्धमानः क्रमेण ॥ ८५ ॥

हनूमतः ।

ब्रह्माण्डच्छत्रदण्डः शतधृतिभवनाम्भोरुहो नालदण्डः
क्षोणीनौकूपदण्डः क्षरदमरसरित्पट्टिकाकेतुदण्डः ।
ज्योतिश्चक्राक्षदण्डस्त्रिभुवनभवनस्तम्भदण्डोऽङ्घ्रिदण्डः
श्रेयस्त्रैविक्रमस्ते वितरतु विबुधद्वेषिणां कालदण्डः ॥ ८६ ॥

दण्डिनः ।

चन्द्रार्कौ यावदङ्घ्र्युद्भवदमरसरित्तोयताम्यत्त्रिलोकी-
केदारे देवलक्ष्मीपुनरुदयविधौ बीजभावं भजन्त्यः ।
वित्रस्यद्भूर्भुवःस्वःक्रमणकुतुकिनो निष्पतन्त्यः समन्ता-
द्दीयासुर्दानवारेः पदकमलरजोराजयो मङ्गलं वः ॥ ८७ ॥

देवबोधेः ।

परशुरामः

लीलोन्मूलितमौलिमस्तचरणं मूर्धस्वपि क्ष्माभृता-
मास्कन्धादपबाहुशाखमभितः कृत्वा सहस्रार्जुनम् ।
यश्चक्रे भुवने तमेव विजयस्तम्भं कुठारायुधो
वर्त्तां वः शिवमाहवैकरसिको रामः स राजान्तकः ॥ ८८ ॥

दाशरथी रामः

कूर्मो मूलवदालवालवदपां नाथो लतावद्दिशो
मेघाः पल्लववत्प्रसूनफलवन्नक्षत्रसूर्यादयः ।

स्वामिन् व्योमतलं[1] ममाक्रमवतः श्रुत्वेति गां मारुतेः
सीतान्वेषणमादिशन् दिशतु वो रामः सलज्जः श्रियम् ॥ ८९ ॥

कृष्णः

गीतीर्वैणव[2]मन्द्रगानमधुराः सम्भावयन्निर्भर-
स्वेदाम्बुस्नपितं विलोक्य पुरतो राधामुखाम्भोरुहम् ।
उत्कम्पस्खलदङ्गुलिः परिगलद्वेणुर्निमीलध्वनिः
स्विद्यत्पाणिरपाकरोतु दुरितं गोपालवेषो हरिः ॥ ९० ॥

माधव[3]शीलस्य ।

रामो नाम बभूव हुं तदबला सीतेति हुं तां पितु-
र्वाचा पञ्चवटीवन विहरतस्तस्याहरद्रावणः ।
कृष्णेनेति पुरातनीं निजकथामाकर्ण्य मात्रेरितां
सौमित्रे क्व धनुर्धनुर्धनुरिति व्यग्रा गिरः पान्तु नः ॥ ९१ ॥

वसुन्धरस्य ।

यामिन्यां परिवृत्तिभाजि चरिते चाराय वृन्दे गवां
गोपानां च विषाणवेणुतुमुलध्वाने समुत्सर्पति ।
गाढालिङ्गितराधिकाभुजलताबद्धस्य कंसद्विषो
यातुं स्थातुमनीश्वरस्य मनसो डोलायितं पातु वः ॥ ९२ ॥

मदनस्य ।

दृष्ट्या केशव गोपराग[4]हृतया किञ्चिन्न दृष्टं मया
तेनैव स्खलिताऽस्मि नाथ पतितां किन्नाम नालम्बसे ।
एकस्त्वं विषमेषु खिन्नमनसां सर्वाबलानां गति-
र्गोप्यैवं गदितः सलेशमवताद्गोष्ठे हरिर्वश्चिरम् ॥ ९३ ॥

अपराधं न शृणुमो न चासत्यं त्वयोदितं ।
गोप्येति गदितः कृष्णस्तूष्णीं तिष्ठन् पुनातु वः ॥ ९४ ॥

केयोरप्येतौ[5] ।

---

१ तलमम क्रमतलं ग. २ यन्त्रदा क. ख. गानमन्द्र ग. ३ माधवशिवस्य. क. मालतीमाधवस्य. ग.
४ हृतया. क. ५ त्रिभुवनपालस्य. ग. घ ( ९४ श्लोकमात्रम् )

बुद्धः

ध्यानव्याजमुपेत्य चिन्तयासि कामुन्मील्य चक्षुः क्षणं
पश्यानङ्गशरातुरं जनमिमं त्राताऽपि नो रक्षसि ।
मिथ्याकारुणिकोऽसि निर्घृणतरस्त्वत्तः कुतोऽन्यः पुमा-
नित्थं मा[1]रवधूभिरित्यभिहितो बुद्धो हरिः पातु वः ॥ ९५ ॥

श्रीहर्षस्य ।

नेमिः—जिनाश्च

प्राज्यप्रभावप्रभवो धर्मस्यास्तरजस्तमाः ।
मुक्तात्मानः शिवं नेमिरन्येऽपि ददतां जि[2]नाः ॥ ९६ ॥

वचनश्लेषः । धन[3]पालस्य ।

लक्ष्मीः

[4]पायात्पयोधिदुहितुः कपोलामलचन्द्रमाः ।
यत्र संक्रान्तबिंबेन हरिणा हरिणायितम् ॥

कस्यापि ।

युक्तं मानद मामनन्यमनसं वक्षस्थलस्थायिनीं
भक्तामप्यवधूय कर्तुमधुना कान्तासहस्रं तव ।
इत्युक्त्वा फणभृत्फणामणिगतां स्वामेव मत्वा तनुं
निद्राच्छेदकरं हरेरवतु वो लक्ष्म्या विलक्षस्मितम् ॥ ९७ ॥

पीनश्रोणि गभीरनाभिनिभृतं भूभृद्दृशोच्चस्तनं
पायाद्वः परिरब्धमब्धिदुहितुः कान्तेन कान्तं वपुः ।
स्वावासानुपघातनिर्वृतमनास्तत्कालमीलद्दृशे
यस्मै सोऽच्युतनाभिपद्मवसतिर्वेधाः श्रियं ध्यायति ॥ ९८ ॥

केषामप्येते ।

---

१ मान. ख. २ जनाः क. ख. ३ धनपालस्येति ग. घ. पुस्तकयोः पाठः ४ अयं श्लोकः सूक्तिमुक्तावली-सङ्ग्रहे. ग. पुस्तके दृश्यते, तदस्य सूक्तिमुक्तावल्यां पाठो न्याय्यः ।

रुक्मिणी

श्लाघ्याशेषतनुं सुदर्शनकरः सर्वाङ्गलीलाजित-
त्रैलोक्यां चरणारविन्दचलितेनाक्रान्तलोको हरिः ।
बिभ्राणां मुखमिन्दुसुन्दररुचं चन्द्रार्द्धतुल्यालिकः
स्थाने यां स्वतनोरपश्यदधिकां सा रुक्मिणी वोऽवतात् ॥ ९९ ॥

आनन्दवर्धनस्य ।

राधा

राधा पुनातु जगदच्युतदत्तदृष्टि[1]-
र्मन्थानिकां[2] विदधती दधिरिक्तपात्रे ।
तस्याः स्तनस्तबकचूचुककल्लोल[3]दृष्टि-
र्देवोऽपि दोहनधिया वृषभं[4] निरुन्धन् ॥ १०० ॥

लीलाशुकस्य[5] ।

देवकी

अव्यात्स्वर्लोकचूडामणिपटलशिखाश्रेणिशोणीकृताङ्घ्रिः
क्षोणीभारं विनेतुं जठरजुषि जगद्बान्धवे देवकी वः ।
राज्ञामुद्दामदोष्णां रणशिरसि रणत्कीकसच्छेदभीमाः
शस्त्राणां खणत्काराः प्रतिहतिगुरवो यच्छ्रुतेर्दोहदोऽभूत् ॥ १०१ ॥

कयोरप्येतौ ।

शङ्खः

गृहीतखण्डः शशिशेखरेण प्राप्तः शचीवोदरपूरणाय ।
भुजेन(पुञ्जेन ? )लक्ष्मीमुखचन्द्रभासां स पातु वः श्रीपतिपाञ्चजन्यः॥ १०२ ॥

हरिहरौ

स्फटिकमरकतश्रीहारिणोः प्रीतियोगात्
तदवतु वपुरेकं कामकंसद्विषोर्वः ।
भवति गिरिसुतायाः सार्द्धमब्धेर्दुहित्रा ।
सदृशमहसि कण्ठे यत्र सीमाविवादः ॥ १०३ ॥

कविरत्नस्य[7] ।

---

१ चित्ता. क. २ मन्थानमाकलयते. क. ख. ३ चञ्चललोचनालिः. ग. ४ धवलं. ग. ५ लीलाशुकस्येति. [illegible] ६ नाडकी ख. ७ कविरत्नस्येति ग. पुस्तके.

येन ध्वस्तमनोभवेन बलिजित्कायः पुरास्त्रीकृतो
यश्चोद्वृत्तभुजङ्गहारवलयो गङ्गां च योऽधारयत् ।
यस्याहुः शशिमच्छिरो हर इति स्तुत्यं च नामामराः
पायात्स स्वयमन्धकक्षयकरस्त्वां सर्वदो माधवः ॥ १०४ ॥

चैन्द्रकस्य[1] ।

ब्रह्माशिषः

जातस्तेऽधरखण्डनात् परिभवः कापालिकादम्ब यत्
तद्ब्रह्मादिषु कथ्यतामिति वचो बाल्याच्छिशौ जल्पति ।
गौरीं पाणियुगेन षण्मुखवचो रोद्धुं निरीक्ष्याक्षमां
वैलक्ष्याच्चतुराननस्य वदनाद्वृत्तिश्चिरं पातु वः ॥ १०५ ॥

आगस्कारिणि कैटभप्रमथने तत्ताडनार्थं रुषा
नाभीपङ्कजमस्त्रतां गमयितुं जाते प्रयत्ने श्रियः ।
स्वावासोन्मथनोपपादितभयभ्रान्तात्मनस्तत्क्षणा—
दब्रह्मण्यपराः पुरातनमुनेर्वाग्वृत्तयः पान्तु वः ॥ १०६ ॥

सरस्वती

वचांसि वाचस्पतिमत्सरेण साराणि लब्धुं ग्रहमण्डलीव ।
मुक्ताक्षसूत्रत्वमुपैति यस्याः सा सप्रसादाऽस्तु सरस्वती वः ॥ १०७ ॥

बिल्हणस्य ।

वारणः

कुम्भद्वयं तदमरद्विरदस्य वोऽव्यादुद्भिद्यमानमुदधेर्मथनावसाने ।
प्रोद्यद्द्वितीयकमलाकुचशङ्किनीभिः सेर्ष्यं यदैक्षत सुरासुरसुन्दरीभिः ॥ १०८ ॥

भट्टेन्दुराजस्य ।

इति श्रीमदारोहकभगदत्तजल्हणदेवविरचितायां सूक्तिमुक्तावल्यामाशीःपद्धतिः समाप्ता ।

---

[1] चन्द्रकस्येति ग. पुस्तके ।

# अथ सुभाषितप्रशंसा ( ३ )

सुभाषितरसास्वादजातरोमाञ्चकञ्चुकाः।
विनाऽपि कामिनीसङ्गं कवयः सुखमासते ॥ १ ॥

कस्यापि।

क्रान्तमपोज्झति खेदं तप्तं निर्वाति बुध्यते मूढम्।
स्थिरतामेति च सङ्कुलमुपयुक्तसुभाषितं चेतः ॥ २ ॥

कथमिह मनुष्यजन्मा सम्प्रविशतु सदसि विबुधगणनायाम्।
येन न सुभाषितामृतमाह्लादि निपीतमातृप्तेः ॥ ३ ॥

तुष्टिर्न राज्ञो धनसञ्चयेन तृप्तिर्न [मी]नस्य महाजलेन।
तृप्तिर्न सूरेश्च सुभाषितेन तृप्तिर्न दृष्ट्योः प्रियदर्शनेन ॥ ४ ॥

पुंसां तदेव भूषणमुपकारकमवसरे धनं मुख्यम्।
सूक्तं दधति सुवर्णं कल्याणमनर्घमिह धन्याः ॥ ५ ॥

नृपसभसरसी परितः पूर्णाऽपि जडैर्न कान्तिमुद्वहति।
मुखकमलानि न यस्यां सूक्तालिक्वणितमधुराणि ॥ ६ ॥

वल्लभदेवस्यैते।

किं हारैः किमु कङ्कणैः किमसमैः कर्णावतंसैरलं
केयूरैर्मणिकुण्डलैरलमलं साडम्बरैरम्बरैः।
पुंसामेकमखण्डितं पुनरिदं मन्यामहे मण्डनं
यन्निष्पीडितपार्वणामृतकरस्यन्दोपमाः सूक्तयः ॥ ७ ॥

कस्यापि।

इति भगदत्तजल्हणरचितायां सूक्तिमुक्तावल्यां सुभाषितप्रशंसापद्धतिः।

---

१ ख. पुस्तके अयं श्लोको नास्ति। क्लिष्टिः, क २. यस्याः ख. ३ किमु सुमैः क.

# कविकाव्यप्रशंसा ( ४ )

[ तत्र—सामान्यकविकाव्यप्रशंसा ]

कं पृच्छामः सुराः स्वर्गे निवसामो वयं भुवि
किं वा काव्यरसः स्वादुः किं वा स्वादीयसी सुधा ॥ १ ॥

कस्यापि ।

तेभ्यो नमः कविभ्यो येषां विमलानि पद्यानि ।
श्रुतिमधिरोहन्ति सतां कण्ठेऽपि गुणैः पदं दधति ॥ २ ॥

वल्लभदेवस्य ।

कवीनां मानसं नौमि तरन्ति प्रतिभाम्भसि ।
यत्र हंसवयांसीव भुवनानि चतुर्दश ॥ ३ ॥

राजशेखरस्य ।

लङ्कापतेः सङ्कुचितं यशो यद्यत्कीर्तिपात्रं रघुराजपुत्रः ।
स सर्व एवादिकवेः प्रभावो न कोपनीयाः कवयः क्षितीन्द्रैः ॥ ४ ॥

महीपतेः सन्ति न यस्य पार्श्वे कवीश्वरास्तस्य कुतो यशांसि ।
भूपाः कियन्तो न बभूवुरुर्व्यां नामापि जानाति न कोऽपि येषाम् ॥ ५ ॥

बिल्हणस्यैतौ ।

श्रमं छन्दाभ्यासे दधति कवयः केवलममी
नरेन्द्राणां वृत्तैः शुचिभिरुपयोगः स तु गिराम् ।
असौ वोढुं कण्ठः परमधिकृतः पक्ष्मलदृशा-
मलङ्कारो हारः कुचकलशयोरेव भवति ॥ ६ ॥

श्रीमुरारेः ।

श्रुतसम्पदः कवीनामुक्तिभिरेव प्रकाशतां यान्ति ।
सिन्धोरपारजलभरमुद्गारा एव कथयन्ति ॥ ७ ॥

वक्तार एव कवयः सूक्तानि महार्घतां नयन्त्यन्ये ।
प्रभवः पयोधिरुपचितिरीश्वरभवनेषु रत्नानाम् ॥ ८ ॥

१ किं वदामो, क. २ रप क.

अनवहितः किमशक्तो विबुधैरभ्यर्थितः किमतिरसिकः ।
सर्वंकषोऽपि कालस्तिरयति सूक्तानि न कवीनाम् ॥ ९ ॥

वल्लभदेवस्यैते ।

संस्पर्धिनः पीनपयोधराणां जयन्ति ते सत्कवयः सुवृत्ताः ।
अन्तर्मुखत्वेन समुल्लसन्तो हरन्ति ये सर्वजनस्य चेतः ॥ १० ॥

असौ रसौचित्यगुणोज्ज्वलोऽपि गुम्फो न काव्यव्यपदेशयोग्यः ।
धत्ते खलस्यापि न दुर्विषह्यद्वेषग्रहोत्सारणमन्त्रतां यः ॥ ११ ॥

बिल्हणस्य ।

कर्त्तव्या चार्थसारेऽपि काव्ये शब्दविचित्रता ।
विना घण्टाटणत्कारं गजो गच्छन्न शोभते ॥ १२ ॥

राजशेखरस्य ।

अविदितगुणाऽपि सुकवेर्भणितिः कर्णेषु वमति मधुधाराम् ।
अनधिगतपरिमलाऽपि हि हरति दृशं मालतीमाला ॥ १३ ॥

सुबन्धोः ।

पदविह्वलता क्वापि स्पृहणीया भवति सत्कवीन्द्राणाम् ।
घनजघनस्तनमण्डलभारालसकामिनीनां च ॥ १४ ॥

मदनस्य ।

परितुष्यन्ति महान्तः काव्यैः सुकुमारमधुरसुश्लिष्टैः[1] ।
कपटबकोटककीकटभटनटतुल्योद्भटैरपरे ॥ १५ ॥

काव्यं चार्वपि रसिकप्रीतिकरं भवति नैकरसबद्धम् ।
सुरतमनाहितकलहं हरिणदृशो नाभिनन्दयति ॥ १६ ॥

सुकविश्रमानभिज्ञे श्रोतरि वचनानि विफलतां यान्ति ।
भर्तरि मुग्धे प्रौढप्रमदारतविलसितानीव ॥ १७ ॥

दत्ता तेन[3] कविभ्यः पृथिवी सर्वैव कनकसंपूर्णा ।
अनवद्यसूक्तिरचनाश्रममेषां यो विजानाति ॥ १८ ॥

वल्लभदेवस्यैते ।

१ थ, ग. २ श्लेषैः. ख. ३ नेन-ख.

विपुलहृदयाभियोग्ये खिद्यति काव्ये जडो न मौर्ख्ये स्वे ।
निन्दति कञ्चुकमेव प्रायः शुष्कस्तनी नारी ॥ १९ ॥

अर्गटस्य ।

व्याकरणादधिगतमपि कविवदने शब्दवृन्दमन्यादृक् ।
नटशिक्षितमपि करणं तरुणीकरणे तदन्यदिव ॥ २० ॥

मालतीमाधवस्य ।

जुगुप्सितमिदं धात्रा कृतं द्वितयमेव हि ।
खलोपसर्गः काव्यानां पद्मानां च हिमागमः ॥ २१ ॥

सूक्तिसहस्रात् ।

काव्ये भाव्यं गुणैस्तत्र दुर्जना दूषयन्ति यत् ।
न दुर्गतगृहे सन्धिर्दीयते जातु दस्युभिः ॥ २२ ॥

राजशेखरस्य ।

जडेषु जातप्रतिभाभिमानाः खलाः कवीन्द्रोक्तिषु के वराकाः ।
प्राप्ताग्निनिर्वापणगर्वमम्बु [1]रत्नाङ्कुरज्योतिषि किं करोति ॥ २३ ॥

बिल्हणस्य ।

प्रियामुखं कोपकषायितं च जलावमृष्टश्च मणिप्रदीपः ।
खलाभियुक्ताऽपि कवीन्द्रवाणी सौन्दर्यमेवाधिकमुद्वहन्ति ॥ २४ ॥

सिह्लकवेः ।

सन्त्येव सूक्तिरसिका बहवो मनुष्याः
स्वर्गौकसो नवसुधारसनिर्वृताश्च ।
तौ दुर्लभौ कविवचःस्खलितस्य सोढा
मर्त्येषु सागररसस्य च यः सुरेषु ॥ २५ ॥

उत्प्रेक्षावल्लभस्य

सत्काव्यपीयूषसमुद्रमध्ये न बाडवाग्निर्न च कालकूटः ।
तस्यावगाहेन तथाऽपि चित्रं खलस्य तापः परमोऽभ्युदेति ॥ २६ ॥

वत्सराजस्य

१ रत्नाकर. क.

कर्णामृतं सूक्तिरसं विहाय दोषेषु यत्नः सुमहान् खलस्य ।
अवेक्षते केलिवनं प्रविष्टः क्रमेलकः कण्टकिजालमेव ॥ २७ ॥
कुण्ठत्वमायान्ति गुणाः कवीनां साहित्यविद्याश्रमवर्जितेषु ।
कुर्यादनार्द्रेषु किमङ्गनानां केशेषु कृष्णागरुधूपवासः ॥ २८ ॥

बिल्हणस्यैतौ ।

निरवद्यानि पद्यानि यद्यनार्यस्य का क्षतिः ।
भिक्षुकक्षाविनिक्षिप्तः किमिक्षुर्नीरसो भवेत् ॥ २९ ॥

मालतीमाधवस्य ।

क्वचिद्वस्तु स्फारं कतिपयपदैरर्पितगुणं
क्वचित्सङ्क्षिप्तेऽर्थे प्रचुरवचनैरेव रचना ।
यथावाच्यं शब्दाः क्वचिदपि तुलायामिव धृता-
स्त्रिभिः कल्पैरेवं कविषु खलु शब्दार्थनियमः ॥ ३० ॥

कस्यापि ।

येषां कोमलकाव्यकौशलकला लीलावती भारती
तेषां कर्कशतर्कवक्रवचनोद्गारेण किं हीयते ।
यैः कान्ताकुचमण्डले कररुहाः सानन्दमारोपिता-
स्तैः किं मत्तकरीन्द्रकुम्भशिखरे नारोपणीयाः शराः ॥ ३१ ॥

अपि मुदमुपयान्तो वाग्विलासैः स्वकीयैः
परभणितिषु तोषं यान्ति सन्तः कियन्तः ।
निजरसमकरन्दस्यन्दपूर्णालवालः
कलशसलिलसेकं नेहते किं रसालः ॥ ३२ ॥

जयदेवस्यैतौ ।

शाणोत्कीर्णमिवोज्ज्वलद्युति पदं बन्धोऽर्द्धनारीश्वर-
श्लाघालङ्घनजाङ्घिको दिवि लतोद्भिन्नेव चार्थोद्गमः ।
किञ्चित्खण्डितचन्द्रमण्डलगलत्पीयूषहृद्यो रस-
स्तत्किञ्चित्कविकर्ममर्म न पुनर्वाक्डिण्डिमाडम्बरः ॥ ३३ ॥

मदनस्य ।

१ काव्ये. ख. २ विष. ख

यदेतद्वागर्थव्यतिकरमयं किञ्चिदमृतं
प्रमोदप्रस्यन्दैः सहृदयमनांसि स्नपयति ।
इदं काव्यं श्राव्यं स्फुरति तु यदत्राणु परमं
तदन्तर्बुद्धीनां स्फुटमथ च वाचामविषयः ॥ ३४ ॥

पदव्यक्तिव्यक्तीकृतसहृदयानन्दसरणौ
कवीनां काव्ये न स्फुरति बुधमात्रस्य धिषणा ।
नवव्रीडावेश[1]व्यसनपिशुनो यः कुलवधू-
कटाक्षाणां पन्थाः स खलु गणिकानामविषयः ॥ ३५ ॥

हरिहरस्य ।

अनुद्धुष्टः शब्दैरथ[2] घटनतश्च स्फुटतरः
पदानामर्थात्मा सुखयति न तूत्तानितरसः ।
यथा किञ्चित्किञ्चित्पवनचलचीनांशुकतया
कुचाभोगः स्त्रीणां सुखयति न तूद्घाटितमुरः ॥ ३६ ॥

धर्मा[3]शोकस्य ।

या केवलं स[4]रसता तदपण्डित्वं व्युत्पत्तिरेव यदि नीरसता तदा स्यात् ।
योगस्तयोस्तु घनसारकुरङ्गनाभिमेलापवत्परिमलं कमपि प्रसूते ॥ ३७ ॥

विद्यापतेः ।

वनजल[धि][5]महीभृत्सिंहमातंगपूर्वो
भवति पुरुषभीमः प्रेक्षितो भाववर्गः ।
ननु भवति स एव प्रीतिहेतुः कुतोऽपि
श्रुतिपथमुपनीतः सूक्तिभिः सत्कवीनाम् ॥ ३८ ॥

सूक्तिसहस्रात् ।

इति सामान्यकविकाव्यप्रशंसा ।

---

१ वेष क. ख. २ रथ च घटनातः स्फु. ग. घ. ३ धर्मश्लो. क ख. ४ सरलता ग. ५ द. क. ख.

विशेषकविकाव्यप्रशंसा ।

यस्मादियं प्रथमतः परमामृतौघनिर्घोषिणी सरससूक्तितरङ्गभङ्गिः ।
गङ्गेव धूर्जटिजटाञ्चलतः प्रवृत्ता वृत्तेन वाक्तमहमादिकविं प्रपद्ये ॥ ३९ ॥

वामननागस्य ।

व्यासादिभिः कविवरैरवसादितोऽपि
शून्यत्वमाप कलयाऽपि न वाक्प्रपञ्चः ।
आनन्दनिर्भरचकोरसहस्रपीतं
चान्द्रं महः क्षयमुपैति न मात्रयाऽपि ॥ ४० ॥

भट्टसोमेश्वरस्य ।

चर्चाभिश्चारणानां क्षितिरमण परां प्राप्य संमोदलीलां
मा कीर्तेः सौविदल्लानवगणय कविव्रातवाणीविलासान् ।
गीतं ख्यातं न नाम्ना किमपि रघुपतेरद्य यावत्प्रसादा-
द्वाल्मीकेरेव धात्रीं धवलयति यशोमुद्रया रामभद्रः ॥ ४१ ॥

तमृषिं मनुष्यलोकप्रवेशविश्रामशाखिनं वाचाम् ।
सुरलोकादवतारश्रान्तरखेदच्छिदं वन्दे ॥ ४२ ॥

एतौ( श्री )मुरारेः ।

भास्वद्वंशवतंसकीर्तिरमणीरङ्गप्रसङ्गस्वन-
द्वादित्रप्रथमध्वनिर्विजयते वल्मीकजन्मा कविः ।
पीत्वा यद्वदनेन्दुमण्डलगलत्काव्यामृताब्धेः किम-
प्याकल्पं कविनूतनाम्बुदमयी कादम्बिनी वर्षति ॥ ४३ ॥

जयदेवस्य ।

यदाननेन्दोरमृतप्रवाहिनी विनिस्सृता पञ्चमवेदचन्द्रिका ।
तमश्च तापं च निहन्ति देहिनां ननु श्रुतीनां व्यसिता स नैकशः ॥ ४४ ॥

सूक्तिसहस्रात् ।

स्वस्ति पाणिनये तस्मै यस्य रुद्रप्रसादतः ।
आदौ व्याकरणं काव्यमनु जाम्बवतीजयः ॥ ४५ ॥

१ व्रति. क; इति. ख. २ नने.

यथार्थता कथं नाम न स्याद्वररुचेरिह ।
व्यधत्त कण्ठाभरणं यः सदारोहणप्रियः ॥ ४६ ॥

राजशेखरस्यैतौ ।

सूत्रधारकृतारम्भैर्नाटकैर्बहुभूमिकैः ।
सपताकैर्यशो लेभे भासो देवकुलैरिव ॥ ४७ ॥

बाणभट्टस्य ।

भासनाटकचक्रेऽपि च्छेकैः क्षिप्ते परीक्षितुम् ।
स्वप्नवासवदत्तस्य दाहकोऽभून्न पावकः ॥ ४८ ॥

तौ शूद्रिककथाकारौ रम्यौ रामिलसोमिलौ ।
काव्यं ययोर्द्वयोरासीदर्धनारीश्वरोपमम् ॥ ४९ ॥

राजशेखरस्यैतौ ।

सम्यक् बाणद्वितीयेन नमदाकारधारिणा ।
धनुषेव गुणाढ्येन निःशेषो रञ्जितो जनः ॥ ५० ॥

त्रिविक्रमभट्टस्य ।

मन्ये बृहत्कथाम्भोधेर्बिन्दुमादाय निर्मिता ।
तेनेतरकथाकन्था न विभान्ति तदग्रतः ॥ ५१ ॥

धनपालस्य ।

हुता शिखिनि गौणाढ्या स्तोकशेषाऽपि सा कथा ।
सुरलीढेन्दुलेखेव लोके पूज्यतमाऽभवत् ॥ ५२ ॥

जगत्यां ग्रथिता गाथाः शातवाहनभूभुजा ।
व्यधुर्धृतेस्तु विस्तारमहो चित्रपरम्परा ॥ ५३ ॥

राजशेखरस्यैतौ ।

कवीनामगलद्दर्पो नूनं वासवदत्तया
शक्त्येव पाण्डुपुत्राणां गतया कर्णगोचरम् ॥ ५४ ॥

बाणस्य ।

श्रोत्रेतराणि भुवने करणान्यसङ्ख्यै-
श्चत्वारि तृप्तिमहतां विषयैर्लभन्ते ।
श्रोत्राय पक्वसुकृतस्य जनस्य पुण्याः
श्रीकालिदासगिर एव दिशन्ति तृप्तिम् ॥ ५५ ॥

अन्तरं कियदाख्यान्ति सन्तो रघुकिरातयोः
अन्तरं तावदाख्यान्ति सन्तो रघुकिरातयोः ॥ ५६ ॥

शूरश्शास्त्रविधेर्ज्ञाता साहसाङ्कः स भूपतिः ।
सेव्यं सकललोकस्य विदधे गन्धमादनम् ॥ ५७ ॥

कस्यापि ।

कृत्स्नप्रबोधकृद्वाणी भा रवेरिव भारवेः ।
माघेनेव च माघेन कम्पः कस्य न जायते ॥ ५८ ॥

माघेन विघ्नितोत्साहा न सहन्ते पदक्रमम् ।
स्मरन्ति भारवेरेव कवयः कपयो यथा ॥ ५९ ॥

एकोऽपि जीयते हन्त कालिदासो न केनचित् ।
शृङ्गारे ललितोद्गारे कालिदासत्रयी किमु ॥ ६० ॥

राजशेखरस्यैते ।

वक्रोक्त्या भर्तृमेण्ठस्य वहन्त्या सृणिरूपताम् ।
आविद्धा इव धून्वन्ति मूर्धानं कविकुञ्जराः ॥ ६१ ॥

धनपालस्य ।

कीर्तिः प्रवरसेनस्य प्रयाता कुमुदोज्ज्वला ।
सागरस्य परं पारं कपिसेनेव सेतुना ॥ ६२ ॥

बाणस्य ।

दृष्ट्वा वाक्पतिराजस्य शक्तिं गौडवधोद्धुराम् ।
बुद्धिः श्वासोपरुद्धेव वाचं न प्रतिपद्यते ॥ ६३ ॥

धनपालस्य ।

अवन्तिः काव्यमानर्च भर्चोमौखरिशेखरः (?) ।
शिष्यो बाणश्च संक्रान्तैकान्तवेद्यवचाः कविः ॥ ६४ ॥

सहर्षचरिता शश्वद्वृत्तैकादम्बरीस्यदा ।
बाणस्य वाण्यनार्येव स्वच्छन्दा चरति क्षितौ ॥ ६५ ॥

राजशेखरस्यैतौ ।

१. सा श्वास. ख. २. चर्चो. ख. ३. न्तः ख. ४ द्वृत्त. क. ख. ५ मुदा. क. ख.

केवलोऽपि स्फुरन् बाणः करोति विमदान् कवीन् ।
किं पुनः क्लृप्तसन्धानः पुलिन्दकृतसन्निधिः ॥ ६६ ॥

धनपालस्य ।

बाणेन हृदि लग्नेन यन्मन्दोऽपि पदक्रमः ।
प्रायः कविकुरङ्गाणां चापलं तत्र कारणम् ॥ ६७ ॥

दर्पं कविभुजङ्गानां गता श्रवणगोचरम् ।
विषविद्येव मायूरी मायूरी वाङ्निकृन्तति ॥ ६८ ॥

सरस्वतीपवित्राणां जातिस्तन्त्रं न देहिनाम् ।
व्यासस्पर्धी कुलालोऽभूत् यद्द्रोणो भारते कविः ॥ ६९ ॥

अहो प्रभावो वाग्देव्या यच्चण्डालदिवाकरः ।
श्रीहर्षस्याभवत् सभ्यः समो बाणमयूरयोः ॥ ७० ॥

कर्तुं त्रिलोचनादन्यो न पार्थविजयं क्षमः ।
तदर्थः शक्यते द्रष्टुं लोचनद्वयिभिः कथम् ॥ ७१ ॥

अथो गणपतिं वन्दे महामोदविधायिनम्
विद्याधरगणैर्यस्य पूज्यते कण्ठगर्जितम् ॥ ७२ ॥

प्रद्युम्नान्नापरस्येह नाटके पटवो गिरः ।
प्रद्युम्नान्नापरस्येह पौष्पा अपि शराः खराः ॥ ७३ ॥

त्रयोऽग्नयस्त्रयो देवास्त्रयो वेदास्त्रयो गुणाः ।
त्रयो दण्डिप्रबन्धाश्च त्रिषु लोकेषु विश्रुताः ॥ ७४ ॥

राजशेखरस्यैते ।

जाते जगति वाल्मीकौ शब्दः कविरिति स्थितः ।
व्यासे जाते कवी चेति कवयश्चेति दण्डिनि ॥ ७५ ॥

कालिदासस्य ।

जानकीहरणं कर्तुं रघुवंशे स्थिते सति ।
कविः कुमारदासश्च रावणश्च यदि क्षमः ॥ ७६ ॥

१. यन्मातङ्गेति शार्ङ्गधरपद्धतौ पाठः, २. नर, क ख । ३. खगाः क. ख. ।

मा स्म सन्ति हि चत्वारः प्रायो रत्नाकरा इमे।
इतीव स[1] कृतो धात्रा कवी रत्नाकरोऽपरः ॥ ७७ ॥

ध्वनिनाऽतिगभीरेण काव्यतत्त्वनिवेशिना।
आनन्दवर्धनः कस्य नासीदानन्दवर्धनः ॥ ७८ ॥

राजशेखरस्यैते।

रत्नावलीपूर्वकमन्यदास्तामासीमभोगस्य वचोमयस्य।
पयोधरस्येव हिमाद्रिजायाः परं विभूषा भवभूतिरेव ॥ ७९ ॥

वाक्यं च द्विपदीशतान्यथ महाकाव्यानि सप्त क्रमात्
त्र्यक्षप्रत्यहनिर्मितस्तुतिकथालक्षाणि चैकादश।
सूत्वा नाटकनाटिकाप्रकरणप्रायान्प्रबन्धान्बहून्
विश्राम्यत्यधुनाऽपि नातिशयिता वाणी शिवस्वामिनः ॥ ८० ॥

कयोरप्येतौ।

कालञ्जरपतिश्चक्रे भीमटः पञ्चनाटकीम्।
प्राप प्रबन्धराजत्वं तेषु स्वप्नदशाननम् ॥ ८१ ॥

मायुराजसमो जज्ञे नान्यः कलचुरिः[2] कविः
उदन्वतः समुत्तस्थुः कति वा तुहिनांशवः ॥ ८२ ॥

अकालजलदेन्दोः सा हृद्या वदनचन्द्रिका।
नित्यं कविचकोरैर्या पीयते न च हीयते ॥ ८३ ॥

अकालजलद[3]श्लोकैश्चित्रमात्मकृतैरिव।
जातः कादंबरीरामो नाटके प्रवरः कविः ॥ ८४ ॥

अनुप्रासिनि सन्दर्भे गोनन्दनसमः कुतः।
यथार्थनामतैवास्य यद्वा वदति चारुताम् ॥ ८५ ॥

दूरादपि सतां चित्ते लिखित्वाऽऽश्चर्यमञ्जरीम्।
कुलशेखरवर्माऽऽढ्यां[4] चकाराश्चर्यमञ्जरीम् ॥ ८६ ॥

द्विःसन्धाने निपुणतां स तां चक्रे धनञ्जयः
यया जातं फलं तस्य सतां चक्रे धनं जयः ॥ ८७ ॥

१. सत्कृतौ. क. ख. । २. कण्ठचुरिः. क. ३ जलदे. क. ख. ४. वंश्याभ्यां. क.

नदीनां मेखलसुता नृपाणां रणविग्रहः।
कवीनां च सुरानन्दश्चेदिमण्डलमण्डनम् ॥ ८८ ॥

यायावरकुलश्रेणेर्मुक्तायष्टेश्च मण्डनम्।
सुवर्णबन्धरुचिरस्तरलस्तरलो यथा ॥ ८९ ॥

स्थिता माध्वीकपाकत्वान्निसर्गमधुराऽपि हि।
किमपि स्वदते वाणी केषाञ्चिद्यदि शाङ्करी[1] ॥ ९० ॥

शब्दार्थयोः समो गुंफः पाञ्चाली रीतिरुच्यते।
शीलाभट्टारिकावाचि बाणोक्तिषु च सा यदि ॥ ९१ ॥

के[2] वैकटनितंबेन गिरां गुंफेन रञ्जिताः।
निन्दन्ति[3] निजकान्तानां न मौग्ध्यमधुरं वचः ॥ ९२ ॥

सरस्वतीव कर्नाटी विजयाङ्का जयत्यसौ।
या वैदर्भगिरां वासः कालिदासादनन्तरम् ॥ ९३ ॥

सूक्तीनां स्मरकेलीनां कलानां च विलासभूः।
प्रभुर्देवी कविर्लाटीगताऽपि हृदि तिष्ठति ॥ ९४ ॥

पार्थस्य मनसि स्थानं लेभे लघु सुभद्रया
कवीनां च वचोवृत्तिचातुर्येण सुभद्रया ॥ ९५ ॥

राजशेखरस्यैते।

नीलोत्पलदलश्यामां विज्जाकां तामजानता।
वृथैव दण्डिनाऽप्युक्तं सर्वशुक्ला सरस्वती ॥ ९६ ॥

कविरमरः कविरचलः कविरभिनन्दश्च कालिदासश्च।
अन्ये कवयः कपयश्चापलमात्रं पदं दधति ॥ ९७ ॥

यद्योगः परविग्रहे निज इव स्वेच्छाप्रवेशावधि-
यद्ध्यानं व्यपनिद्रचिन्मयरसज्योतिःप्रबोधावधि।
यद्वाग्बन्धघनोदयो रसनदीकल्लोललीलावधि-
स्तस्यास्मिन्यदि देवबोधियमिनः को वा गुणस्यावधिः ॥ ९८ ॥

१. शाङ्कलिः, ख. २ किं. क. ३. नितम्बिनीव. क. ४ सुर. क. ५ वपु. क.

पातुं श्रोत्ररसायनं रचयितुं वाचस्सतां सम्मता
व्युत्पत्तिं परमामवाप्तुमवधिं लब्धुं रसस्रोतसि ।
भोक्तुं स्वादु फलं च जीविततरोर्यद्यस्ति ते कौतुकं
तत् भ्रातः शृणु राजशेखरकवेस्सूक्तीस्सुधास्यन्दिनीः ॥ ९९ ॥

श्रीशंकरवर्मणः ।

भवभूतिमनादृत्य निर्वाणमतिना मया ।
मुरारेः पदचिन्तायामिदमाधीयते मनः ॥ १०० ॥

कस्यचित् ।

अमरुककवित्वडमरुकनादेन विनुह्नुता न सञ्चरति ।
शृंगारभणितिरन्या धन्यानां श्रवणविवरेषु ॥ १०१ ॥

अर्जुनदेवस्य ।

त्रपुर्यामावासः कुचपरिवृतश्चेदिनृपतिः ( ? )
परिभ्रान्ता रत्नाकरपरिधिरेषा वसुमती ।
न मुक्त्वा रामाणां पदमिह शिरोऽन्यस्य नमितं
कवीन्द्रै राजेन्द्रैर्ललितमियती बिल्हणकथा ॥ १०२ ॥

वासश्शुभ्रमृतुर्वसन्तसमयः पुष्पं शरन्मल्लिका
धानुष्कः कुसुमायुधः परिमलः कास्तूरिकोऽस्त्रं धनुः ।
वाचस्तर्करसोज्ज्वलाः प्रियतमा श्यामा वपुर्नूतनं
मार्गस्सौगत एव पञ्चमलया गीतिः कविर्बिल्हणः ॥ १०३ ॥

साहित्ये सुकुमारवस्तुनि दृढन्यायग्रहग्रन्थिले
तर्के वा मयि सन्निधातरि समं लीलायते भारती ।
शय्या वाऽस्तु मृदूत्तरच्छदवती दर्भाङ्कुरैरास्तृता
भूमिर्वा हृदयंगमो यदि पतिस्तुल्या रतिस्सुभ्रुवः ॥ १०४ ॥

सोमकवेः ।

किं वीणाक्वणितेन किं मधुकरीझंकारितेनापि किं
कंदर्पायुधशिंजितेन तरुणीहुङ्कारितेनापि किम् ।
श्रीमच्चितपसत्कवेर्यदि वचो हेरम्बकुंभस्थली-
मुक्ताम्भस्सुभगं सुधासहचरं कर्णोदरं गाहते ॥ १०५ ॥

बिन्दुद्वंद्वतरंगिताग्रसरणिः कर्ता शिरोबिन्दुकं
कर्मेति क्रमशिक्षितान्वयकथा ये केऽपि तेभ्यो नमः ।
ये तु ग्रन्थसहस्रशाणकषणत्रुटयत्कलंकैर्गिरा-
मुल्लेखैः कव[1]र्थन्ति [2]रल्हणकविस्तेष्वेव सन्नह्यते ॥ १०६ ॥

प्रकृत्यैवातिवक्रेण गुणदैर्घ्यं वितन्वता ।
[3]मया शरासने[4]नैव बाणो दूरं निरस्यते ॥ १०७ ॥

केचिद्गर्वगलग्रहेण विषमद्वेषज्वरेणापरे
केचिन्मौर्ख्यमलेन सन्ततममी मीलन्ति शान्तोत्तराः ।
तद्वो मन्दिरभित्तयो भवत नस्सूक्तेषु सभ्याः पुन-
स्तत्पाठे वरमस्ति वो घम्रुघम्रुप्रायं किमप्युत्तरम् ॥ १०८ ॥

लोष्टसर्वज्ञस्यैतौ ।

नव्या न व्याकरणसरणिर्यस्य माधुर्यधुर्यं
नो सौन्दर्यं [5]नैवनवरसस्रोतसो न प्रवाहः ।
यादृक्प्रीत्या कथयति गिरां देवता देव तादृक्
काव्यं श्राव्यं कवयति भिषक् भानुनामा स एषः ॥ १०९ ॥

इत्थं कविकुटुम्बस्य वचांसि विचिनोति यः ।
अनिद्धवचनस्यापि तस्य वश्या सरस्वती ॥ ११० ॥

भासो [6]रामिलसोमिलौ वररुचिः श्रीसाहसांकः कवि-
र्मेण्ठो भारविकालिदासतरलाः स्कन्दः[7] सुबन्धुश्च यः ।
दण्डी बाणदिवाकरौ गणपतिः कान्तश्च रत्नाकरः
सिद्धा यस्य सरस्वती यदि भवेत्के तस्य सर्वेऽपि ते ॥ १११ ॥

यस्याश्चौरश्चिकुरनिकरः कर्णपूरो मयूरो
हासो भासः कविकुलगुरुः कालिदासो विलासः ।
हर्षो हर्षो हृदयवसतिः पञ्चबाणस्तु बाणः
केषां नैषा कविषु कविताकामिनी कौतुकाय ॥ ११२ ॥

जयदेवस्य ।

इति श्रीमदारोहकभगदत्तजल्हणदेवविरचितायां सूक्तिमुक्तावल्यां विशेषकविप्रशंसा ॥

१. कलयन्ति. ख २. बिल्हण. ख. ३ माया. ख. ४. नै. क. ख. च. ५ न च नव. क. ६ वामिलसोमिलो. ख. च. ७ स्कन्धः इति शार्ङ्गधरीयपाठः ।

# कुकविनिन्दा (५)

द्राघीयसा धाष्टर्यगुणेन युक्ताः कैरप्यपूर्वैः परकाव्यखण्डैः ।
आडम्बरं ये वचसां वहन्ति ते केऽपि कन्थाकवयो जयन्ति ॥ १ ॥

क्षेमेन्द्रस्य ।

धिक्त्वां रे कलिकाल याहि विलयं केयं विपर्यस्तता
हा कष्टं श्रुतिशालिनां व्यवहृतिर्म्लेच्छोचिता दृश्यते ।
ए[१][कैः] वाङ्मयदेवता भगवती विक्रेतुमानीयते
निश्शङ्कैरपरैः परीक्षणविधौ सर्वाङ्गमुद्घाट्यते ॥ २ ॥

रल्हणस्य ।

शिशिरयति वक्त्रवसती कश्चित्सुकुमारपदसुधास्यन्दैः ।
तक्ष्णोतीव [२]तथाऽन्योऽ[३]भीक्ष्णं तीक्ष्णाक्षरक्षारैः ॥ ३ ॥

वल्लभदेवस्य ।

काव्यं करोषि किमु ते सुहृदो न सन्ति
ये त्वामुदीर्णपवनं विनिवारयन्ति ।
गव्यं घृतं पिब निवातगृहं प्रविश्य
वाताधिका हि पुरुषाः कवयो भवन्ति ॥ ४ ॥

कस्यापि ।

गाहन्ते कविचक्रवर्तिपदवीमेके बुधाः पंचषैः
श्लोकैरेव महाश्रमेण घटितैर्यत्तल्लघीयः पदम् ।
तादृग्वा मनसोऽवरोधकलया ध्यायन्ति चेदीश्वरं
तत्तेषां कर एव किं न विलसन्त्यष्टौ महासिद्धयः ॥ ५ ॥

हरिहरस्य ।

व्यासादीन्कविपुङ्गवाननुचिताक्षेपं सलीलं हसन्
उच्चैर्जल्प निमील्य लोचनयुगं श्लोकान् सगर्वं पठ ।
काव्यं स्वीकुरु यत्परैर्विरचितं स्पर्धस्व सार्धं बुधैः
यद्यभ्यर्थयसे श्रुतेन रहितः पाण्डित्यमाप्तुं बलात् ॥ ६ ॥

कस्यापि ।

१. एका. क. ख. २. वधा. ख. ३. ह्यभीक्ष्णतीक्ष्णा. ख.

ग्रीवास्तम्भभृतः परोन्नतिकथामात्रे शिरश्शूलिनः
सोद्वेगभ्रमणप्रलापविपुलक्षोभाभिभूताकृतेः ।
अन्तर्द्वेषविषप्रवेशविषमक्रोधोष्णनिःश्वासिनः
कष्टा नूनमपण्डितस्य विकृतिर्भीमज्वरारम्भभूः ॥ ७ ॥

ये संसत्सु विवादिनः परयशश्शल्येन शूलाकुलाः
कुर्वन्ति स्वगुणस्तवेन गुणिनां यत्नात् गुणाच्छादनम् ।
तेषां रोषकषायितोदरदृशां कोपोष्णनिःश्वासिनां
दीप्ता रत्नशिखेव कृष्णफणिनां विद्या जनोद्वेजिनी ॥ ८ ॥

क्षेमेन्द्रस्यैतौ ।

स्वाधीनो रसनाञ्चलः परिचिताः शब्दाः कियन्तः क्वचित्
क्षोणीन्द्रो न नियामकः परिषदः शान्ताः स्वतन्त्रं जगत् ।
तद्यूयं कवयो वयं वयमिति प्रस्तावनाह(हु?)ङ्कृति[3]-
स्वच्छन्दं प्रतिसद्म गर्जत वयं मौनव्रतालम्बिनः ॥ ९ ॥

उमापतिधरस्य ।

उक्तं च वक्ष्यमाणं च भर्त्सनं तिर्यगीक्षणम् ।
क्वचिद्यथार्थकथनं व्याख्यातन्त्रस्य षड्विधाः ॥ १० ॥

इति श्रीमदारोहकभगदत्तजल्हणविरचितायां सूक्तिमुक्तावल्यां कुकविनिन्दा ।

---

१. भ्रमिणः ख. च, २. मान. ख. च. ३ तिः ख. च.

# सुजनपद्धतिः ( ६ )



चन्दनं चंद्रिकाचक्रं विपञ्ची चंपकस्रजः।
पञ्चमः पञ्चमश्चेति पञ्चभ्योऽजनि सज्जनः॥ १॥

नूनं दुग्धाब्धिमध्योत्थाविमौ सज्जनदुर्जनौ।
किन्त्विन्दोस्सोदरः पूर्वः कालकूटस्य चेतरः॥ २॥

राजशेखरस्यैतौ।

गोत्रस्थितिं न मुञ्चन्ति सदा सन्नतिमाश्रिताः।
उदन्वन्तश्च सन्तश्च महासत्वतयाऽनया॥ ३॥

अञ्जलिस्थानि पुष्पाणि वासयन्ति करद्वयम्।
प्रायस्सुमनसां वृत्तिर्वामदक्षिणयोस्समा॥ ४॥

कयोरप्येतौ।

स्थित्यतिक्रान्तिभीरूणि स्वच्छान्याकुलितान्यपि।
तोयानि तोयराशीनां मनांसि च मनस्विनाम्॥ ५॥

भारवेः।

जडात्माऽपि भवत्युच्चैराश्रयन्महतां पदम्।
गंगौघः शंभुमूर्धानमाप विष्णुपदाश्रयात्॥ ६॥

प्रह्लादनस्य।

न मुखेनोद्गिरत्यूर्ध्वं हृदयान्न नयत्यधः।
जरयत्यन्तरे साधुर्दोषं विषमिवेश्वरः॥ ७॥

कस्यापि।

महात्मानोऽनुगृह्णन्ति भजमानान् रिपूनपि।
सपत्नीः प्रापयन्त्यब्धिं सिन्धवो नगनिम्नगाः॥ ८॥

माघस्य।

अपकुर्वन्नपि प्रायः प्राप्नोति महतः फलम्।
और्वं दहन्तमेवाग्निं सन्तर्पयति सागरः॥ ९॥

१. तानि च. क.

सूचीदण्ड इवासौ कुपितस्सुजनो मुखे परं तीक्ष्णः
छिद्रपिधानैकपरः प्रगुणः पश्चात्परं भवति ॥ १० ॥

अनु[1]कुर्वतः खलसुजनावग्रिमपाश्चात्यभागयोस्सूच्याः ।
ए[2]कः कुरुते छिद्रं गुणवानन्यश्च पिदधाति ॥ ११ ॥

गोभटस्यैतौ ।

सुजनो न याति [3]विकृतिं परहितनिरतो विनाशकालेऽपि ।
छेदेऽपि चन्दनतरुः सुरभयति मुखं कुठारस्य ॥ १२ ॥

अण्वपि गुणाय महतां महदपि दोषाय दोषिणां सुकृतम् ।
तृणमपि दुग्धाय गवां दुग्धमपि विषाय सर्पाणाम् ॥ १३ ॥

रविगुप्तस्यैतौ ।

सैव परं न विनश्यति तनुरपि या श्रीर्निवेशिता सत्सु ।
अवशिष्यते हिमांशोः सैव कला शिरसि या शंभोः ॥ १४ ॥

निवसन्नपि समामितरैरभिजातश्शिक्षते न दुर्वचनम् ।
ध्वांक्षविरावी न पिकः स्थितवानपि बलिभुजां भवने ॥ १५ ॥

जगदुपकृतिषु सतां रतिरितरजनो विभवमात्रसन्तुष्टः ।
भ्रमति भुवनानि भास्वान् धनपतिरधिवसति कैलासम् ॥ १६ ॥

तरुमूलान्यनु निहितं जलमाविर्भवति पल्लवाग्रेषु ।
निभृतं यदुपक्रियते तदपि महान्तो वहन्त्युच्चैः ॥ १७ ॥

वल्लभदेवस्यैते ।

यदमी दशन्ति दशना रसना तत्स्वादुफलमवाप्नोति ।
प्रकृतिरियं धवलानां क्लिश्यन्ति यदन्यकार्येषु ॥ १८ ॥

नैमेयस्य ।

यद्वञ्चनाहितमतिर्बहु चाटुगर्भं
　कार्योन्मुखः खलजनः कृतकं ब्रवीति ।
तत्साधवो न न विदन्ति विदन्ति किं तु
　कर्तुं वृथाप्रणयमस्य न पारयन्ति ॥ १९ ॥

आरोग्यस्य ।

१. हरतः घ. २. विदधाति रन्ध्रमेको. क. पाठभेदः ३. वैरं क. पाठभेदः ४. क्षितौ. क. ५. विमलानां क.

दानोन्नता श्रीः श्रुतमप्रमादं शक्तिर्दयार्द्रा विनयी प्रभावः।
निर्व्याजवैदग्ध्यनिधिस्सतां धीः परोपकाराभरणस्वभावा ॥ २० ॥

क्षेमेन्द्रस्य।

ते साधवो भुवनमण्डलमौलिभूता
ये साधुतामनुपकारिषु दर्शयन्ति।
[1]आत्मप्रयोजनवशीकृतखिन्नदेहः
पूर्वोपकारिषु खलोऽपि हि[2] सानुकंपः ॥ २१ ॥

रत्नाकरस्य।

हृष्यंति चारुचरितैस्सुजनस्य सन्तः
क्षुद्रत्वमाशु पिशुनादपि सन्त्यजन्ति।
रत्नं न केवलमलङ्करणाय लोके
क्रूरग्रहादिशमकं च भवेत्प्रभावैः ॥ २२ ॥

त्रिलोचनस्य।

विपदि धैर्यमथाभ्युदये क्षमा
सदसि वाक्पटुता युधि विक्रमः।
यशसि चाभिरतिर्व्यसनं श्रुतौ
प्रकृतिसिद्धमिदं हि महात्मनाम् ॥ २३ ॥

भर्तृमेण्ठस्य।

न च भवति वियोगः स्नेहविच्छेदहेतु-
र्जगति गुणनिधीनां सज्जनानां कदाचित्।
घनपटलनिरुद्धो दूरसंस्थोऽपि चन्द्रः
किमु कुमुदवनानां प्रेमभङ्गं करोति ॥ २४ ॥

कथमपि हि भवन्ति क्षेत्रसद्बीजयोगा-
ज्जगदुपकृतिहेतोर्नात्मवृत्त्यै फलन्ति।
दधाति फलसमृद्ध्या दूरमानम्रभावं
ननु जगति [3]सुशूकाः साधवश्शालयश्च ॥ २५ ॥

मङ्गलार्जुनस्य।

---

१. आत. क. ख. २. न. क. ख, ३ स. क. ख

व्यपगतजडिमानः क्षिप्तदोषाभिषङ्गाः
परिगलितकलंका वक्रभावा न जातु ।
समुदयमपि मित्रेणैव सार्धं दधाना-
स्तुहिनकिरणबिम्बादन्य एते महान्तः ॥ २६ ॥

अन्तः कोपकषायितेऽपि हृदये साधोरसच्चेष्टितै-
र्भद्राण्येव बहिः क्रियासु वचनान्याविर्भवन्त्यर्थतः ।
मध्येऽत्यन्तकरालवाडवशिखाशोषेऽपि वारांनिधेः
कल्लोलाः प्रकटीभवन्ति सततं मुक्ताफलोद्गारिणः ॥ २७ ॥

कयोरप्येतौ ।

अभेदेनोपास्ते कुमुदमुदरे वा स्थितवतो
विपक्षादम्भोजादुपगतवतो वा मधुलिहः ।
अपर्याप्तः कोऽपि स्वपरपरिचर्यापरिचय-
प्रबन्धस्साधूनामयमनभिसन्धानरसिकः ॥ २८ ॥

श्रीमुरारेः ।

मज्जन्तोऽपि विपत्पयोधिगहने निस्सङ्गवीरव्रताः
कुर्वन्त्येव परोपकारकरणं सन्तो यथाशक्तितः ।
राहोरुग्रकरालवक्त्रकुहरग्रासाभिभूतोऽप्यलं
चन्द्रः किं न जनं करोति सुखिनं ग्रस्तावशेषैः करैः ॥ २९ ॥

ये दीनेषु दयालवः स्पृशति यानल्पोऽपि न श्रीमदो
व्यग्रा ये च परोपकारकरणे हृष्यन्ति ये याचिताः ।
स्वस्थास्सन्ति च यौवनोदयमहाव्याधेः प्रकोपेऽपि ये
तैः स्तंभैरिव सुस्थिरैः कलिभरक्रान्ता धरा धार्यते ॥ ३० ॥

इति श्रीमदारोहकभगदत्तजल्हणदेवविरचितायां सूक्तिमुक्तावल्यां सुजनपद्धतिः ॥

---

# मनस्विपद्धतिः ( ७ )

ब्रह्माण्डमण्डलीमात्रं किं लोभाय[1] मनस्विनः।
शफरीस्फुरितैर्नाब्धेः क्षुब्धता जातु जायते ॥ १ ॥

कुसुमस्तबकस्येव द्वयी वृत्तिर्मनस्विनः।
मूर्ध्नि वा सर्वलोकस्य विशीर्येत वनेऽथवा ॥ २ ॥

भर्तृहरेरेतौ।

ब्रूत नूतनकूश्माण्डफलानां के भवन्त्यमी।
अङ्गुलीदर्शनाद्येन न जीवन्ति मनस्विनः ॥ ३ ॥

कस्यापि।

अत्यन्तविमुखे दैवे व्यर्थयत्येव पौरुषम्।
मनस्विनो दरिद्रस्य वनादन्यत्कुतस्सुखम् ॥ ४ ॥

पुंसामुन्नतचित्तानां सुखावहमिदं द्वयम्।
सर्वसङ्गनिवृत्तिर्वा विभूतिर्वा सुविस्तृता ॥ ५ ॥

भगवतो व्यासस्यैतौ।

नाल्पीयसि निबध्नन्ति पदमुन्नतचेतसः।
येषां भुवनलाभेऽपि निःसीमानो मनोरथाः ॥ ६ ॥

कस्यापि।

ग्रसमानमिवौजांसि सभायां गौरवेरितम्।
नाम यस्याभिनन्दन्ति द्विषोऽपि स पुमान् पुमान् ॥ ७ ॥

कस्यापि।

अभिमानवतो मनस्विनः प्रियमुच्चैःपदमारुरुक्षतः।
विनिपातनिवर्तनक्षमं मतमालंबनमात्मपौरुषम् ॥ ८ ॥

अभिमानधनस्य गत्वरैरसुभिः स्थास्नु यशश्चिचीषतः।
अचिरांशुविलासचञ्चला ननु लक्ष्मीः फलमानुषङ्गिकम् ॥ ९ ॥

भारवेरेतौ।

क्वचित्कन्थाधारी[2] क्वचिदपि च दिव्याम्बरधरः
क्वचिद्भूमौ शेते क्वचिदपि च पर्यङ्कशयनः।
क्वचिच्छाकाहारः क्वचिदपि च मृष्टाशनरुचिः[3]
मनस्वी कालज्ञो गणयति न दुःखं न च सुखम् ॥ १० ॥

कस्यापि।

॥ इति श्रीमदारोहकभगदत्तजल्हणविरचितायां सूक्तिमुक्तावल्यां मनस्विपद्धतिः ॥

१ लाभाय. क. २. माली. क ख. ३ शाल्योदन. घ.

# दुर्जनपद्धतिः ( ८ )



यथा यथैव स्नेहेन भूयिष्ठमुपचर्यते ।
धत्ते तथा तथा तापमहो वैश्वानरः खलः ॥ १ ॥

कस्यापि ।

अपवादादभीतस्य समस्य गुणदोषयोः ।
असद्वृत्तेरहो वृत्तं दुर्विभाव्यं विधेरिव ॥ २ ॥

भारवेः ।

नौश्च दुर्जनजिह्वा च प्रतिकूलविसर्पिणी ।
परप्रतारणायैव निर्मिता केन दारुणा ॥ ३ ॥

रिसुकस्य ।

छिद्रवृन्दावृतेऽप्यन्तःशून्येऽपि खलचेतसि ।
चित्रमेकोऽपि मात्यन्तर्न गुणावयवोऽपि हि ॥ ४ ॥

भट्टगोविन्दराजस्य ।

बिभेति दुर्जनाल्लोकः सौजन्येऽपि क्षणं स्थितात् ।
कः सौनिकस्य प्रत्येति क्रीणतो दोग्धुमप्यजाम् ॥ ५ ॥

नीचस्समुत्थितोऽवश्यमनवाप्य पराश्रयम् ।
छिद्रं न रतिमाप्नोति दृष्टान्तोऽत्र कटीभवः ॥ ६ ॥

स्वभावकठिनस्यास्य कृत्रिमां बिभ्रतो नतिम् ।
गुणोऽपि परहिंसायै चापस्य च खलस्य च ॥ ७ ॥

केषामप्येते ।

अपकारमसंप्राप्य तुष्येत्साधुरसाधुतः ।
एष लाभो भुजङ्गेन वेष्टितो यन्न दश्यते ॥ ८ ॥

भगवद्व्यासमुनेः ।

सवर्षाशनिराकाशः ससज्जनखला मही ।
गुणा दोषाश्च विद्यन्ते हन्त भो महतामपि ॥ ९ ॥

सूक्तिसहस्रात् ।

१. अपराधा. ख.

वन्दितोऽप्येष दोषाय तद्वरं निन्दितः खलः।
स्तुतोऽप्यहिर्दशत्येव न दृढं पीडिताननः॥ १०॥

अपूर्वः कोऽपि कोपाग्निः सज्जनस्य खलस्य च।
एकस्य शाम्यति स्नेहाद्वर्धतेऽन्यस्य वारितः॥ ११॥

गोभटस्य।

वैरस्यैकनिधेः क्रूरसत्वस्य च जडात्मनः।
पयोऽप्यपेयं भवति क्षाराम्भोधेः खलस्य च॥ १२॥

कस्यापि।

पश्चादन्यत्पुरश्चान्यत् पुनरुक्तभयादिव।
परापवादविद्वांसो वदन्त्यविकलाः खलाः॥ १३॥

पुनरुक्तपदस्य (पण्डितस्य)।

पीडनं बहुधान्यस्य विधातुं लब्धजन्मनाम्।
खलानामुचितं ग्रामात् बहिरेव निवेशनम्॥ १४॥

ये वर्धयन्ति पापर्धिकौतुकं पृथिवीपतेः।
विशेषः कतरस्तेषां पिशुनानां शुनामिव॥ १५॥

श्रुतधररामस्यैतौ।

खलः सत्क्रियमाणोऽपि दधाति कलहं सताम्।
दुग्धधौतोऽपि किं याति वायसः कलहंसताम्॥ १६॥

स्नेहेन भूतिदानेन कृतस्वच्छोऽपि दुर्ज्जनः।
दर्पणश्चान्तिके तिष्ठन् करोत्येकमपि द्विधा॥ १७॥

दर्पणस्य खलु दुर्जनस्य च ब्रूत हन्त सुजनाः किमन्तरम्।
यावदेव पुरतो वसेज्जनस्तावदेव हृदयेऽस्य वर्तते॥ १८॥

केषामप्येते।

अन्यस्माल्लब्धोष्मा क्षुद्रः प्रायेण दुस्सहो भवति।
रविरपि तपति न तादृग्यादृक्सन्तप्तसिकतौघः॥ १९॥

दुर्वचनमनभिजाताः स्वजनं प्रत्युत्सृजन्त्युपेत्यापि।
अश्वतरास्तीर्थाम्भसि दूरादागत्य मेहन्ति॥ २०॥

वल्लभदेवस्यैतौ।

---

१ मपि. क. पाठभेदः।

अप्यात्मनो विनाशं गणयति न खलः परव्यसनहृष्टः।
प्रायस्सहस्रनाशे समरमुखे नृत्यति कबन्धः॥ २१॥

स्वगुणानिव परदोषान् वक्तुं न सतोऽपि शक्नुवन्ति बुधाः।
स्वगुणानिव परदोषानसतोऽपि खलास्तु कथयन्ति[1]॥ २२॥

रविगुप्तस्यैतौ।

उज्ज्वलगुणमभ्युदितं क्षुद्रो द्रष्टुं न कथमपि क्षमते।
हित्वा तनुमपि शलभः शुभ्रं दीपार्चिरपहरति[2]॥ २३॥

वल्लभदेवस्य।

ऋजुरेष पक्षवानिति काण्डे प्रीतिं खले च माकार्षीः।
प्रायेण त्यक्तगुणः फलेन हृदयं विदारयति॥ २४॥

एते स्निग्धतमा इति मा मा क्षुद्रेषु यात विश्वासम्।
सिद्धार्थानामेषां स्नेहोऽप्यश्रूणि पातयति॥ २५॥

सूच्चिगोभटस्यैतौ।

विध्वस्तपरगुणानां भवति खलानामतीव मलिनत्वम्।
अन्तरितशशिरुचामपि सलिलमुचां मलिनिमाऽभ्यधिकः॥ २६॥

विषधरतोऽप्यतिविषमः खल इति न[3] मृषा वदन्ति विद्वांसः।
यदयं नकुलद्वेषी स कुलद्वेषी पुनः पिशुनः॥ २७॥

हस्त इव भूतिमलिनो लंघयति यथा यथा खलस्सुजनम्।
दर्पणमिव तं कुरुते तथा तथा निर्मलच्छायम्॥ २८॥

सुबन्धोरेते।

शिरसि निहितोऽपि नित्यं यत्नादपि[4] सेवितो बहुस्नेहैः।
तरुणीकच इव नीचः कौटिल्यं नैव विजहाति॥ २९॥

विकसितवदनः पिशुनः प्रोत्फुल्लविलोचनो यदा भ्रमति।
मन्ये तदाऽस्य जातस्सदाहितकरणश्रमस्सफलः॥ ३०॥

---

१. कल. क. पाठभेदः २. हस. क. ख ३ सत्यं क. पाठभेदः ४ दुप क. पाठभेदः

अहमेव गुरुः सुदारुणानामिति हालाहल मास्म तात दृप्यः।
ननु सन्ति भवादृशानि भूयो भुवनेऽस्मिन् वचनानि दुर्जनानाम् ॥ ३१ ॥

केषामप्येते।

समर्पितास्तेन न कस्य दोषाः हठाद्गुणा वा न हृताः खलेन।
तथापि दोषैर्न वियुज्यतेऽसौ सन्तोऽपि नैकेन गुणेन चित्रम् ॥ ३२ ॥

वर्धमानस्य।

ते तावत्कृतिनः परार्थघटकाः स्वार्थान्परित्यज्य ये
सामान्यास्तु परार्थमुद्यमभृतस्स्वार्थाविरोधेन ये।
तेऽमी मानुषराक्षसाः परहितं स्वार्थाय निघ्नन्ति ये।
ये तु घ्नन्ति निरर्थकं परहितं ते के न जानीमहे ॥ ३३ ॥

कस्यापि।

जाड्यं ह्रीमति गण्यते व्रतरुचौ दंभः शुचौ कैतवं
शूरे निर्घृणता मुनौ विमतिता दैन्यं प्रियालापिनि।
तेजस्विन्यवलिप्तता मुखरता वक्तर्यशक्तिः स्थिरे
तत्को नाम गुणो भवेत्स विदुषां यो दुर्जनैर्नांकितः ॥ ३४ ॥

इति श्रीमदारोहकभगदत्तजल्हणविरचितायां सूक्तिमुक्तावल्यां दुर्जनपद्धतिः।

# कृपणपद्धतिः ( ९ )

असंभोगेन सामान्यं कृपणस्य धनं परैः ।
अस्येदमिति संबंधो हानौ दुःखेन गम्यते ॥ १ ॥

व्यासस्य ।

वीणेव श्रोत्रहीनस्य लोलाक्षीव विचक्षुषः ।
व्यसोः कुसुममालेव श्रीः कदर्यस्य निष्फला ॥ २ ॥

यत्करोत्यरुचिं क्लेशं तृष्णां मोहं प्रजागरम् ।
न तद्धनं कदर्याणां हृदयव्याधिरेव सः ॥ ३ ॥

उक्तं परस्यामिषतामनुक्तं यात्यदृश्यताम् ।
हृदये शल्यतां धत्ते निधने धनिनां धनम् ॥ ४ ॥

व्यर्थं श्रुतमशीलस्य बलं कापुरुषस्य च ।
व्युत्थानं मन्दभाग्यस्य धनं कृपणजीविनः ॥ ५ ॥

यदर्ज्यते परक्लेशैरर्जितं यन्न भुज्यते ।
विभज्यते यदन्तेऽन्यैः कस्यचिन्मास्तु तद्धनम् ॥ ६ ॥

क्षेमेन्द्रस्यैते ।

गृहमध्यनिखातेन धनेन रमते यदि ।
सतु तेनानुसारेण रमते किं न मेरुणा ॥ ७ ॥

कृपणेन शवेनेव मृतेनापि न दीयते ।
मांसं वर्धयता तेन काकस्योपकृतिः कृता ॥ ८ ॥

प्रायेण धनिनामेव धने तृष्णा गरीयसी ।
पश्य कोटिद्वयोपेतं लक्षाय प्रवणं धनुः ॥ ९ ॥

केषामप्येते ।

मृत्युश्शरीरगोप्तारं धनरक्षं वसुन्धरा ।
दुश्चारिणीव हसति स्वपतिं पुत्रवत्सलम् ॥ १० ॥

साधुना दीनमनसा प्रार्थितो विभवे सति ।
ददाति यदि नो तस्मै पृष्टस्यास्य किमुत्तरम् ॥ ११ ॥

व्यासस्यैतौ ।

१ तेनानुमानेन क ख ग घ.

शरणं किं प्रपन्नानि विषवन्मारयन्ति किम् ।
न त्यज्यन्ते न भुज्यन्ते कृपणेन धनानि यत् ॥ १२ ॥

रिसुकस्य ।

दृढतरनिबद्धमुष्टेः कोशनिषण्णस्य सहजमलिनस्य ।
कृपणस्य कृपाणस्य च केवलमाकारतो भेदः ॥ १३ ॥

सूचिगोभटस्य ।

धनमर्थिनामभोग्यं चिरसंचयदूषितं कदर्याणाम् ।
स्रोतोजलमिव रुचिरं सततागमनिर्गमं महताम् ॥ १४ ॥

न[1] परं धनानि दारास्तनुरप्यन्योपकरणतां याति ।
कृपणस्य नन्दनरपतिरत्रार्थे स्पष्टदृष्टान्तः ॥ १५ ॥

नन्दनरेन्द्रद्रविणैर्दुष्कृतमिव किम[2]पि विहितम[3]तिघोरम् ।
वसुधातलोष्मपाको विरमति नाद्यापि यत्तेभ्यः ॥ १६ ॥

[चौं] इअणकरपरंपरपरिवत्तणखेयवसणपरिसन्ता ।
अत्था किवणघरत्था सत्थावत्था सुवन्ति विय ॥ १७ ॥

अभ्युपयुक्तास्सद्भिर्गतागतैरहरहः प्रखिन्दानाः ।
कृपणजनसन्निकर्षं प्राप्यार्थाः प्रस्वपन्तीव ॥ १८ ॥

वल्लभदेवस्यैते ।

प्राप्तानपि न लभन्ते भोगान् भोक्तुं स्वकर्मभिः कृपणा ः ।
द्राक्षाप्रपाकसमये मुखपाको भवति काकानाम् ॥ १९ ॥

रविगुप्तस्य ।

निद्राच्छेदसखेदबान्धवजनः सोद्वेगवैद्योज्झितः
पक्वक्वाथकदर्थितः परिजनैस्तन्द्रीभयात्क्षोभित ः ।
भग्नस्वास्थ्यमनोरथः प्रियतमावष्टब्धपादद्वयः
पर्यन्ते कृपणः करोति विवशः किं शल्यतुल्यैर्धनैः ॥ २० ॥

क्षेमेन्द्रस्य ।

इति श्रीमदारोहकभगदत्तजल्हणदेवविरचितायां सूक्तिमुक्तावल्यां कृपणपद्धतिः ।

---

१. न परं धनानीत्यादि श्लोकत्रयं पुस्तकान्तरे नास्तीति क. पुस्तके सूच्यते । २. किमलं, ख

# अन्यापदेशः।

## खेचराः।

## रविपद्धतिः (१०)



उत्पाद्य यत्स्वयमपि प्रबलानुरागभाजस्तथाऽनुसरतोऽपि दिवाकरस्य।
छाया प्रसर्पति सुदूरमनेन मन्ये क्लृप्तं तया सदृशमेव कुलीनतायाः॥ १॥

श्रीभोजदेवस्य।

देवो हरिर्वहतु वक्षसि कौस्तुभं तमन्यैव काचन पुनर्द्युमणेः प्रतिष्ठा।
यत्पादसंगतितरंगितसौरभाणि धत्ते स एव शिरसा सरसीरुहाणि॥ २॥

श्रीराजपितामहमहादेवस्य।

तुच्छस्यापि समेष्यतोऽस्य तमसो दृष्ट्वाऽपि तेजस्विता-
मुन्मुच्य त्यजति स्वमण्डलमहो यस्सोऽपि भासां पतिः।
शूरःशूर इति स्वतन्त्रवचसा लोकेषु यत्कीर्त्यते
ख्यातिस्तत्र गरीयसी न बलवद्रूपं पुनर्वास्तवम्॥ ३॥

श्रीभोजदेवस्य।

यत्पादाः शिरसा न केन विधृताः पृथ्वीभृतां मध्यत-
स्तस्मिन्भास्वति राहुणा कवलिते लोकत्रयीचक्षुषि।
खद्योतैः स्फुरितं तमोभिरुदितं ताराभिरुज्जृंभितं
घूकैरुत्थितमाः किमत्र करवै किं केन नो चेष्टितम्॥ ४॥

श्रीमुंजस्य।

पातः पूष्णो भवति महतो नोपतापाय यस्मात्
काले प्राप्ते क इह न ययुर्यान्ति यास्यन्ति चास्तम्।
एतावत्तु व्यथयतितरां लोकबाह्यैस्तमोभि-
स्तस्मिन्नेव प्रकृतिमहति व्योम्नि लब्धोऽवकाशः॥ ५॥

---

१. इव. ख. २. वा. ख.

गते तस्मिन् भानौ त्रिभुवनसमुन्मेषविरह-
व्यथां चन्द्रो नेष्यत्यनुचितमतो नास्ति किमपि।
इदं चेतस्तापं जनयतितरामत्र यदमी
प्रदीपास्सञ्जातास्तिमिरहतिबद्धोद्धुरशिखाः॥ ६॥

भट्टभल्लटस्यैतौ[1]।

आगत्यैव कुतश्चिदेव गगनाभोगं च कृत्वाऽऽत्मसात्
भावाभावविलोकनास्पदममून्नीत्वेन्दुमुख्यानपि।
जाज्वल्यं जगतो विधाय किमपि प्राप्तः प्रियोऽह्नां पति-
र्यात्वस्तं प्रविशत्वथाब्धिमथवा मेरौ परिभ्राम्यतु॥ ७॥

श्रीकल्याणस्य।

न्याय्यं यत्तमसः समूलदलनं भास्वत्तया तन्यते
नैतच्चारु परं सजातिसकलज्योतींषि मुष्णासि यत्।
युक्तं वाऽखिललोकमूर्धपदवीमादातुमिच्छोर्यतः
किन्तेजः किमु पूर्णता किमुदयस्तुल्ये परे जीवति॥ ८॥

विद्येशानस्य।

न तेजस्तेजस्वी प्रसृतमपरेषां विषहते
स तस्य स्वो भावः प्रकृतिनियतत्वादकृतकः।
मयूखैरश्रान्तस्तपति यदि देवो दिनकरः
किमाग्नेयो ग्रावा निकृत इव तेजो[3] वि[कि]रति॥ ९॥

भवभूतेः।

साम्यं निम्नोन्नतानामभवदपहता नेत्रनिर्वाणसंप-
न्मार्गालोके न लोकः प्रभवति विदधे ध्वान्तमेकातपत्रम्।
कालेनाशेषमेवाप्रकृातिमिति (?) दिनाधीश्वरस्योपकारा-
दस्य द्वीपान्तरेऽपि प्रसभसरभसं किन्तु तेजस्तदेव॥ १०॥

वस्तुपालस्य।

इति श्रीमदारोहकभगदत्तजल्हणदेवराचितायां सूक्तिमुक्तावल्यां रविपद्धतिः।

---

१ भट्टवल्लभदेवस्यैतौ. ख. २ चा. क. ३ वितरति. ख.

# चन्द्रपद्धतिः ( ११ )



आलोकवन्तस्सन्त्येव भूयांसो भास्करादयः ।
कलावानेव तु ग्रावद्रावकर्मणि कर्मठः ॥ १ ॥

प्रह्लादनस्य ।

दैवाद्यद्यपि तुल्योऽभूत् भूतेशस्य परिग्रहः ।
तथाऽपि किं कपालानि तुलां यान्ति कलानिधेः ॥ २ ॥

मालतीमाधवस्य ।

राजशब्दं स एवैकः काममिन्दुर्निषेवताम् ।
कलङ्ककल्पमप्येणमाश्रितं न जहाति यः ॥ ३ ॥

कस्यापि ।

पीयूषं वपुषोऽस्य हेतुरुदयो विश्वस्य नेत्रोत्सवः
प्लुष्टं भानुकरैरयं त्रिभुवनं ज्योत्स्नाजलैस्सिञ्चति ।
सर्वाशाप्रतिरोधकान्धतमसध्वंसाय बद्धोद्यमो
धिग्धातारमिहापि लक्ष्म लिखितुं यस्य प्रवृत्तं मनः ॥ ४ ॥

कस्यापि ।

यद्यपि शिरोऽधिरोहति [1]रौद्रः क्रोधेन सिंहिकातनयः ।
तदपि न शरणं यातं सागरसूनुर्मृगं त्यजति ॥ ५ ॥

मदनस्य ।

विरम तिमिर साहसादमुष्माद्यदि रविरस्तमितः स्वतस्ततः किम् ।
कलयसि न पुरो महामहोर्मिद्युतिनिधिरभ्युदयत्ययं शशाङ्कः ॥ ६ ॥

बल्लाळसेनस्य ।

एकैव साऽमृतमयी सुतरामनर्घ्या
काऽप्यस्त्यसौ हिमकरस्य कळा ययैव ।
आरोपितो गुणविदा परमेश्वरेण
चूडामणौ न गणितोऽस्य कलङ्कदोषः ॥ ७ ॥

कस्यापि ।

१ रुद्धं क. ख.; रौद्र इति शार्ङ्गधरीयः पाठः ।

रत्नाकरो जनयिता सहजश्च वर्गः
किं कथ्यताममृतकौस्तुभपारिजाताः।
किन्तैरचिन्त्यमिह तत्पुनरन्यदेव
तत्त्वान्तरं कुमुदबन्धुरसौ यदिन्दुः ॥ ८ ॥

श्रीमुरारेः।

नानाविधं विदधतोऽपि जगद्विधातु-
रेकं चिरात्किमपि सच्चरितं बभूव।
मित्रोदयद्विषि विकासिनि तद्विपत्तौ
दोषाकरे शशिनि यन्निहितः कलङ्कः ॥ ९ ॥

कस्यापि।

किमत्रेर्नो पुत्रः किमु न हरचूडामणिरसौ
न किं हन्ति ध्वान्तं जगदुपरि किं वा न वसति।
यदेतस्यान्तस्सा विलसति लघुर्लक्ष्मकणिका
विधातुर्दोषोऽयं न तु गुणनिधेस्तस्य किमपि ॥ १० ॥

वल्लभस्य।

आशाः पूरयति श्रियं वितरति त्रैलोक्यतापं हर-
त्यव्याजामृतसेचनं विदधति प्रीतिं परां तन्वति।
एतेन प्रसभं चिरं जलमुचा कालेन दूरीकृते
पूर्णे राजनि जातमुल्बणतमस्तोमावशेषं जगत् ॥ ११ ॥

हरिहरस्य।

खेदं ये जनयन्ति ये विदधति क्षिप्रं जगन्नीरसं
ये रूक्षाः स्थितिभेदिनः सुमनसां तिग्मद्युतेरंशवः।
कृत्वा तानपि निर्भरामृतमुचस्तापं त्वया छिन्दता
विश्वस्यास्य सुधामयूख महतामात्मा धुरि स्थापितः ॥ १२ ॥

श्रीभोजस्य।

प्रम्लानिं दधते दिशः परिमलाकृष्टालिगुंजारवैः
क्रन्दन्ते कुमुदानि सोमदृषदः स्वेदं त्यजन्त्याकुलाः ।
एकोऽयं हरिणस्तुषारकिरण त्वद्ग्रासकाले पुनः
स्वर्भानूत्कटदन्तपीडनभवं धत्ते न चित्ते भयम् ॥ १३ ॥

कस्यापि ।

उच्चैःस्थानकृतोदयैर्बहुविधैर्ज्योतिर्भिरुद्यत्प्रभैः
शुक्राद्यैः किममीभिरत्र विततां प्रौढिं दधानैरपि ।
यावल्लोकतमोपहेन भवता लक्ष्मीर्न विस्तार्यते
तावच्चन्द्र कथं प्रयाति परमामृद्धिं स रत्नाकरः ॥ १४ ॥

त्रिलोचनस्य ।

चन्द्रार्कौ ।

कः पश्यति खरमहसः सम्मुखमपि तेजसां सहस्रस्य ।
कलि[1]तं शशभृ[द्धां[2]]म्नो यो मण्डलखण्डनं सहते ॥ १५ ॥

श्रीवल्लभदेवस्य ।

रविरविकलश्लाघापात्रं किमत्र विचार्यते
सकलजगतः सत्तामुज्जीवयन्ति यदंशवः ।
पुनरितरथा तापै[3]ः पापः स केन विलुप्यता-
मयमपि सुधारश्मिस्तस्मिन्न संरभते यदि ॥ १६ ॥

प्रह्लादनस्य ।

॥ इति चन्द्रपद्धतिः ॥

---

१ तो क, ख, २ द्धयो क, ख, ३ सुप्तः पातः क. ख.

## वायुपद्धतिः ( १२ )



वरतरुविघटनपटवः कटवश्चञ्चन्ति वायवो बहवः।
तत्कुसुमबहलपरिमलगुणविन्यासे कृती त्वेकः॥ १॥

वैद्यभानुपण्डितस्य।

परमो मरुत्सखाऽग्नेस्तेजोवृद्धिं तनोति संज्ज्वलतः।
दीपं हरति तदस्य ज्ञातं प्रतिपन्ननिर्वहणम्॥ २॥

कस्यापि।

[१]अलिपटलैरनुयातां सहृदयहृदयज्वरं विलुम्पन्तीम्।
मृगपदपरिमललहरीं समीर पामरेषु रे किरसि॥ ३॥

मालतीमाधवस्य

स्वार्थानपेक्षं जनतापशान्त्यै नित्योदितास्सन्ति पयोमुचोऽमी।
विवर्धिणस्तानवगृह्णते ये सन्त्येव ते केऽपि महानुभावाः॥ ४॥

कस्यापि।

ये जात्या लघवः सदैव गणनां प्राप्ता न ये कुत्रचित्
पद्भ्यामेव विमर्दिताः प्रतिदिनं भूमौ विलीनाश्चिरम्।
उत्क्षिप्ताश्चपलाशयेन मरुता पश्यान्तरिक्षे सखे
तुङ्गानामुपरि स्थितिं क्षितिभृतां कुर्वन्त्यमी पांसवः॥ ५॥

भल्लटस्य।

कोऽयं भ्रान्तिप्रकारस्तव पवन पदं लोकपादाहतीनां
तेजस्विव्रातसेव्ये नभसि नयसि यत्पांसुपूरं प्रतिष्ठाम्।
तस्मिन्नुत्थाप्यमाने जननयनपदव्यापदस्सन्तु ताव-
त्केनोपायेन सह्या वपुषि मलिनतेत्येष दोषस्तवैव॥ ६॥

अमृतदत्तस्य।

शाखाभि[ :[२]र्परितो ] दिशः कलयताच्छ्रीसंविभागोत्सवं
तां रोलंबकुटुम्बके प्रथयतात्पान्थातिथेयीमसौ।
इत्थं [ पा[३]न्थ ]मनोरथप्रथिमभिस्सार्धं प्रवृद्धे मुदा
हा दुर्वात किमाततान तदिदं बाले रसाले भवान्॥ ७॥

प्रह्लादनस्य।

॥ इति वायुपद्धतिः॥

---

१ 'अलिपटलैः,' 'स्वार्थानपेक्षमित्येतौ' श्लोकौ ख. पुस्तके न स्तः २. र्वरित्तां, क. ख. ३. नाथ. क. ख.

# मेघपद्धतिः ( १३ )



चातकः [ स्वौस्य ] मानेन जलं प्रार्थयतेऽम्बुदम् ।
स [ तूदार ] तया नित्यं प्लावयत्यम्बुना महीम् ॥ १ ॥

नभसि निरवलम्बे सीदता दीर्घकालं त्वदभिमुखनिषण्णोत्तानचञ्चूपुटेन ।
जलधर जलधारा दूरतस्तावदास्तां ध्वनिरपि मधुरस्ते न श्रुतश्चातकेन ॥२॥

कयोरप्येतौ ।

एकस्य तस्य मन्ये धन्यामभ्युन्नतिं जलधरस्य ।
विश्वं सशैलकाननमाननमालोकते यस्य ॥ ३ ॥

प्रह्लादनस्य ।

जलदस्समुद्रसेवामाचरति समग्रभुवनभरणाय ।
कुरुते तामपि हतमतिरात्मम्भरिरनिशमौर्वाग्निः ॥ ४ ॥

वल्लभदेवस्य[3] ।

संप्रति न कल्पतरवो न सिद्धयो नापि देवता वरदाः ।
जलद त्वयि विश्राम्यति सृष्टिरियं भुवनकोशस्य ॥ ५ ॥

वस्तुपालस्य ।

जलधर जलभरनिकरैः परिहर परितापमुद्धरं जगतः ।
नो चेदपसर दूरं हिमकरकरदर्शनं वितर ॥ ६ ॥

चन्द्रकवेः ।

अयि जलद यदि न दास्यसि कतिचित्त्वं चातकाय जलकणिकाः ।
तदयमचिरेण भविता सलिलाञ्जलिदानयोग्यस्ते ॥ ७ ॥

कस्यापि ।

यद्भूभृतां लघु [ तैरै ] रपि बद्धमूलमासादितानि सहसैव तृणैश्शिरांसि ।
अम्भोमुचः प्रचुरवर्षविशृङ्खलस्य तच्चेष्टितं दुरवधारगतेर्जलस्य ॥ ८ ॥

भागवतजयवर्धनस्य ।

---

१. स्वाशु. क. ख. ग. घ. २ स्वौदार्य. क. ख. ग. घ. ३ Bhandarkar's Report ascribes this to Prahladana. ४. तृणै. क. ख. गुणैरिति सुभाषितावलौ पाठः ५. Bhandarkar's Report ascribes the verse to Prakāsavarsha.

एतदत्र पथिकैकजीवितं पश्य शुष्यतितरां महत्सरः ।
रे मुधाऽम्बुधर रुद्धसद्गतिर्वर्धिता किमिति घट्टवाहिनी ॥ ९ ॥

प्रकाशवर्षस्य ।

स क्षारो जलधिस्सरांसि वितरन्त्यभ्यागतेभ्यो मितं
गृह्णन्ते सरितः श्रमेण[१] परितोऽप्याधाय बन्धं बलात् ।
प्राप्यं कूपकतः कथंचन किमप्यारोप्य कण्ठे पदं
तत्त्वां त्यागिनमेकमेव ( भगव ) न्पर्जन्य मन्यामहे ॥ १० ॥

प्रह्लादनस्य ।

हृद्या नद्यः कमलसरसी राजहंसावतंसा
पुण्यं स्रोतो हिमगिरिभुवस्त्वत्कृते येन मुक्ताः ।
सम्प्राप्तेऽस्मिन् जलद दहनोच्चण्डदाहे निदाघे
पर्जन्य स्वीकुरु तमधुना चातकं पातकं वा ॥ ११ ॥

दीपकस्य ।

अये हेलावेलाकुलितकुलशैले जलनिधौ
कुतो वारामोघं बत जलद मोघं वितरसि ।
समन्तादुत्तालज्वलदनलकीलाकवळनक्रमो-
पेतानेतानुपचर पयोभिर्विटपिनः ॥ १२ ॥

कस्यापि ।

अमुं कालक्षेपं त्यज जलद गम्भीरमधुरैः
किमेभिर्निर्घोषैः सृज झगिति झूत्कारि सलिलम् ।
अये पश्यावस्थामकरुण समीरव्यतिकर-
ज्वलद्दावज्वालावलिजटिलमूर्तेर्विटपिनः ॥ १३ ॥

अचलस्य ।

सद्यः क्षिप्तं व्रजति सलिलं यत्र मुक्तामयत्वं
ख्यातस्सोऽयं जगति जलधिर्वल्लभस्ताम्रपर्ण्याः ।
शुक्तिव्याजाद्विवृतवदनेऽप्यत्र[२] वीतादरस्त्वं
कष्टं स्वातीजलद खदिरारण्यसेकाकुलोऽसि ॥ १४ ॥

भल्लटस्य ।

इति मेघपद्धतिः ।

---

१ क्रमेण. ख. २. तत्र. ख

# पक्षिणः

## कोकिलपद्धतिः ( १४ )

तदेतद्वाचि माधुर्यं जाने कोकिल कृत्रिमम् ।
यैः पोषितोऽसि तानेव जातपक्षो जहासि यत् ॥ १ ॥

श्रीभोजदेवस्य ।

चूते समीपवर्तिनि मधुकरकुलकलितमंजरीनिवहे ।
कोकिल वृतिमारूढं मूढं त्वां मन्यते लोकः ॥ २ ॥

श्रीवैद्यभानुपण्डितस्य

श्रुत्वा कर्णज्वरदं करटकदंबस्य कर्कशं विरुतम् ।
सुस्वरवैदग्धीमपि कोकिलपोतो विसस्मार ॥ ३ ॥

श्रीभीमसिंहपण्डितस्य ।

मलिनात्मना विरागः प्रकटीकृत एव कोकिलखलेन ।
जीवनदानामुन्नतिसमये वाचंयमीभवता ॥ ४ ॥

क्वचिज्झिल्लीनादः क्वचिदपि च काकोलकलहः
क्वचित्काकारावः क्वचिदपि कपीनां कलकलः ।
क्वचिद्घोरः पेरुध्वानिरयमहो दैवघटनात्
कथंकारं तारं क्वणति चकितः कोकिलयुवा ॥ ५ ॥

कयोरप्येतौ ।

अकेकी किं केकी वचसि चतुरः किन्न कुररः
शुकः किंवा मूकः स च कलरवः किं क्षतरवः ।
त्वयाऽगण्यैः पुण्यैः पिक मधुरिमा धीरगरिमा
यतो लब्धः स्तब्धः किमासि रुचिरं नेह सुचिरम् ॥ ६ ॥

१. कुरवः ख.

अपि स्वैस्सर्वस्वैः पुनरप[धि][1]नैः कैरपि [धि][2]नैः
परित्राणैः प्राणैर्यदपि च विधेयं परहितम् ।
तदद्यैतच्छब्दात्परभृत भवत्येव भवत-
स्ततश्शब्दालस्यं कथमपि निरस्यं क्षणमपि ॥ ७ ॥

अन्धवैद्यनाथस्यैतौ ।

अमृतवचनलीलाविभ्रमैरन्नपानं[3]
रचय चतुर कीर भ्रान्तचित्तेषु तेषु ।
अकलितपरसेवातापपापः पिकोऽसौ
भजतु विपिनवाटीमेष पीयूषकण्ठः ॥ ८ ॥

कस्यापि ।

परभृतशिशो मौनं तावद्विधेहि नभस्थलो-
त्पतनविषये पक्षौ स्यातां न यावदिमौ क्षमौ ।
ध्रुवमितरथा द्रष्टव्योऽसि स्वजातिविलक्षण-
ध्वनितकुपितध्वांक्षत्रोटीपुटाहतिजर्जरः ॥ ९ ॥

अचलस्य ।

रे रे काक वराक साकममुना पुंस्कोकिलेन ध्वनि-
स्पर्धाबन्धमुपेयुषस्तव कथं वक्षो न याति द्विधा ।
यस्याकर्ण्य वचस्सुधाकवचितं वाचंयमानामपि
व्यग्राणि ग्रथयन्ति मन्मथकथां चेतांसि चैत्रोत्सवे ॥ १० ॥

भल्लटस्य ।

उद्याने सहकारकोरकरसप्रत्याशया कोकिलः
स्थातुं वाञ्छति चित्तजन्मनृपतेर्मित्रञ्च मन्त्री यतः ।
किन्तु ध्वांक्षविजृंभितेषु च पिकप्रारब्धगानेषु च
क्रेंकारेषु च पञ्चमध्वनिषु च श्रोता न वेत्त्यन्तरम् ॥ ११ ॥

उत्कूजन्तु वटे वटे बत बकाः काका वराका अपि
क्रांकुर्वन्तु[4] सदा निनादपटवस्ते पिप्पले पिप्पले ।
सोऽन्यः कोऽपि रसालपल्लवलवग्रासोल्लसत्पाटव-
क्रीडत्कोकिलकण्ठकूजनकलालीलाविलासक्रमः ॥ १२ ॥

कयोरप्येतौ ।

१ घ. क. ख. २. घ. क. ख. ३ विभ्रमैः कर्णपानं इति क. पुस्तकीयः पाठः ४ काङ्कुर्वं. ख.

येनानन्दमये वसन्तसमये सौरभ्यहेलामिलद्-
भृङ्गालीमुखरे रसालशिखरे नीताः पुरा वासराः।
आः कालस्य वशेन कोकिलयुवा सोऽप्यद्य सर्वा दिशो
भ्राम्यद्वायसचञ्चुघातविदलन्मूर्धा मुहुर्धावति ॥ १३ ॥

मेरीभांकारस्य।

दात्यूहास्सरसं रसन्तु सरसं गायन्तु केकाभृतः
कादम्बाः कलमालपन्तु मधुरं कूजन्तु कोयष्टयः।
दैवाद्यावदसौ रसालविटपिच्छायामनासादय-
न्निर्विण्णः कुटजेषु कोकिलयुवा संजातमौनव्रतः ॥ १४ ॥

कस्यापि।

तूष्णीं तिष्ठ चकोर संहर गिरं त्वं कीर पारावत
त्वद्वाचो विरमन्तु बर्हिण भवत्केंठोऽपि विश्राम्यतु।
एतन्नूतनचूतपल्लवलवग्रासोल्लसन्मञ्जुल-
व्याहारः कलकण्ठ एष किरति श्रोत्रे सुधाशीकरान् ॥ १५ ॥

॥ इति कोकिलपद्धतिः ॥

---

१ त्कोलाहलः ख.

# हंसपद्धतिः ( १५ )

गाङ्गमम्बु सितमम्बु यामुनं कज्जलाभमुभयत्र मज्जतः ।
राजहंस तव सैव शुभ्रता चीयते न च न चापचीयते ॥ १ ॥

अम्भोजिनीवननिवासविलासमेव हंसस्य हन्तु नितरां कुपितो विधाता ।
न त्वस्य दुग्धजलभेदविधौ प्रसिद्धां वैदग्ध्यकीर्तिमपहर्तुमसौ समर्थः ॥ २ ॥

तरौ तीरोद्भूते क्वचिदपि दलाच्छादिततनुः-
पतद्धारासारां गमय विषमां प्रावृषमिमाम् ।
निवृत्तायां त्वस्यां सरसि सरसोत्फुल्लनलिने
स एव त्वं हंसः पुनरपि विलासास्त इह ते ॥ ३ ॥

केषामप्येते ।

यस्सन्तापमपाकरोति जगतां यश्चोपकारक्षमः
सर्वेषाममृतात्मकेन वपुषा प्रीणाति नेत्राणि यः ।
तस्याप्युन्नतिमंबुदस्य सहसे यन्न त्वमेतावता
वर्णेनैव परं मराळ धवलः कृष्णश्चरित्रैरसि ॥ ४ ॥

श्रीभोजदेवस्य ।

हंस त्वं शरदिन्दुधामधवलः पक्षद्वयप्रोन्नतो
धात्रीमण्डलमण्डनस्थिरपदः श्लाघ्यं न वा किं तव ।
किं त्वैक्यं गतयोर्यदङ्ग कुरुषे भेदं च दुग्धाम्भसो-
र्नूनं सर्वगुणोन्नतस्य भवतस्तन्नैव युक्तं मनाक् ॥ ५ ॥

अन्या सा सरसी मराळ मुनिभिर्यत्तीरसोपानिका-
विन्यस्तान् बलितण्डुलान् कवलयन्दृष्टोऽसि हृष्टैर्मुखैः ।
एषा पक्कणवापिका कमलिनीखण्डेऽत्र गुप्तात्मभि-
र्व्याधैस्त्वद्विधमुग्धबन्धनविधौ किं नाम नासूत्र्यते ॥ ६ ॥

प्रम्लाना नलिनी जलानि किरणैस्सूर्यस्य शोषं ययु-
र्नाशं प्राप विहंगमावलिरियं तृष्णाविशीर्णेक्षणा ।
एते तीरमहीरुहा अपि पतत्पत्रश्रियोऽद्यापि रे
कोऽयं राजमराळ शुष्कसरसीतीरे रतिप्रक्रमः ॥ ७ ॥

गतं तद्गांभीर्यं तटमपि वृतं जालिकशतैः सखे हंसोत्तिष्ठ प्रथममुतो धाव सरसः ।
[illegible] क्षण बकोऽसौ वाचाटश्चरणयुगलं मूर्ध्नि कुरुते ॥ ८ ॥

यो दिव्याम्बुजलीनमत्तमधुपप्रोद्गीतिरम्यं सर-
स्त्यक्त्वा मानसमल्पवारिणि पदं बध्नाति केदारके ।
तस्यालीकसुखाशया परिभवक्षेत्रीकृतस्याधुना
हंसस्योपरि टिट्टिभो यदि पदं धत्तेऽत्र को विस्मयः ॥ ९ ॥

विश्वाभीष्टरसं प्रबन्धविधृति स्नेहस्य पात्रं जडै-
र्युक्तं यद्यपि कुर्वते हतधियो दुग्धं विमुग्धाशयाः ।
तिष्ठन्त्यत्र तथापि केचन गिरा गत्या च लोकोत्तरा
नीरक्षीरविवेकधीरधिषणास्ते राजहंसाः कुतः ॥ १० ॥

काके कार्ष्ण्यमलौकिकं धवलिमा हंसे निसर्गस्थितो
गांभीर्ये महदन्तरं वचसि यो भेदस्स किं कथ्यते ।
एतावत्सु विशेषणेष्वपि सखे यत्रेदमालोक्यते
के काकाः खलु के च हंसशिशवो देशाय तस्मै नमः ॥ ११ ॥

सन्त्यन्यत्रापि वीचीचयचकितचलत्क्रौञ्चचञ्चुप्रभिन्न-
प्रोन्निद्राम्भोजरेणुप्रकरविरचनाहारिवारिप्रबन्धाः ।
किन्तु स्वच्छाशयत्वं जगति न सुलभं तेन गत्वा [2]विदूरं
बद्धोत्कण्ठानुरागादनुसरति सरो मानसं राजहंसः ॥ १२ ॥

आकारः कमनीयताकुलगृहं लीलालसा सा गति-
स्संपर्कः कमलाकरैः कलतया लोकोत्तरं कूजितम् ।
यस्येयं गुणसंपदस्ति महती तस्यापि भव्यस्य ते
संरब्धत्वमसद्[3]मद्गुकलहे नाहं सहे हंस हे ॥ १३ ॥

केषामप्येते ।

गतमनुतटं पद्मे पद्मे निवेशितमाननं
प्रतिकमलिनीपत्रच्छायं मुहुर्मुहुरासितम् ।
नयनसलिलैरुष्णैः कोष्णाः कृता जलवीचयो
जलदमलिनां हंसेनाशां विलोक्य गमिष्यता ॥ १४ ॥

इति हंसपद्धतिः ।

---

१. कृति. ख. २. ऽपि. ख. ३. द्रु. क.

## मयूरपद्धतिः ( १६ )

व्यजनैरातपत्रैश्च भूत्वा पिच्छैः कलापिनाम्।
स्थानभ्रष्टैरपि कृतं परेषां तापवारणम् ॥ १ ॥

क्रमगलितैश्शिखिपिञ्छैर्मण्डनमास्तां वधेन किं शिखिनः।
कुतुकिनि पुनर्न लाभो विषधरगहनं वनं भविता ॥ २ ॥

गोयिदोयिककविराजयोः।

रे रे मयूर शबरीकरतालिकाभिः किं मुग्ध नृत्यसि वृथा विततोरुबर्हः।
त्वद्बर्हविस्तृतितिरोहितमूर्तयोऽमी त्वां घातयन्ति निभृतं कितवाः किराताः॥३॥

भ्रातर्जीवनदायिनस्तु जगतामेते घनास्त्वत्प्रिया
बन्धुस्ते हरनन्दनस्स च सखा कण्ठश्रिया शंकरः।
इन्द्रश्चापि सुहृत्तवाङ्गनयनैरेतेषु मित्रेष्वपि
प्रायो वायुभुजो मयूर भवतो ग्रासाय किं कल्पिताः ॥ ४ ॥

भ्रातः पत्ररथेश्वरोऽसि कटके त्वं भूभृतोऽप्यग्रणी-
र्नाट्ये नेत्रसहस्रदर्शनपटुस्त्वं नीलकण्ठोऽपरः।
भद्र श्रीशभुजङ्गवन्दिघटना गीतैस्त्वया छिद्यते
शुक्लापाङ्ग तथापि कालवशतो मान्यास्तवैते गुणाः ॥ ५ ॥

केषामप्येते।

एतस्मिन्मलयाचले बहुविधैः किं तैरकिञ्चित्करैः
काकोलूककपोतकोकिलकुलैरेकोऽपि पार्श्वस्थितः।
केकी कूजति चेत्तदा विघटितव्यालावलीबन्धनः
सेव्यः स्यादिह सर्वलोकमनसामानन्दनश्चन्दनः ॥ ६ ॥

वसुन्धरस्य।

अस्मान्विचित्रवपुषश्चिरपृष्ठलग्नान् को वा विमुञ्चति सखे यदि वा विमुञ्च।
हा हन्त केकिवर हानिरियं तवैव भूपालमूर्धनि पुनर्भविता स्थितिर्नः ॥७॥

अये नीलग्रीव क्व कथय सखे तेऽद्य मुनयः
परं तोषं येषां तव वरविलासो वितनुते।
अमी दूरात्क्रूराः क्वणितमिदमाकर्ण्य सहसा
त्वरन्ते हन्तुं त्वामहह शबराः पुङ्खितशराः ॥ ८ ॥

कस्यापि।

॥ इति मयूरपद्धतिः ॥

# काकपद्धतिः (१७)



अहो मोहो वराकस्य काकस्य यदसौ रसात्।
नरीनर्ति सरीसर्ति समीपे शिखिहंसयोः ॥ १ ॥

आमरणादपि विरुतं कुर्वाणाः स्पर्धया सह मयूरैः।
किं जानन्ति वराकाः काकाः केकारवं कर्तुम् ॥ २ ॥

कयोरप्येतौ।

श्रुतराजहंसवचसो युक्ता तूष्णीकतैव काकस्य।
आकर्णितकलकोकिलरुतमपि मुखरं च धिक् ध्वांक्षम् ॥ ३ ॥

श्रीवल्लभदेवस्य।

काक त्वं फलनम्रमाम्रविपिनं दैवात्समासादयन्
किं कर्णौ बधिरीकरोषि परुषैः र्कैकारकोलाहलैः।
मौनं चेदवलम्बसे रतभरप्रक्रान्तपुंस्कोकिल-
भ्रान्त्याऽपि त्वयि सञ्चरन्ति न कथं मुग्धाकटाक्षच्छटाः ॥ ४ ॥

हरिभट्टस्य।

चित्रं चित्रं बत बत महच्चित्रमेतद्विचित्रं
जातो दैवादुचितरचनासंविधाता विधाता।
यन्निंबानां परिणतफलस्फीतिरास्वादनीया
यच्चैतस्याः कवलनकलाकोविदः काकलोकः ॥ ५ ॥

कस्यापि।

पथि निपतितां शून्ये दृष्ट्वा निरावरणाननां
यदि दधिघटीं गर्वोत्तब्धः समुद्धुरकन्धरः।
निजसमुचितास्तास्ताश्चेष्टा विकारशताकुलो
यदि न कुरुते काणः काकः कदा नु विधास्यति ॥ ६ ॥

मल्लटस्य।

१ कङ्कस्य. ग २ स्फूर्ति. क.

रथ्यावस्करचत्वरावटबहिर्भूमीवटन्नीक्षणं
सञ्चार्यैकमितस्ततो भ्रमिवशात्प्राप्यैकमाखुं मृतम्।
काकः पश्यत कोटरे कटु रटन् संग्राममग्नामर-
प्रत्यक्षापहृतामृतेन समतां तार्क्ष्येण संश्लाघते ॥ ७ ॥

भट्टरुद्रनाथस्य।

किं केकीव शिखण्डमण्डिततनुः किं कीरवत्पाठकः
किं वा हंस इवाङ्गनागतिगुरुः शारीव किं सुस्वरः।
किं वा हन्त शकुन्तपालपिकवत् कर्णामृतस्यन्दनः
काकः केन गुणेन काञ्चनमये व्यापारितः पञ्जरे ॥ ८ ॥

नो चारू चरणौ न चापि रुचिरा चञ्चुर्न वाच्यं वचो
नो लीलाललिता गतिर्न च शुचिः पक्षग्रहोऽयं तव।
क्रूरक्रेंकृतदुर्भगां गिरमिह स्थाने सतामुद्गिरन्
मूर्ख ध्वांक्ष न लज्जसे विसदृशं हंसत्वमुन्नाटयन् ॥ ९ ॥

इति काकपद्धतिः।

---

१ मौ रट. क. ख, २ नामस्य ग.

# बकपद्धतिः । ( १८ )



जीवतोऽपि गिलन्मत्स्यान्मुनिवद्दृश्यते बकः ।
मृतानपि न गृध्रोऽत्ति धिगाकारदुरन्तताम् ॥ १ ॥

कस्यापि ।

निजकुलोचितचेष्टितमात्मनो यदपहाय यियाससि हंसताम् ।
बक बकव्रतमेव तथाऽपि ते चलति चेत्तदिमां त्यज यन्त्रणाम् ॥ २ ॥

भट्टगोविन्दराजस्य ।

किरति मुखगृहीतं भुक्तशेषं पुरीषं
विलिखति चरणाग्रैर्दैवतानां शिरांसि ।
विहरति हतमानः साधुमूर्धस्वशङ्कं
किमिव न कुरुतेऽयं प्राप्य खं कङ्कपोतः ॥ ३ ॥

हंहो बकोट यदिहोद्धुरकन्धरत्वं त्वं नाटयन् वहसि रे धवलत्वमेतत् ।
ग्रासातिमात्रघटनाकुलितोदकोऽसि चञ्च्वा न किं मुहुरनेन समोऽस्तु कस्ते॥४॥

आधाय द्रुतमाकृतेरुपशमाद्विश्वासनं सन्निधा-
वेकैकं शफरं बकोट कपटाचार्यो जिघृक्षन्मुहुः ।
औदासीन्यनिवेदनाय निदधद्दिक्षु क्षणं चक्षुषी
चञ्च्वा किञ्च परामृशन् वपुरयं गाम्भीर्यमभ्यस्यति ॥ ५ ॥

श्रीभोजदेवस्यैतौ ।

रेरे शिष्ट बकोट नाकतटिनीतीरे तपस्विव्रतं
ध्यानेनानिमिषोपभोगमनसा युक्तं करोषीदृशम् ।
एवं यत्किल मानसस्य पदवीं काङ्क्षस्ययुक्तं हि त-
न्नीरक्षीरविवेकनिर्मलधियो हंसस्य नान्यस्य सः ॥ ६ ॥

कस्यापि ।

तद्वैदग्ध्यं समुचितपयस्तोयतत्त्वं विवेक्तुं
 संलापास्ते स च मृदुपदन्यासहृद्यो विलासः।
आस्तां तावद्बक यदि तथा वेत्सि किञ्चिद्विधांशं
 तूष्णीमेवासितुमपि सखे त्वं कथं मे न हंसः॥ ७॥

भट्टमल्लटस्य।

जातिस्तस्य न मानसे न शुचिभिर्वृत्तिर्मृणालाङ्कुरै-
 र्न ब्रह्मोद्वहनेन निर्मलयशःप्राप्तिर्न वाचः कलाः।
जीवत्सत्त्ववधेन बाह्यधवलो भ्राम्यन् सगर्वं पुन-
 र्मिथ्यैवोन्नतकन्धरः शठबको हंसैस्सह स्पर्धते॥ ८॥

बकोट ब्रूमस्त्वां लघुनि सरसि क्वाऽपि शफरै-
 स्तव न्याय्या वृत्तिर्न पुनरवगाढुं समुचितः।
इतंश्चेतश्चाभ्रंलिहलहरिहेलातरलित-
 क्षितिध्रग्रासैकग्रहिलतिमिपोतः पतिरपाम्॥ ९॥

कयोरप्येतौ।

इति बकपद्धतिः।

# भ्रमरपद्धतिः ( १९ )



गुम्फन्तु मालतीमालां विचित्रां चित्रकारकाः ।
तदामोदपरिच्छेदकोविदः कोऽपि षट्पदः ॥ १ ॥

यद्यपि वदनसरोरुहसौरभलोभेन षट्पदोऽभ्येति[1] ।
तदपि तन्मुत्पलनयना दंशाय समागतं मनुते ॥ २ ॥

मदनस्य ।

जातिं यथाऽनुसरसि त्वमिह द्विरेफ तद्वद्द्विजातिमिहं यन्निबिडानुरागः ।
तद्वेद्मि[3] मूढ न परं वपुरेव कृष्णमित्थञ्चरित्रमपि रे तव कृष्णमेव ॥ ३ ॥

श्रीभोजदेवस्य ।

मागा विषादमलिपोतक केतकीनामन्तर्निगूढमनवाप्य मधुप्रकर्षम् ।
लाभस्स एव भवतो यदि कण्टकानां श्रेणीभिरक्षतशरीरतया प्रयासि ॥ ४ ॥

भट्टभल्लटस्य ।

रात्रिर्गमिष्यति भविष्यति सुप्रभातं भास्वानुदेष्यति भविष्यति पङ्कजश्रीः ।
इत्थं विचिन्तयति कोशगते द्विरेफे हा हन्त हन्त नलिनीं गज उज्जहार ॥५॥

श्रियो वासाम्भोजे त्रिदिवसरिदम्भोजकुहरे
　हरेर्नाभीपद्मे मधु मधुकरो यः किल पपौ ।
स दैवादुन्मीलत्तपनकरतापव्यतिकर-
　व्यथाकम्प्रः सम्प्रत्यतरुमरुभूमौ विचरति ॥ ६ ॥

यद्यप्याम्रतरोरमुष्य तरुणीकर्णावतंसोचिता-
　माजिघ्रन्नवमञ्जरीं मधुप हे जातोऽसि पूर्णोत्सवः ।
विस्मर्तुं भवतस्तथाऽप्यनुचितं तद्वन्ध्यमिन्दीवरं
　यस्यास्वाद्य मधूनि धूनितशिरो मञ्जु त्वया गुञ्जितम् ॥ ७ ॥

केषामप्येते ।

१. भ्रमति क. पाठभेदः २ मपि. क. पाठभेदः ३. द्वच्मि. क. पाठभेदः

निरानन्दः कौन्दे मधुनि विधुरो बाळवकुले
न साले सालम्बे लवमपि लवङ्गे न रमते ।
प्रियङ्गौ नो सङ्गं रचयति न चूते विचरति
स्मरन् लक्ष्मीलीलाकमलमधुपानं मधुकरः ॥ ८ ॥

छित्तपस्य ।

यस्यास्सङ्गमवाञ्छया न गणिता वाप्यो विनिद्रोत्पलाः
यामालिङ्ग्य समुत्सुकेन मनसा यातः परां निर्वृतिम् ।
भग्नां तामवलोक्य चन्दनलतां भृङ्गेण यज्जीव्यते
धैर्यं नाम तदस्तु तस्य न पुनः स्नेहानुरूपं कृतम् ॥ ९ ॥

दूरादुज्झति चम्पकं न च भजत्यम्भोजराजीरजो
नाजिघ्रत्यपि पाटलापरिमलं धत्ते न चूते रतिम् ।
मन्दारे यदनादरो विचकिलप्रान्ते न सन्तृप्यते
तन्मन्ये क्वचिदङ्ग भृङ्गतरुणेनास्वादिता मालती ॥ १० ॥

कयोरप्येतौ ।

सोऽपूर्वो रसनाविपर्ययविधिस्तत्कर्णयोश्चापलं
दृष्टिस्सा मदविस्मृतस्वपरदिक् किं भूयसोक्तेन वा ।
सर्वं विस्मृतवानसि भ्रमर हे यद्वारणोऽद्याप्यसा-
वन्तश्शून्यकरो निषेव्यत इति भ्रान्तः[1] क एष ग्रहः ॥ ११ ॥

भल्लटस्य ।

इति भृङ्गपद्धतिः ।

---

१ भ्रान्तः ख

# खद्योतपद्धतिः ( २० )

सूर्यादन्यत्र यच्चन्द्रेऽप्यर्थासंस्पर्शि तत्कृतम् ।
खद्योत इति कीटस्य नाम दुष्टेन केनचित् ॥ १ ॥

भल्लटस्य ।

क्वापि गतः पतिरह्नां जलदान्तरितः शशी सनक्षत्रः ।
शून्ये नभसि भवानपि खद्योत द्योततां नाम ॥ २ ॥

इन्दुः प्रयास्यति विनङ्क्ष्यति तारकश्रीः स्थास्यन्ति लीढतिमिरा न मणिप्रदीपाः ।
अन्धं समग्रमपि कीटमणे भविष्यत्युन्मेषमेष्यति भवानिति दूरमेतत् ॥ ३ ॥

युष्मादृशाः कृपणकाः कृमयोऽपि यत्र भान्ति स्म सन्तमसमय्यगमन्निशाऽसौ ।
सूर्यांशुदीप्तदशदिग्दिवसोऽधुना तु भात्यत्र नेन्दुरपि कीटमणे किमु त्वम् ॥ ४ ॥

केषामप्येते ।

भ्राजिष्णवो नभसि मेघकृतान्धकारे स्वल्पप्रभा अपि परैरनिरुद्धभासः ।
खद्योतकाः प्रकटितोरुतरप्रभावास्तावन्न सप्ततुरगस्समुदेति यावत् ॥ ५ ॥

हेविधनेसोरस्य[2] ।

अदृष्टिव्यापारं गतवति दिनानामधिपतौ
यशश्शेषीभूते शशिनि गतधाम्नि ग्रहगणे ।
तथाऽन्धं सञ्जातं जगदुपनते मेघसमये
यथाऽमी गण्यन्ते तमसि पटवः कीटमणयः ॥ ६ ॥

आनन्दवर्धनस्य ।

तेजो दर्शयसि त्वमीदृशमपि क्षुद्र स्फुरन्यासु ताः
खल्वन्याः प्रततातिसान्द्रतिमिरच्छन्नावकाशा निशाः ।
खद्योतोऽत्र स कोऽपि तिष्ठति पुनस्तेजस्विनामग्रणी-
रन्येषां भुवनेऽपि यस्य पुरतः शाम्यन्ति तेजःकथाः ॥ ७ ॥

श्रीभोजदेवस्य ।

इति खद्योतपद्धतिः ।

---

१. तेन्दुगुरु. क. ख. दतीव्रगुरु. इति सुभाषितावल्यां पाठः २. किशोरस्य. इति सुभाषितावल्यां. ३. सदा ख.

# चातकपद्धतिः ( २१ )



चातक धूमसमूहं दृष्ट्वा मा धाव वारिधरबुद्ध्या।
इह हि भविष्यति भवतो नयनयुगादेव वारि परम् ॥ १ ॥

तत्स्वोन्नतेस्समुचितं समयोचितं च तच्चातकाय जलदेन वितीर्णमम्बु।
तच्चान्तरेण च पपौ पवनस्स कोऽपि यश्चेष्टदेशमनु तस्य चकर्ष वर्षम् ॥ २ ॥

यस्योदये गुरुमनोरथमन्तरेण सञ्चिन्तितं किमपि चेतसि चातकेन।
हा कष्टमिष्टफलदानविधानहेतोरम्भोधरात्पतति सम्प्रति वज्रवह्निः ॥ ३ ॥

केषामप्येते।

अये वापीहंसा निजवसतिसङ्कोचपिशुनं
कुरुध्वं मा चेतो वियति चलतो वीक्ष्य विहगान्।
अमी ते सारङ्गा भुवनमहनीयव्रतभृतां
निरीहाणां येषां तृणमिव भवन्त्यम्बुनिधयः ॥ ४ ॥

आकाशपोलेः।

कालातिक्रमणं कुरुष्व ताडितां विस्फूर्जितैस्त्रासय
स्फारैर्भीषय गर्जितैरतितरां कार्ष्ण्यं मुखे दर्शय।
यस्यानन्यगतेः पयोद मनसो जिज्ञासया चातक-
स्याधेहि त्वमिहाखिलं तदपि न त्वत्तः परं याचते ॥ ५ ॥

यः कृष्णं कुरुते मुखं जनयति त्रासं तडिद्भिश्च यो
यश्च प्रार्थयतः परं दलयति श्रोत्रं निजैर्गर्जितैः।
सत्यं चातक तं तथाविधमपि भ्रातस्त्वया याचता
जीमूतं कृतमेव तुल्यमनयोरर्थित्वतिर्यक्त्वयोः ॥ ६ ॥

श्रीभोजदेवस्यैतौ।

त्यक्त्वा पुष्करिणीर्विहाय सरितस्सन्त्यज्य पाथोनिधीन्
कूपश्रेणिमपास्य साम्प्रतमहो त्वामेकमेवाश्रितः।
तद्भो वारिद मुह्यतः प्रलपतः संशुष्यतस्तृष्यतः
सारङ्गस्य विमुञ्च चञ्चुपुटके द्वित्रान् कणानम्भसः॥ ७॥

कस्यापि।

सन्ति कूपाः स्फुरद्रूपाः परितः सरितः शुभाः।
तथाऽपि चातकस्यैकः फलदो जलदोदयः॥ ८॥

त्यक्त्वा तापनिवारिवारिनिकरान् पद्माकरान् सर्वतः
पीयूषप्रतिरूपरूपनिवहानुज्जागरान् सागरान्।
भ्रातश्चातक यं समीक्ष्य नभसि प्राप्नोषि तृष्णाकुलः
सोऽयं किं त्वयि वज्रवह्निमहहा सज्जीकरोत्यम्बुदः॥ ९॥

श्रीवैद्यभानुपण्डितस्य।

अनुसर सरस्तीरं वैरं किमत्र सहात्मना
कतिपयपयःपानं मानिन् समाचर चातक।
प्रलयपवनैरस्तं नीतः पुरातनवारिदो
यदयमदयं कीलाजालं विमुञ्चति नूतनः॥ १०॥

॥ इति चातकपद्धतिः॥

# भूचराः।

## सिंहपद्धतिः ( २२ )

उद्धन्ध [ नं दृढं गाढं ][1] सिंहोऽपि सहते यदि।
कथं करटिनस्तर्हि नृपचिह्नानि बिभ्रति ॥ १ ॥

कस्यापि।

खरनखरशिखरदारितमदकरिरक्ताक्तकेसरस्यास्य[2]।
अपि भूरि भूरिमायो जनयति परुषां रुषं न हरेः ॥ २ ॥

अन्धनाथस्य।

कथमप्यधिगतरन्ध्रैरध्युषिता यदि गुहाऽऽखुभिः क्षुद्रैः।
इयतैव किं मृगाधिप निजविक्रमनिर्विदं वहसि ॥ ३ ॥

श्रीवल्लभदेवस्य।

यद्यपि विधि[3] वैगुण्यात् सिंहः पतितो[4]ऽतिदुस्तरे कूपे।
तदपि हि वाञ्छति सततं करिकुम्भविदारणं मनसा ॥ ४ ॥

कस्यापि।

नास्योच्छ्रायवती तनुर्न दशनौ स्थूलौ न दीर्घः करः
सत्यं वारण नैष केसरिशिशुस्त्वां डम्बरैः स्पर्धते।
तेजोबीजमजय्यमेव हृदये न्यस्तं पुरा वेधसा
तादृक् त्वादृशमेव येन सुतरां भोज्यं पशुं मन्यते ॥ ५ ॥

आनन्दवर्धनस्य।

मातङ्गाः किमु वल्गितैः किमफलैराडम्बरैर्जम्बुका-
स्सारङ्गा महिषा मदं त्यजत किं शून्येऽथ शूरा न के।
कोपाटोपसमुद्धटोत्कटसटाकोटेरिभारेश्शनैः
सिन्धुध्वानिनि[6] हुङ्कृते स्फुरति यत्तद्गर्जितं गार्जितम् ॥ ६ ॥

कस्यापि।

---

१ नं रूढा. क. न दृढा. ख. न दृढां राढां ग. च. न दृढा गाढा. २. खरेत्यस्य श्लोकस्य कस्मिंश्चित्पुस्तके पाठो नेति. क. पुस्तके ज्ञाप्यते. ३. धीवैगु. ख. च. ४. पतति सुदुस्त ख. च. ५. समुद्धतो च. ६. सिंहस्याशनिहुङ्कृतैः क.

स्मेरास्सन्तु सभासदः करिचमूदर्पज्वरोत्सारिणा
पारीन्द्रेण समं स जम्बुकयुवा युद्धाय बद्धादरः ।
तत्रापि प्रथयन्ति तुल्यबलतामेके तयोरुच्चकै-
रन्ये संशयशंसिनस्तदपरे बाढं विपर्यासिनः ॥ ७ ॥

भीमपण्डितस्य ।

येनानर्गलफालकेलिदलितप्रत्यग्रकादम्बिनी-
धाराधोरणिधौतधातुषु पुरा शैलेषु लीलायितम् ।
सोऽयं शृङ्गनिपातभग्नचरणः स्फारस्फुरत्फेरवी-
फेत्कारैः कुपितोऽद्य खादति पुनः पाणी मृगग्रामणीः ॥ ८ ॥

भेरीभाङ्कारस्य ।

ग्रामाणामुपशल्यसीमनि मदोद्रेकस्फुरत्सौष्ठवाः
फेत्कारध्वनिमुद्गिरन्तु परितः सम्भूय गोमायवः ।
अन्यः कोऽपि घनाघनध्वनिघनः पारीन्द्रगुञ्जारवः
शुष्यद्दण्डमलोलशुण्डमचलत्कर्णं गजैर्यः श्रुतः ॥ ९ ॥

रल्हणस्य ।

अस्मिन्नम्भोदवृन्दध्वनिजनितरुषि प्रेक्षमाणेऽन्तरिक्षं
मा काकं व्याकुलो भूस्तरुशिरसि शवक्रव्यलेशानशानः ।
धत्ते मत्तेभकुम्भव्यतिकरकरजग्रामवज्राग्रजाग्र-
द्ग्रासव्यासक्तमुक्ताधवलितकवलो न स्पृहामत्र सिंहः ॥ १० ॥

महीपतिर्मण्डलीकस्य

॥ इति सिंहपद्धतिः ॥

१ पार्श्वे. ग. २ मुहुः ग. ३ श. क. ख. च. ४ ग. पुस्तकेऽयं नामनिर्देशः ।

# गजपद्धतिः ( २३ )

कौपे पयसि लघीयसि तापेन करः प्रसारितः करिणा।
सोऽपि न पयसा लिप्तो लाघवमात्मा परं नीतः ॥ १ ॥

कस्यापि।

यदि मत्तोऽसि मतङ्गज किममीभिरसारसरलतरुदलनैः।
हरिमनुसर खरनखरं व्यपनयति स करटकण्डूतिम् ॥ २ ॥

वल्लभदेवस्य।

भद्रां[1] जातिं वहतो मदकरिणश्चेन्न डिण्डिमस्तत्किम्।
मदमुदितमधुकरालीझङ्कृतिकोलाहलेनालम् ॥ ३ ॥

मालतीमाधवस्य।

त्यक्तो विन्ध्यगिरिः पिता भगवती मातेव रेवा नदी
त्यक्ताः स्नेहनिबन्धबन्धुरधियस्तुल्योदया दन्तिनः।
त्वल्लोभान्ननु हास्तिनि प्रतिदिनं बन्धाय दत्तं वपु-
स्त्वं दूरे म्रियसे लुठन्ति च शिरःपीठे कठोराङ्कुशाः ॥ ४ ॥

क्वाकारो गिरिसन्निभः क्व च गतिर्वेगेऽपि लीलालसा
हेलाकुञ्चितेक्षणाः क्व नु दृशः किं वा क्व ते बृंहितम्।
वप्राघातरसः क्व ते क्व च करः[2] कष्टं यदेवंविधं
त्वामारुह्य शिशुः पदा परवशं संचारयत्याज्ञया ॥ ५ ॥

कयोरप्येतौ

कर्णे चामरचारुकम्बुकलिका कण्ठे मणीनां गणः
सिन्दूरप्रकरश्शिरःपरिसरे पार्श्वान्तिके किङ्किणी।
लब्धश्चेन्नृपवाहनेन करिणा बद्धेन भूषाविधि-
स्तत्किं भूधरधूलिधूसरतनुर्मान्यो न वन्यः करी ॥ ६ ॥

रल्हणस्य[3]।

१ भद्रामित्यस्य कस्मिंश्चित्पुस्तके पाठोनेति, क. पुस्तके ज्ञाप्यते। २ रिन् क. पाठभेदः ३ बिल्ह. क.

यत्प्रत्यग्रदलावलीकवलनैर्जातोऽसि शैलोपमो
यच्छायासु कदर्थितोऽसि न कदाऽप्यर्कांशुभिः कर्कशैः ।
घोराघातकिरातपत्रिपतने यैर्वारवाणायितं
तान्मातङ्ग मदान्ध पाटयसि किं विन्ध्याटवीपादपान् ॥ ७ ॥

पीतं यत्र हिमं पयः कवलिता यस्मिन्मृणालाङ्कुरा-
स्तापार्तेन निमज्ज्य यस्य सरसो मध्ये विमुक्तः श्रमः ।
धिक्तस्यैव जलानि पङ्किलयतः पाथोजिनीर्मश्नतः ।
कूलान्युत्खनतः करीन्द्र भवतो लज्जाऽपि नोज्जागरः ॥ ८ ॥

दूरे यूथकथा प्रिया सकलभा साऽपि क्वचिद्विद्रुता
सा विन्ध्याद्रिवनावली विधिवशाद्ध्यानावशेषाऽभवत् ।
प्राप्तो बन्धपराभवस्तदपि रे दन्तीन्द्र धन्यो भवान्
यद्दन्तव्यवसायसंश्रयवशात्साम्राज्यभाजो नृपाः ॥ ९ ॥

केषामप्येते ।

तापो नापगतस्तृषाऽपि न कृशा धौता न धूली तनो-
र्न स्वच्छन्दमकारि कन्दकवलः का नाम केलीकथा ।
दूरोन्मुक्तकरेण हन्त करिणा स्पृष्टा न वा पद्मिनी
प्रारब्धो मधुपैरकारणमयं झंकारकोलाहलः ॥ १० ॥

उमापतिधरस्य ।

॥ इति गजपद्धतिः ॥



१ विनीतः क. पुस्तके पाठान्तरम् । २ नो जायते इति शार्ङ्गधरीयः पाठः । ३. यनं श्र. ख.

# करभपद्धतिः ( २४ )



तुभ्यं दासेर दासीयं बदरी यदि रोचते।
एतावत्येव किं द्राक्षा न साक्षादमृतप्रपा ॥ १ ॥

कर्पूरकवेः।

वपुर्विषमसंस्थानं कर्णज्वरकरो रवः।
करभस्याशुगत्या सा छादिता दोषसंगतिः ॥ २ ॥

भल्लटस्य।

आकारालापसंभोगैर्यदीयैर्लज्जते जनः।
अहो वक्रोद्धुरग्रीवस्तैरेव करभोऽधमः ॥ ३ ॥

दीपकस्य।

रूक्षं वपुर्न च विलोचनहारि रूपं
　न श्रोत्रयोस्सुखदमारटितं कदापि।
इत्थं न साधु तव किञ्चिदिदं तु साधु
　तुल्ये रतिः करभ कण्टकिनि द्रुमे यत् ॥ ४ ॥

श्रीभोजदेवस्य।

अस्याननस्य भवतः खलु कोटिरेषा
　कण्टारिका यदि भवेदविशीर्णपर्णा।
योग्या क्व ते करभ कल्पतरोर्लताया-
　स्ते पल्लवा विमलविद्रुमभङ्गभाजः ॥ ५ ॥

न भवति मिथुनानां प्रेम लावण्ययोगा-
　ज्जनयति सुखमन्तः कस्यचित्कोऽपि दृष्टः।
पतति झटिति दृष्टिर्दग्धदाशेरकाणां
　जरठभुरुठवल्लीपिञ्जरासु स्थलीषु ॥ ६ ॥

कयोरप्येतौ।

१ [illegible]

कुमुदशबलैः फुल्लाम्भोजैः सरोभिरलङ्कृतां
　मरकतमणिश्यामाशङ्कां[1] विहाय वनस्थलीम् ।
स्मरति करभो यद्रूक्षाणां चरन् मरुवर्त्मनां
　परिचयरतिः सा दुर्वारा न सा गुणवैरिता ॥ ७ ॥

जितनागस्य ।

करभदयिते[2] यत्तत्पीतं सुदुर्लभमेकदा
　मधु वनगतं तस्यालाभे विरौषि किमुत्सुका ।
कुरु परिचितैः पीलोः पत्रैर्धृतिं मरुगोचरै-
　र्जगति सकले कस्यावाप्तिस्सुखस्य निरन्तरा ॥ ८ ॥

करभ रभसात् क्रोष्टुं वाञ्छस्यहो श्रवणज्वरं
　शरणमथवाऽनृज्वी दीर्घा तवैव शिरोधरा ।
बहुगलबिलावृत्तिश्रान्तोच्चलिष्यति वाङ्मुखा-
　[3]त्कियति समये को जानीते भविष्यति कस्य किम् ॥ ९ ॥

मल्लटस्यैतौ ।

यस्यास्संभृतमालवालवलयं भूपालशृङ्गारिणी-
　भृङ्गारोदरविप्रलम्भविधुरैर्नीरैस्सुधाबन्धुभिः ।
तामेतां मृदुलप्रवाललुलितां द्राक्षालतामारट-
　न्नुद्ग्रीवः प्रकटीकृतार्धदशनो दाशेरकः कृन्तति ॥ १० ॥

उमापतिधरस्य ।

इति करभपद्धतिः ।

---

१. तङ्कां. ख. २. प्रदिते. ख. च. ३. दि. च.

# धवलपद्धतिः ( २५ )



गुणानामेव दौर्जन्याद्धुरीणो यो नियुज्यते।
असञ्जातकिणस्कन्धः सुखं स्वपिति गौर्गलिः॥ १॥

व्यासमुनेः।

अध्वा न यदि निस्सङ्गपङ्कसङ्कुलितो भवेत्।
ततः कुतस्ते धौरेय धुर्यता व्यज्यतामियम्॥ २॥

वसुपालस्य।

नास्य भारग्रहे शक्तिर्न च वाहगुणः क्वचित्।
देवागारबलीवर्दस्तथाऽप्यश्नाति शोभनम्॥ ३॥

दन्तास्सप्त चलं विषाणयुगलं पुच्छाञ्चलः कर्बुरः
कुक्षिश्चन्द्रकितो वपुः कुसुमितं सत्त्वच्युतं चेष्टितम्।
अस्मिन् दुष्टवृषे वृषाग्रिमगुणग्रामानभिज्ञात्मनो
ग्रामीणस्य तथाऽपि चेतसि चिरं धुर्यभ्रमः स्फूर्जति॥ ४॥

गुरुर्नायं भारः क्वचिदपि न पन्थाः स्थफुटितो
न ते भग्ना शक्तिर्वहनमपि नाङ्गेन विकलम्।
इह द्रङ्गे नान्यस्तव गुणसमानस्तदधुना
धुनानेन स्कन्धं धवल किमु मुक्तः पथि भरः॥ ५॥

यथा भग्नः पन्थाः परुषविषमग्रावगहनो
गलीनां गात्राणि स्पृशति च यथा सारथिरयम्।
यथा चैते दृप्ताः खुरलितभुवो यान्ति वृषभा-
स्तथा दूरीभूतस्स खलु धवलो नूनमधुना॥ ६॥

यस्यासीद्व्रजमण्डनस्य वहतो दुर्गेऽपि गुर्वीं धुरां
धौरेयैः प्रगुणीकृतो न युगपत्स(त्स्क)न्धस्समस्तैरपि(?)।
तस्यैव श्लथकंबलस्य धवलस्योत्थापने सांप्रतं
द्रङ्गेऽत्रैव जरावसादिततनोर्गोपण्यमुद्घुष्यते॥ ७॥

१. फाले. ख. च. २. दाह. ख. ग. च. ३. क्षितौ. ख. च. ४. तेऽङ्गे शार्ङ्गधरपद्धतीयः पाठः ५. शृङ्गे. त्वङ्गे. क. द्रङ्गे इति शार्ङ्गधरपद्धतीयः पाठ। ६ गलन्नागान्त्राणि क. ख. च. ७ मुद्रे. क. ख. च.

पूतः [ श्रौतैसुसं ] स्क्रियाभिर [ नैघी ] भावाय यो दीक्षितै-
देवेन त्रिपुरारिणा च हरिणा यः स्वीकृतोऽस्त्राङ्कनैः ।
यत्क्षिप्तैः पदपांसुभिः पितृगणा गीर्वाणलक्ष्मीभुजो
धिक् दैवं स तुरुष्कसद्मानि पुरा कण्ठालवाही वृषः ॥ ८ ॥

केषामप्येते ।

इति धवलपद्धतिः ।

## हरिणपद्धतिः ( २६ )



कामं वनेषु हरिणास्तृणेन जीवन्त्ययत्नसुलभेन ।
धनिषु न दैन्यं विदधति ते किल पशवो वयं सुधियः ॥ १ ॥

तृणबाणस्तृणधन्वा तृणघटितः कपटपुरुषोऽयम् ।
तदपि च कुरङ्गशावक केदारे कलममञ्जरीं त्यजसि ॥ २ ॥

कयोरप्येतौ ।

स्वच्छन्दं हरिणेन या विहरता दैवात्समासादिता
भग्नप्रस्नुतदुग्धबिन्दुमधुरा शालेर्नवा मञ्जरी ।
निःश्वासानलदग्धकोमलतृणप्रख्यापितान्तर्व्यथ-
स्तामेनां प्रतिवासरं मुनिरिव ध्यायन् वने शुष्यति ॥ ३ ॥

धर्मकीर्तेः ।

कति कति न पुनश्चरन्ति हन्त प्रतिशिखरं प्रतिकाननं कुरङ्गाः ।
तदपि जनमनोविनोदहेतुर्विलसति केष्वपि कोऽपि नाभिगन्धः ॥ ४ ॥

रोमन्थमारचय मन्थरमेत्य निद्रां
मुञ्च श्रमं तदनु सञ्चर रे यथेच्छम् ।
दूरे स पामरजनो मुनयः किलामी
निष्कारणं हरिणपोत बिभेषि कस्मात् ॥ ५ ॥

कयोरप्येतौ ।

---

१ श्रोत्रपुर. क. ख. च. २ तही. क. ख. च.

सेयं स्थली नवतृणाङ्कुरजालमेत-
त्सेयं मृगीति हृदि जातमदः कुरङ्गः ।
नेदं तु वेत्ति यदिहान्तरितो लताभि-
रायाति सज्जितकठोरशरः किरातः ॥ ६ ॥

इन्द्रकवेः ।

पातैक्षुण्णखुरस्य बाणपतनप्रव्यक्तरक्तच्छटा-
च्छन्नाङ्गस्य दवाग्निदाहविकलस्यासेदुषोऽप्याश्रमम् ।
धिग्दैवं विषमाँ मृगस्य दिवसाः सर्वानुकम्पामयो
मा भैषीरिति भाषणेऽपि यदभूद्वाचंयमोऽयं मुनिः ॥ ७ ॥

व्योमार्धे ज्वलितो रविः कवलितं दावानलैः काननं
धूम्याभिर्न दिशः स्फुरन्ति परितः पन्थाः शिलादन्तुरः ।
इत्थं लोहितसिक्तसृक्कणि यथाप्राणं मृगे धावति
व्याधेनापि शरासने करुणया नारोपिताः पत्रिणः ॥ ८ ॥

निरालम्बं व्योमाप्ययमशरणो हन्त हरिणः
क्व यातु क्वायातु क्व च विहरतु क्व प्रविशतु ।
दिशो जाज्वल्यन्ते [ सुँ ] गुणिगण [ शूँन्या च वसुधा ]
मिषाकांक्षी कालः प्रहरति पुनः पामरपतिः ॥ ९ ॥

केषामप्येते ।

॥ इति हरिणपद्धतिः ॥

---

१ द. क. च; श. ग. २ मं. क. ख. च. ३ स. क. ख. च. ४ गुप्ताचलवसु. क. ख. च.

# समुद्रपद्धतिः ( २७ )



जीवानामपि जीवनस्य महतस्त्वं चाश्रयः सर्वदा
मर्यादां न जहासि सन्ति भवतो गर्भे मणीनां गणाः ।
एवं ते महिमा महान् जलनिधे मध्ये किमर्थं कृतः
पापीयांस्तव जीवनक्षयकरस्त्वौर्वः स्वकुक्षिंभरिः ॥ १ ॥

चतुर्मुखमहादेवस्य ।

नावज्ञा नाप्यवैदग्ध्यमुदधेर्महिमैव सः ।
यत्तीरपङ्कमग्नानि महारत्नानि शेरते ॥ २ ॥

कस्यापि ।

न पालयति मर्यादां वेलाख्यामम्बुधिस्तथा ।
तृष्यतां नोपकर्तव्यमितीमामपरां यथा ॥ ३ ॥

भागवतामृतदत्तस्य ।

यद्यपि बद्धः शैलैर्यद्यपि गिरिमथनमुषितसर्वस्वः ।
तदपि पविभीतभूधररक्षायां दीक्षितो जलधिः ॥ ४ ॥

आदाय वारि परितस्सरितां मुखेभ्यः किं तावदर्जितमनेन दुरर्णवेन ।
क्षारीकृतं च बडबावदने हुतं च पातालकुक्षिकुहरे विनिवेशितं च ॥ ५ ॥

रीसुकस्य ।

स्वस्त्यस्तु विद्रुमवनाय नमो मणिभ्यः
कल्याणिनी भवतु मौक्तिकशुक्तिमाला ।
प्राप्तं मया सकलमप्यमुतः पयोधे-
र्यद्दारुणैर्जलचरैर्न विदारितोऽस्मि ॥ ६ ॥

इन्द्रकवेः ।

लज्जामहे भृशमहो वयमप्यनेन
सांयात्रिकास्सलिलराशिममी विशन्ति ।
स्कन्धाधिरोपिततदीयतटोपकण्ठ-
कौपेयकाम्बुहृतयो यदुदीर्णतृष्णाः ॥ ७ ॥

१. रोध. क. ख. च.

पाथोनाथ जगत्यहङ्कृतिभृतो लोकत्रयीघस्मराः
सन्त्यन्येऽप्यपकारिणः किमु भवानेकोऽत्र तेषां धुरि ।
आकांक्षन् जगतः क्षयाय समयं दोषाकरैकप्रियो
यस्तं हन्त सदा वहस्यगणितस्वाङ्गव्ययो वाडवम् ॥ ८ ॥

श्रीभोजदेवस्य ।

यच्चन्द्रार्धविभूषणः पशुपतिर्यच्च श्रियाऽलङ्कृतो
विष्णुर्यच्च दिवौकसां पतिरभूदैरावताधिष्ठितः ।
प्राप्तं प्रीतिविकासितेक्षणयुगैर्यच्चामरत्वं सुरै-
स्तत्सर्वं हि परोपकारवसतेः सिन्धोः प्रभावाद्भुतम् ॥ ९ ॥

इन्द्रकवेः ।

लक्ष्मीकौस्तुभपारिजातमदिरानागाश्वखड्गामृत-
त्यागिन् को भुवनेश्वरोऽत्र भवता नार्थी कृतार्थीकृतः ।
किन्तु क्षीरनिधे यदिन्दुकुसुमेनाभ्यर्च्य देवं शिवं
पार्श्वस्थं प्रतिपादितोऽसि गरलं तेनैव दूयामहे ॥ १० ॥

अये वारांराशे कुलिशकरकोपप्रतिभया-
दसौ पक्षे प्रेम्णा गिरिवरसुतस्त्वामुपगतः ।
त्वदन्तर्वास्तव्यो यदि पुनरयं वाडवशिखी
शिखाभिः प्रत्यङ्गं ग्लपयति तदा कोऽस्य शरणम् ॥ ११ ॥

हे हेलाजितबोधिसत्त्व वचसा किं विस्तरैस्तोयधे
नास्ति त्वत्सदृशः परः परहिताधाने गृहीतव्रतः ।
तृष्यत्पान्थजनोपकारघटनावैमुख्यलब्धायशो-
भारप्रोद्वहने करोषि कृपया साहायकं यन्मरोः ॥ १२ ॥

किं व्याप्ताखिलदिक्तटेन विसरद्गर्जल्लुठद्विस्फुर-
त्संक्षुभ्यन्नमदुन्नमत्परिवहद्वीचीविलासेन ते[२] ।
ग्रीष्मोष्मग्लपिताध्वगस्य भवतो जातं न तृट्[३]शान्तये
धिक्ते धर्मविचारि वारि जलधे क्षारं महत्केवलम् ॥ १३ ॥

१. तरां क. ख. च २. किम्. ख. च. ३ ष्णात्यये. ख. च. ४ विदूर. इति. क. पाठान्तरम्

यद्वीचीभिः स्पृशसि गगनं यच्च पातालमूलं
रत्नैरुद्दीपयसि पयसा यत्पिधत्से धरित्रीम् ।
धिक् सर्वं तत्तव जलनिधे यद्विमुच्याश्रुधारां
तीरे नीरग्रहणरसिकैरध्वगैरुज्झितोऽसि ॥ १४ ॥

द्यामारोहति वाञ्छति स्थगयितुं तेजोऽपि तेजस्विना–
मुच्चैर्गर्जति पूरयन्नपि महीमम्भोभिरम्भोधरः ।
कांश्चिद्वागुपजीव्य तोयचुलकान् सिन्धो भवत्सन्निधेः
पानीयप्रचयेषु सत्स्वपि न ते तेजोविकारः[1] क्वचित् ॥ १५ ॥

कासारेऽपि पयः पिबन्ति पथिका न क्वापि वारि त्वयि
क्षारत्वादुदधेस्समुद्र इति ते नामैतदेवोचितम् ॥
न त्वेतानि निरर्थकानि भवतो नामान्यनर्थान्तरा–
ण्यम्बोधिर्जलधिः पयोधिरुदधिर्वारांनिधिर्वारिधिः ॥ १६ ॥

केषामप्येते ।

विस्तारो यदि नेदृशो यदि न तद्गांभीर्यमम्भोनिधे–
र्न स्याद्वा यदि सर्वसत्त्वविषयस्तादृग्दयानुग्रहः ।
अन्तः प्रज्वलता पयांसि दहता ज्वालावलीं मुञ्चता
[ के[2] न स्यु ]र्वडवानलेन बलिना भस्मावशेषीकृताः ॥ १७ ॥

केटसस्य ।

अयं वारामेको निलय इति रत्नाकर इति
श्रितोऽस्माभिस्तृष्णातरलितमनोभिर्जलनिधिः ।
क एवं जानीते निजकरपुटीकोटरगतं
क्षणादेनं ताम्यत्तिमिनिवहमापास्यति मुनिः ॥ १८ ॥

वररुचेः ।

॥ इति समुद्रपद्धतिः ॥

---

१. जातो. शार्ङ्गधरपद्धतिः पाठः २. ते मन्यु. ख, ते मन्यु. क, के मन्यु. च.

# रत्नपद्धतिः ( २८ )

काचाः काञ्चनभूषिताः कति न वा मुष्णन्ति रत्नश्रियं
मौलौ वा कति नोद्वहन्त्यपधियस्तानेव रत्नभ्रमात् ।
अक्ष्णां ये पुनरुन्मृजन्ति तिमिरं यैर्नाम रत्नाकरः
सिन्धुस्ते पृथगेव हन्त मणयस्तेष्वप्यभिज्ञाः पृथक् ॥ १ ॥

लाक्षाभिः कुरु कङ्कणं रचय वा काचेन चूडामणिं
शिल्पिन्कैतवकोविदोऽसि विपणी ग्राम्येयमज्ञः प्रभुः ।
नन्वेतत्तव साहसिक्यमधिकं निष्कम्प यत्तत्त्वतो
दाहारोपणशाणघर्षणविदामग्रेऽपि गर्वायसे ॥ २ ॥

एतौ विमलसरस्वत्याः ।

विशुद्धिः कीदृशी तस्य जडस्य स्फटिकाश्मनः ।
भिद्यतेऽनु प्रविश्यान्तर्यो यथारुच्युपाधिना ॥ ३ ॥

भल्लटस्य ।

सोमकान्तो मणिः स्वच्छस्सूर्यकान्तस्तथा न किम् ।
उद्गारे तु वि[[1]शेषोऽस्ति ]तयोरमृतवह्निभिः ॥ ४ ॥

समजनि तदेकमेव हि रत्नं रत्नाकरेऽपि जलराशौ ।
स्थितमुरसि यन्मुरारेर्न भ्रमति कुनृपतिभवनेषु ॥ ५ ॥

अमृतांशोः किरणेभ्योऽजायत वृद्धिर्महोदधेरुदरे ।
कथयन्ति हारमणयो हृदि तापमुषः स्पृशन्तोऽपि ॥ ६ ॥

वल्लभदेवस्यैतौ ।

वपुःपरीणाहगुणेन[2] तेभ्यो यशस्विनः किं मणयो भवन्ति ।
तथापि चूडासु महीपतीनां त एव खेलन्ति न गण्डशैलाः ॥ ७ ॥

कस्यापि ।

किं मूढ ताडयसि तापयसे किमन्ध किं वा हताश परिपीडयसीन्दुरत्नम् ।
एतस्य केवलमनल्परसप्रसूतिभ्रातस्सुधामयकरप्रणयैकसाध्या ॥ ८ ॥

इन्द्रकवे. ।

१ शीर्णास्ते. क. ख. च. २ णोन्नते क. ख. च. गुणेन इति शार्ङ्गधरपद्धतीयः पाठः

अङ्गीकृताः [ क्ष[1] ] तिमिमामपि ये विषह्य
गोप्तुं गुणान् किमिति वाञ्छसि तान्मुधैव ।
मुक्तामणे [वि[2]]मलरूपतया नितान्त-
मेते तव स्वयमपि प्रकटीभवन्ति ॥ ९ ॥

कस्यापि ।

अमीषां मोहाद्वा धरणिधरचूडाञ्चलभुवा-
[ म[3] ]भाग्याद्वा कैश्चिन्मरकतमणिश्चेन्न गणितः ।
तथाऽसौ रथ्यायामपि निपतितः किं न कुरुते
समुन्मीलन्नीलद्युतिलहरिलिप्ता इव दिशः ॥ १० ॥

जयदेवस्य ।

केनासीनस्सुखमकरुणेनाकरादुद्धृतस्त्वं
विक्रेतुं वा समभिलषितः केन देशान्तरेऽस्मिन् ।
यस्मिन् वित्तव्ययभरसहो ग्राहकस्तावदास्तां
नास्ति भ्रातर्मरकतमणे त्वत्परीक्षाक्षमोऽपि ॥ ११ ॥

सर्ववर्मणः ।

यार्म[4]स्ते शुभमस्तु रोहणगिरे मत्तः स्थितिप्रच्युता
वर्तिष्यन्त इमे कथंकथम[5]पि स्वप्नेऽपि मैवं कृथाः ।
भ्रा[6]तस्ते मणयो वयं यदि भवन्नाम(म्ना)प्रसिद्धास्ततः
के शृङ्गारपरायणा नृपतयो मौलौ न धास्यन्ति नः ॥ १२ ॥

सिंहपेयस्य ।

यत्रानुल्लिखिताख्यमेव निखिलं निर्माणमेताद्विधे-
रुत्कर्षप्रतियोगिकल्पनमपि न्यक्कारकोटिः परा ।
याताः प्राणभृतां मनोरथगतीरुल्लङ्घ्य यत्सम्पद-
च्छायामात्रमणीकृताश्मसु मणेस्तस्याश्मतैवोचिता ॥ १३ ॥

१ क्षि. क. ख. च २ विं. क ख. च. ३ महो भा. क. ख. च. ४. मः स्वस्ति तवास्तु ५. मिति ६. श्रीमंस्ते ७. वलब्धप्रतिष्ठा ८. गोविन्दराजस्य, सुभाषितावलीयाः पाठाः ।

यस्य वज्रमणेर्भेदे भिद्यन्ते लोहसूचयः ।
करोति तत्र किं नाम नारीनखविलेखनम् ॥ १४ ॥

कयोरप्येतौ ।

स्वच्छस्यास्य प्रथितमहसः शुद्धजातेरतुल्यं
वज्रस्यैव स्फुरतु भुवने दार्ढ्यमेकस्य तस्य ।
यस्य छिद्रप्रणयनविधौ सप्रयत्नोऽपि नित्यं
सर्वः कुण्ठीभवति विकटस्पष्टटङ्कोऽपि लोकः ॥ १५ ॥

श्रीभोजदेवस्य

इति रत्नपद्धतिः ।

---

## शङ्खपद्धतिः ( २९ )

अन्तः कुटिलतां बिभ्रच्छङ्खस्स खलु निष्ठुरः ।
हुंकरोति यदा ध्मातस्तदैव बहु गण्यताम् (ते) ॥ १ ॥

कस्यापि ।

किं चुम्बितेन जड शाङ्खिक नीरसोऽयं ।
किं पाणियुग्मपरिपीडनलालनाभिः ।
प्राणैरपि प्रतिदिनं परिपूर्यमाणो
हुङ्कारमेव हि परं विदधाति शङ्खः ॥ २ ॥

सर्वाशापरिपूरि हुंकृ [ तमहो ] जन्मापि दुग्धोदधे-
र्गोविंदाननचुम्बि सुन्दरतरं पूर्णेन्दुबिम्बाद्वपुः ।
श्रीरेषा सहजा गुणाः कति परं गण्यन्त एते हि यत्
कौटिल्यं हृदि पाञ्चजन्य भवतस्तेनातिलज्जामहे ॥ ३ ॥

भट्टेन्दुराजस्यैतौ ।

१. तिमनो, क, ख, च, तिमदो, ग, घ.

तातः क्षीरनिधिः स्वसा जलधिजा भ्राता सुरेशद्रुमः
सौजन्यं सह कौस्तुभेन शुचिता यस्य द्विजेशादपि ।
धिक्कर्माणि स एव कम्बुरधुना पाषण्डकान्ताकरे
विश्रान्तः प्रतिवासरं प्रतिगृहं भैक्षेण कुक्षिंभरिः ॥ ४ ॥

जन्मस्थानं मणिगणनिधिर्वारिधिर्बन्धुरिन्दु-
र्जामिः पद्मा वपुषि शुचिता विश्ववन्द्यो निनादः ।
भ्रातः कंबो निरवधिकुटुंबोऽपि जात्यन्धसङ्गात्
गेहं गेहं भ्रमसि यदहो नापराधस्तवायम् ॥ ५ ॥

कयोरप्येतौ ।

प्रबलतरतरङ्गैर्दूरमुत्सारितोऽपि
प्रथयति तव कीर्तिं दक्षिणावर्तशङ्खः ।
परिकलय पयोधे पद्मनाभार्च्ययोग्य-
स्तव निकटनिषण्णैः क्षुल्लकैः श्लाघ्यता का ॥ ६ ॥

पद्मनाभस्य ।

शङ्खास्सन्ति सहस्रशो जलनिधेर्वीचिच्छटाघट्टिताः
पर्यन्तेषु लुठन्ति ये दलशतैः कल्माषितक्ष्मातलाः ।
एकस्तेषु स पाञ्चजन्य उदभूदाश्चर्यभूतः सतां
यस्संवर्तभरक्षमैर्मधुरिपोः श्वासानिलैः पूर्यते ॥ ७ ॥

कविरत्नस्य ।

इति शङ्खपद्धतिः

# नदीपद्धतिः ( ३० )



कुरु गम्भीराशयतां दिनानि कतिचिद्भवाघृष्या।
विगतपयोधरलक्ष्मीः कस्य न चरणैर्विलङ्घ्याऽसि॥ १ ॥

कतिपयदिवसस्थायी पूरो दूरोन्नतोऽपि चण्डरवः।
तटिनि तटद्रुमपातनपातकमेकं चिरस्थायि॥ २ ॥

पायंपायं पिब पिब पयस्सिञ्च सिञ्चाङ्गमङ्गं
भूयो भूयः कुरु कुरु सखे मज्जनोन्मज्जनानि।
एषाऽशेषश्रमशमपटुर्दुःखिताध्वन्यबन्धुः
सिन्धुर्दूरीभवति भवतो मारवः पान्थ पन्थाः॥ ३ ॥

प्रशान्ताः कल्लोलाः स्तिमितमसृणं वारि विमलं
विनीतोऽयं वेषः शममिव नदीनां कथयति।
तथाप्यासां तैस्तैस्तरुभिरभितस्तीरपतितै-
स्स एवाग्रे बुद्धौ परिपतति रुद्धोऽप्यविनयः॥ ४ ॥

आजन्मस्थितयो महीरुह इमे कामं समुन्मूलिताः
कल्लोलाः क्षणभङ्गुराः पुनरमी नीताः परामुन्नतिम्।
अन्तर्ग्राहपरिग्रहो बहिरपि भ्राम्यन्ति गन्धद्विपाः
भ्रातः शोण न सोऽस्ति यो न हसति त्वत्सम्पदो विप्लवान्॥ ५ ॥

केषामप्येते।

नदीतीरे शाखिन्नभिनवतरङ्गाग्रसलिलै-
र्मुहुर्मूले सिक्तः कलयसि दलाडम्बरमिदम्।
न चैवं जानीषे सरल यदलं लूनधरणिः
सुखस्पर्शच्छन्नो गुरुपतनहेतुर्व्यतिकरः॥ ६ ॥

सिंहपैथ्यस्य।

इति नदीपद्धतिः।

---

१ वीत. ग. २ परिणमति. ख. च ३. किमा. ग. ४ यदयं. ग. ५ पर्थस्य. क.

# सरःपद्धतिः ( ३१ )



अयमवसरः सरस्ते सलिलैरुपकर्तुमर्थिनामानिशम् ।
इदमपि च सुलभमम्भो भवति पुरा जलधराभ्युदये ॥ १ ॥

वल्लभदेवस्य ।

कस्य तृषं न क्षपयसि पिबति न कस्तव पयो निमज्यैतत् ।
यदि सन्मार्गसरोवर नक्रो न क्रोडमधिवसति ॥ २ ॥

कस्यापि ।

आगच्छतां च तुच्छानामतुच्छानां च गच्छताम् ।
यदध्वनि न सङ्घट्टो घटानां तद्वृथा सरः ॥ ३ ॥

हरिहरस्य ।

वीचीविमर्दशीतैर्यत्सुखयत्यनिलैरपि ।
सरसस्तस्य माधुर्यं ज्ञातमेवावगाहने ॥ ४ ॥

यद्वल्गस्यभितो वृथा तटभुवो वीचीशतैस्ताडयन्
लब्ध्वा काश्चिदपि क्षणं जलधरोद्वान्ताः पयोविप्रुषः ।
तन्मन्ये भवतस्तडाग निबिडक्रीडार्करोचिश्चय-
प्लुष्टाम्बुप्रसरो मनागपि न स ग्रीष्मः स्मृतिं रोहति ॥ ५ ॥

श्रीभोजदेवस्य ।

सौवर्णः कमलाकरश्शशिशिलास्सोपानबद्धक्रमाः
वारि क्षीरसहोदरं तटतरुश्रेणीसुखाः क्षोणयः ।
सर्वं ते रुचिरं सरोवर परं निन्द्यः कुतोऽयं विधिः
क्रूरग्राहभयात्प्रयान्ति विमुखाः पान्था निदाघेऽप्यमी ॥ ६ ॥

वैद्यनाथपण्डितस्य ।

विपन्नं पद्मिन्या मृतमनिमिषैर्यातमलिभिः
खगैरप्युड्डीनं रथचरणहंसप्रभृतिभिः ।
दशां दीनां नीते सरसि विषमग्रीष्मदिवसैः
कुलीनत्वादास्ते तटरुहतरुः कोऽपि तदपि ॥ ७ ॥

नागपैय्यस्य ।

रे पद्माकर यावदस्ति भवतो मध्ये पयः पूरितं
तावच्चक्रचकोरहंसकुररश्रेणीस्समुल्लासय ।
पश्चात्त्वं समटङ्ककोटचटुलत्रोटीपुटव्याहति-
त्रुट्यत्कर्कटकर्परव्यतिकरैर्निन्दास्पदं यास्यसि ॥ ८ ॥

बलीयांसो हंसान् प्रसभमपहृत्य प्रभुतया
बभूवुर्यत्काकाः कमलवनवासव्यसनिनः ।
तटस्थः पाठीनः परिलुठति कङ्कान् कवलयन्
न जाने किं भाव्यं सरसि विपरीतव्यतिकरे ॥ ९ ॥

कयोरप्येतौ ।

स्तोकाम्भःपरिवर्तिताङ्गशफरग्रासार्थिनः सर्वतो
लप्स्यन्ते बकटिट्टिभप्रभृतयः स्वल्पेऽपि साधुस्थितिम् ।
सद्यश्शोषमुपागतेऽद्य सरसि श्रीसद्मपद्माकरे
तस्मिन् पङ्कजिनीविलासरुचयो हंसाः क यास्यन्त्यमी ॥ १० ॥

इन्द्रकवेः ।

माद्यद्दिग्गजदानदिग्धकरटप्रक्षालनात्क्षोभिता
व्योम्नस्सीम्नि विचेरुरप्रतिहता यस्योर्मयो निर्मलाः ।
कष्टं भाग्यविपर्ययेण सरसः कल्पान्तरस्थायिन-
स्तस्याप्येकबकप्रचारकलुषं कालेन जातं जलम् ॥ ११ ॥

विज्जाकायाः ।

उपाध्वं तत्पान्थाः कथमपि सरोमार्गतिलकं
यदासाद्य स्वच्छं विलसथ विलीनक्लमभराः ।
इतस्तु क्षाराब्धेर्जरठमकरक्षुण्णपयसो
निवृत्तिः कल्याणी न पुनरवतारः कथमपि ॥ १२ ॥

यायाकस्य ।

इति सरःपद्धतिः ॥

# कमलपद्धतिः ( ३२ )

अन्तश्छिद्राणि भूयांसि कण्टका बहवो बहिः।
कथं कमलनालस्य माभूवन् भङ्गुरा गुणाः ॥ १ ॥

भल्लटस्य।

लक्ष्मीसंपर्करूपोऽयं दोषः पद्मस्य निश्चितम्।
यदेष गुणसन्दोहधामनीन्दौ पराङ्मुखः ॥ २ ॥

प्रकाशवर्षस्य।

प्रसारितकरे मित्रे जगदुद्योतकारिणि।
किन्न कैरव लज्जा ते कुर्वतः कोशसंवृतिम् ॥ ३ ॥

एते हि गुणाः पङ्कज सन्तोऽपि न ते प्रकाशमायान्ति।
यल्लक्ष्मीवसतेस्तव मधुपैरुपजीव्यते कोशः ॥ ४ ॥

किं कुप्यसि कस्मैचित्सौरभसाराय कुप्य निजमधुने।
यस्य कृते शतपत्र प्रतिपत्रं मृग्यते मधुपैः ॥ ५ ॥

दह्येत नाम्बुगतामिति पद्मिन्या संश्रितं सरस्तत्र।
दहतीमां हिममथवा क नु याति विधेरवस्कन्दः ॥ ६ ॥

किं वर्ण्यतेऽम्बुजस्य श्रियो निवासो यदन्वहं देव्याः।
यत्सेव्यतेऽर्थिभिर्भृङ्गैर्विकसति मित्रोदये यच्च ॥ ७ ॥

युक्तं मित्राभ्युदये प्रीतिं द्वेषं समुद्वहन्त्वनिशम्।
कमलानि कैरवाणि च भवन्ति सश्रीण्यपश्रीणि ॥ ८ ॥

मकरन्दरसस्यन्दिनि पद्मिनि मन्ये तवैव सुभगत्वम्।
पुष्पवतीमपि भवतीं त्यजति न वृद्धः शुचिर्हंसः ॥ ९ ॥

कामं भवन्तु मधुलम्पटषट्पदौघ-
संघट्टघुंघुमघनध्वनयोऽब्ज [ संङ्गाः ]।
गायत्यतिश्रुतिसुखं विधिरेव यत्र
भृङ्गस्स कोऽपि धरणीधरनाभिपद्मः ॥ १० ॥

श्रुतधरस्य।

१. वि. क. ख. च. २. गन्धाः क. ख. च.

यन्माता विष्णुनाभिः पतिरपि च सुतो यस्य साक्षात्प्रजानां
लक्ष्मीर्यत्संश्रयाऽभूद्यदपि करतले भारती संबभार।
भानुर्यस्यापि मित्रं तदपि सरसिजं क्षीणमिन्दोर्मयूखै-
स्त्रातुं नैवोत्सहन्ते गतसुकृतफलं प्राप्तकाले सहायाः॥ ११॥

कस्यापि।

न पङ्कादुद्भूतिर्न जडसहवासव्यसनिता
वपुर्दिग्धं कान्त्या स्थलनलिन रत्नद्युतिमुषा।
व्यधास्यद्दुर्वेधा हृदयलघिमानं यदि न ते
त्वमेवैकं लक्ष्म्याः परममभविष्यः पदमिह॥ १२॥

जयवर्धनस्य।

मित्रोन्मुखस्य विमलस्य गुणान्वितस्य
लक्ष्मीपदस्य पुरुषोत्तमवल्लभस्य।
केनाशयेन जडयोगमयोग्यमस्य
धाता करोति कमलस्य वयं न विद्मः॥ १३॥

इति कमलपद्धतिः।



# वृक्षपद्धतिः ( ३३ )



[ तत्र वृक्षमात्रवर्णनम् ]

शाखाशतचितवियतस्सन्ति कियन्तो न कानने तरवः।
परिमलभरमिलदलिकुलदलितदलाः शाखिनो विरलाः॥ १ ॥

वैद्यभानुपण्डितस्य।

दीर्घो निदाघसमयो बहुपथिकजनश्च मारवः पन्थाः।
मार्गस्थस्तरुरेकः कियतां संतापमपहरतु॥ २ ॥

पान्थाधार इति द्विजाश्रय इति स्थानं गुणानामिति
स्निग्धच्छाय इति प्रियो दृश इति श्लाघ्यस्तरूणामिति।
पर्यालोच्य महातरो तव घनच्छायां वयं संश्रिताः
तत्त्वत्कोटरवासिनो द्विरसना दूरीकरिष्यन्ति नः॥ ३ ॥

कयोरप्येतौ।

किं जातोऽसि चतुष्पथे घनतरं छन्नोऽसि किं छायया
छन्नश्चेत्फलितोऽसि किं फलभरैराढ्योऽसि किं सन्नतः।
हे सद्वृक्ष सहस्व संप्रति सखे शाखाशिखाकर्षण-
क्षोभामोटनभञ्जनानि जनतः स्वैरेव दुश्चेष्टितैः॥ ४ ॥

भदन्तज्ञानवर्मणः।

गतास्ते विस्तीर्णस्तबकभरसौरभ्यलहरी-
परीतव्योमानः प्रकृतिगुरवः केऽपि तरवः।
इहोद्याने संप्रत्यहह परिशिष्टाः क्रमवशा-
दमी वल्मीकाद्या भुजगकुललीलावसतयः॥ ५ ॥

कल्याणं नः किमधिकमितो जीवनार्थं यदस्मान्
लूत्वा वृक्षानहह दहसि भ्रातरङ्गारकार।
नन्वेतस्मिन्नशनिपिशुनैरातपैराकुलाना-
मध्वन्यानामशरणमरुप्रान्तरे कोऽभ्युपायः॥ ६ ॥

१ तरो. ग. तर. क. ख.

आमोदैर्मरुतो मृगाः किसल[योद्भेदै]स्त्वचा तापसाः
पुष्पैः षट्चरणाः फलैश्शकुनयो घर्मार्दिताश्छायया।
स्कन्धैर्गन्धगजाश्च विश्रमरुचः शश्वद्विभक्तास्त्वया
प्राप्तस्त्वं द्रुम बोधिसत्वपदवीं सत्यं कुजाताः परे ॥ ७ ॥

केषामप्येतौ।

सोढप्रौढहिमक्रमाणि शनकैः पत्राण्यधः कुर्वते
संभाव्यच्छदवाञ्छया हि तरवः केचित्कृतघ्नव्रताः।
नामन्यन्त तदातनीमपि निजच्छायाक्षतिं तैः पुन-
स्तेषामेव तले कृतघ्नचरितैः शुष्यद्भिरेवास्यते ॥ ८ ॥

बिल्हणस्य।

भुक्तानि यैस्तव फलानि पचेलिमानि
क्रोडस्थितैरहह वीतभयैः प्रसुप्तम्।
ते पक्षिणो जलरयेण विकृष्यमाणं
पश्यन्ति पादप भवन्तममी तटस्थाः ॥ ९ ॥

राजपितामह[3]महादेवस्य।

इति वृक्षमात्रवर्णनम्।

---

[वृक्षविशेषवर्णनम्]

कल्पवृक्षः

श्लाघ्या ध्वस्ताध्वगग्लानेः करीरस्य मरौ स्थितिः।
धिङ्मेरौ कल्पवृक्षाणामवसन्नार्थिनां श्रियः ॥ १० ॥

कस्यापि।

---

१. यैर्लम्बै. ग. यैर्लम्भैः क. ख. च. २. विश्रमरुचा. क. ख. च. ३. महस्य. ख.

स्वर्णैः स्कन्धपरिग्रहो मरकतैरुल्लासिताः पल्लवाः
मुक्ताभिः स्तबकश्रियो मधुलिहां वृन्दानि नीलोत्पलैः ।
संकल्पानुविधायि यस्य फलितं कस्तस्य धत्ते तुलां
धिग्जातिं द्रुमसंकथासु यदयं कल्पद्रुमोऽपि द्रुमः ॥ ११ ॥

रल्हणस्य ।

पारिजातः

परे परश्शतास्सन्ति महान्तो भव्यभूरुहाः ।
पारिजात त्वयैकेन नन्दनं नन्दनं पुनः ॥ १२ ॥

प्रह्लादनस्य ।

परिमळसुरभितनभसो बहवः कनकाद्रिपरिसरे तरवः ।
तदपि सुमनसां नन्दनमिति सत्यं पारिजातेन ॥ १३ ॥

वल्लभदेवस्य ।

चूतः

गाता कोकिल एव ज्ञाता च रसाल एव नियतमिदम् ।
यः पञ्चममुद्गायति यस्यास्थिषु पुलकमुकुलानि ॥ १४ ॥

वहसि बलिभुजां कुलानि मौलौ यदि सहकार तदत्र को निषेद्धा ।
परमुदयति पल्लवाञ्चलेषु स्फुरदलिभिस्तव सौरभप्रसिद्धिः ॥ १५ ॥

कयोरप्येतौ ।

उत्तंसकौतुकरसेन विलासिनीनां लूनानि यस्य न नखैरपि पल्लवानि ॥
उद्यानमण्डनतरो सहकार स त्वमङ्गारकारकरगोचरतां गतोऽसि ॥ १६ ॥ *

यो दृष्टः स्फुटदस्थिसंपुटमुखान्निर्यत्प्रवालाङ्कुरो
दैवात्स द्विदलादिकक्रमवशादारूढशाखाशतः ।
स्निग्धं पल्लवितो घनं मुकुलितः स्फारच्छटं पुष्पित-
स्सोत्कर्षं फलितो भृशं विनमितः कोऽप्येष चूतद्रुमः ॥ १७ ॥

हर्षस्य ।

---

* उत्पलराजस्येति शार्ङ्गधरपद्धतौ ।

मूर्तिर्नेत्ररसायनं यदि कुतः छायेयमच्छेतरा
चक्रे साऽपि ततः कुतः फलभरः पीयूषगंजागृहम्।
एवं सर्वगुणाद्भुतं यदि भवानाम्रद्रुमं निर्ममे
सर्वत्र प्रगुणीकृतः कथमसौ दुर्दैव दावानलः॥ १८॥

प्रह्लादनस्य।

अर्काः केचन केचिदक्षतरवः केचिद्दलक्ष्मारुहाः
निंबाः केचन केचिदत्र विपिने क्रूराः करीरद्रुमाः।
माकन्दो मकरन्दतुन्दिलमिलद्भृङ्गालिश्रृङ्गारितः
कोऽप्यत्रास्ति न मित्र यत्र तनुते कर्णामृतं कोकिलः॥ १९॥

उमापतिधरस्य।

एतस्मिन्वनमार्गभूपरिसरे सौन्दर्यमुद्राङ्कितः
प्रोद्यद्भिः फलपत्रपुष्पनिवहैश्चूतस्स एकः परम्।
यं वीक्ष्य स्मितवक्त्रमुद्गतमहासंतोषमुल्लासित-
स्फारोत्कण्ठमकुण्ठितक्रममभी धावन्ति पान्थव्रजाः॥ २०॥

भट्टनायकस्य।

विशालश्शाखाभिः किमपि कमनीयः किसलयैः
फलैरप्यानम्रः स्तवकमधुगन्धैस्सुरभितः।
त्वमेवैकः क्षोणीरुहकुलधुरीणोऽसि तदयं
रसाल प्रस्तावादिह हृदि निधेयः पिकयुवा॥ २१॥

कस्यापि।

चन्दनः

धिक् चेष्टितानि परशो परिशोचनीयबालप्रवालमलयाद्रिरुहद्रुहस्ते।
निर्भिद्यमानहृदयोऽपि महाप्रभावः स त्वन्मुखं पुनरभीस्सुरभीकरोति॥२२॥
वासश्शैलशिलान्तरेषु सहजस्सङ्गो भुजङ्गैस्सह
प्रेङ्खत्क्षारपयोधिवीचिभिरभूदुद्भूतिसेकक्रिया।
जानीमो न वयं प्रसीदतु भवान् श्रीखण्ड तत्कथ्यतां
कस्मात्ते परतापखण्डनमहापाण्डित्यमभ्यागतम्॥ २३॥

१. दुर्वैर. क. ख.

आमोदैस्ते दिशि दिशि गतैर्दूरमाकृष्यमाणा-
स्साक्षाल्लक्ष्मीं तव मलयज द्रष्टुमभ्यागताः स्मः।
किं पश्यामस्सुभग भवतः क्रीडति क्रोड एव
व्यालस्तुभ्यं भवतु कुशलं मुञ्च नः साधयामः॥ २४॥

भ्रातश्चन्दनपादप प्रतिदिनं पश्येदमाचेष्टितं
यस्त्वां सिञ्चति शीतनीरनिकरैस्तस्यावकेशी सदा।
एवं[1] यस्तु परश्वधैः शकलयत्युग्रेष्वथ ग्रावसु
प्रौढं चानुपिनष्टि तस्य हि भवेः[2] सर्वाङ्गमाह्लादकः॥ २५॥

केषामप्येते।

भ्रातश्चन्दन किं ब्रवीमि विकटस्फूर्जत्फणाभीषणा
गन्धस्यापि महाविषाः फणभृतो गुप्त्यै यदेते कृताः।
दैवात्पुष्पफलान्वितो यदि भवानग्रेऽभविष्यत्तदा
नो जाने किमकल्पयिष्यदधिकं रक्षार्थमस्यात्मनः॥ २६॥

श्रीभोजदेवस्य।

सा छाया [ स च[3] ] सुन्दरः परिमलस्ते कोमलाः पल्लवा
भ्रातश्चन्दनपादपस्य शतशः सन्त्येव किन्तैर्गुणैः।
सर्पद्दुष्टभुजङ्गसङ्गतिवशादापादमूलं गतै-
रानीतं फलमन्यतोऽपि पथिकैः साशङ्कमास्वाद्यते॥ २७॥

कस्यापि।

चंपकः

कुन्दे कुण्ठय कौतुकं त्यज रुचिं न्यग्रोधरोपग्रहे
मा यत्नं करवीररोहणविधौ कार्षीस्सपर्योचिते।
भ्रातः काननपाल चंपकतरुः कुत्राप्यसौ मृग्यतां
यस्यामोदवशात् स्मरप्रियतमा माद्यन्ति चैत्रश्रियः॥ २८॥

वैद्यनाथपण्डितस्य।

केनापि चंपकतरो बत रोपितोऽसि कुग्रामपामरजनान्तिकवाटिकायाम्।
यत्र प्ररूढनवशाकविवृद्धलोभाद्गोभग्नवाटघटनोचितपल्लवोऽसि॥ २९॥

बिज्जाकायाः।

---

१. एवं. ख. च. २ भवेत्. ख. च. ३. मदि. क. ख. च. ४. लोभगो. क. ग. च. लोभभो. ख.

साधा[1]रणतरुबुध्या न मया रचितस्तवालवालोऽपि ।
लज्जयसि मामिदानीं चंपक सौरभ्यनिर्भरैः कुसुमैः ॥ ३० ॥

अशोकः

अव[[2]केशि]नोऽस्य युक्तं जानामि तरोरशोक इति नाम ।
फलपाकविधुरितात्मा यतोऽन्यथाऽसौ सशोकः स्यात् ॥ ३१ ॥

कस्यापि ।

किन्ते नम्रतया किमुन्नततया किं वा घनच्छायया
किं वा पल्लवलीलया किमनया चाशोक पुष्पश्रिया।
यत्त्वन्मूलनिषण्णखिन्नपथिकस्तोमः स्तुवन्नन्वहं
न स्वादूनि मृदूनि खादति फलान्याकण्ठमुत्कण्ठितः ॥ ३२ ॥

श्रीभोजदेवस्य ।

पनसः

गरीयस्सौरभ्यं रसपरिचये ना[3]र्हति सुधा
मुधा मृद्वीकाऽपि प्रथिमनि निमग्नः फलभरः।
परार्थे कोशश्रीरिति पुलकितः कण्टकमिषा-
दहो ते चारित्रं पनस मनसः कस्य न मुदे ॥ ३३ ॥

नालिकेरः

प्रथमवयसि पीतं तोयमल्पं स्मरन्तः
शिरसि निहितभारा नालिकेरा नराणाम् ।
स[4]लिलममृतकल्पं दद्युराजीवितान्तं
न हि कृतमुपकारं साधवो विस्मरन्ति ॥ ३४ ॥

कदली

तालीतरोरनुपकारि फलं फलित्वा
लज्जावशादुचित एव विनाशयोगः ।
एतत्तु चित्रमुपकृत्य फलैः परेभ्यः
प्राणान्निजान् झडिति यत्कदली जहाति ॥ ३५ ॥

१ क. पुस्तके. अधिकः पाठः । २ शोकि. क. ख. च. ३. र्च्छति. क. ख. ४ उदक. ख. च. ददति फलमनल्पस्वादुमा. ग.

दाडिमः

आपुष्पप्रसवान्मनोहरतया विश्वास्य विश्वं जनं
हंहो दाडिम तावदेव सहसे वृद्धिं स्वकीयामिह ।
यावन्नैति परोपभोगसहतामेषा ततस्तां तथा
ज्ञात्वा ते[१] हृदयं द्विधा दलति यत्तेनैव वन्द्यो भवान् ॥ ३६ ॥

श्रीभोजदेवस्य ।

भूर्जः

कुर्वन्तु नाम जनतोपकृतिं प्रसून-
च्छायाफलैरविकलैस्सुलभैर्द्रुमौघाः ।
सोढास्तु कर्तनरुजः पररक्षणार्थ-
मेके[३] न भूर्जतरुणा करुणापरेण ॥ ३७ ॥

श्रीवैद्यभानुपण्डितस्य ।

अगुरुः

अगुरुरिति वदति लोको गौरवमत्रैव पुनरहं मन्ये ।
दर्शितगुणैव वृत्तिर्यस्य जने जनितदाहेऽपि ॥ ३८ ॥

वल्लभदेवस्य ।

मालती

कुसुमस्तबकानम्राः सन्त्येवं परितो लताः ।
अथापि भ्रमरभ्रान्तिं हरत्येकैव मालती ॥ ३९ ॥

कस्यापि ।

किं मालतीकुसुम ताम्यसि निष्ठुरेण
केनापि यत्किल विलूनमितो लताग्रात् ।
एतेन शुद्धमधुराकृतिगौरवेण
को नाम मूर्धनि निजे न करिष्यति त्वाम् ॥ ४० ॥

नम्मैयस्य ।

१. रे. क. ख च. २. भव. क. ख. च. ३. ते. क. ख. च.

केतकी

एतासु केतकि लतासु विकासिनीषु
सौभाग्यमद्भुततरं भवती बिभर्ति।
यत्कण्टकैर्व्यथितमात्मवपुर्न जानं-
स्त्वामेव सेवितुमुपक्रमते द्विरेफः॥ ४१॥

राजपितामहमहादेवस्य।

तालः

अध्वन्यध्वनि भूरुहः फलभृतो नम्रानुपेक्ष्यादरा-
द्दूरादुन्नतसंश्रयव्यसनिनः पान्थस्य मुग्धात्मनः।
यन्मूलं समुपागतस्य स वृथाच्छायः फले का कथा
शीर्णेनापि हि नोपयोगमगमत्पर्णेन तालद्रुमः॥ ४२॥

कस्यापि।

अश्वत्थः

वर्धितैस्सेवितैः किं तैस्सत्यश्वत्थेऽन्यपादपैः।
वर्धितो नरकाद्रक्षेत्स्पृष्टो रिष्टानि हन्ति यः॥ ४३॥

माधवमागधस्य।

न्यग्रोधः

फलभरविततसमुन्नतशाखाशतलीनशकुनिसार्थेन।
जननी क्षितिः प्रकामं न्यग्रोधेनास्तु सच्छाया॥ ४४॥

वल्लभदेवस्य।

मधूकः

तत्तेजस्तरणेर्निदाघसमये तद्वारि मेघागमे
तज्जाड्यं शिशिरे मदेकशरणैस्सोढं पुरा यैर्दलैः।
आयातोऽप्यधुना फलस्य समयः कोऽयं विना तैरिति
स्मृत्वा तानि शुचेव रोदिति गलत्पुष्पैर्मधूकद्रुमः॥ ४५॥

कस्यापि।

१ वसन्त क. ख. च.

शाल्मलिः

कायः कण्टकदूषितो न च घनच्छाया कुतः पल्लवाः
पुष्पाणि च्युतसौरभाणि न दलद्रोणी मनोहारिणी ।
किं ब्रूमः फलपाकमस्य यदुपन्यासेऽपि लज्जामहे
तद्रोः केन गुणेन शाल्मलितरो जातोऽसि सीमद्रुमः ॥ ४६ ॥

निर्गन्धं कुसुमं फलं क्षुधि वृथा पत्रं न कार्यक्षमं
बाह्यैः कण्टककर्परैः परिवृतं निस्सारमेतद्वपुः ।
वृद्धिर्गृध्रपरिग्रहाय किमहो वक्तव्यमस्मात्परं
भ्रातश्शाल्मलिवृक्ष नास्ति भवतः किंचिन्महत्त्वोचितम् ॥ ४७ ॥

कयोरप्येतौ ।

बब्बुलः

स्वयमफलवान् छेदं भेदं क्षितौ च विकर्षणं
कुहरपतनं बब्बूलोऽयं विषह्य वृतीभवन् ।
खल इव फलान्यन्यस्यापि प्रभूततराण्यहो
न दिशति सतां भोक्तुं युक्तान्वितः पटुकण्टकैः ॥ ४८

निम्बः ।

निम्ब किं बहुनोक्तेन फलानि विफलानि ते ।
यानि संजातपाकानि काका निश्शेषयन्त्यमी ॥ ४९ ॥

यश्च निम्बं परशुना यश्चैनं मधुसर्पिषा ।
यश्चैनं गन्धमाल्याभ्यां सर्वस्य कटुरेव सः ॥ ५० ॥

केषामप्येते ।

खदिरः

चन्दने विषधरान् सहामहे वस्तु सुन्दरमगुप्तिमत्कुतः ।
रक्षितुं वद किमात्मसौष्ठवं कण्टकाः खदिर संचितास्त्वया ॥ ५१ ॥

भल्लटस्य ।

१ जात. ग. २ स्थि. क. ख. च.

पदं तदिह नास्ति यन्न खदिरैः खरैरावृतं
न तेऽपि खदिरा न ये कुटिलकण्टकैरावृताः।
न ते कुटिलकण्टकाः किमपि ये न मर्मच्छिद-
स्तदुज्झत वृथा श्रमं बत सहध्वमध्वश्रमम् ॥ ५२ ॥

शालिः

शाखासन्ततिसन्निरुद्धनभसो भूयास एवावनौ
विद्यन्ते तरवः फलैरविकलैरार्तिच्छिदः प्राणिनाम्।
किन्तु द्वित्रदलैरलङ्कृततनोः शालेः स्तुमस्तुङ्गतां
दत्वा येन निजं शिरस्सुकृतिना को नाम न प्रीणितः ॥ ५३ ॥

नर्म्मैयस्य।

येन स्मो जनिता वयं प्रतिदिनं स्नेहेन संवर्धिता
येनास्मांस्तृणपीडनादपि पुरा सोढुं न शक्तस्तु यः।
ज्ञात्वा सोऽप्यधुना फलस्य समयं छेत्तुं शिरो वाञ्छति
क्रन्दन्तीव तुषारबाष्पविगलद्बिन्दूत्करैः शालयः ॥ ५४ ॥

कार्पासः

श्लाघ्यं कार्पासफलं यस्य गुणैः स्वीकृतानि विमलानि।
मुक्ताफलानि तरुणीकुचकलशे सुष्ठु विलसन्ति ॥ ५५ ॥

निष्पेषोऽपि च यस्य दुस्सहतरः कष्टं तुलारोहणं
ग्राम्यस्त्रीनखलुञ्छनव्यतिकरस्तन्त्रीप्रहारव्यथा।
मातङ्गोक्षितमण्डवारिकाणिकापानञ्च कूर्चाहतिः
कार्पासेन परार्थसाधनधिया किं किं न चाङ्गीकृतम् ॥ ५६ ॥

केषामप्येते।

शणः

भूर्जः परोपकृतये निजकवचविकर्तनां सहते।
परबन्धनाय तु शणः प्रेक्षध्वमिहान्तरं कीदृक् ॥ ५७ ॥

धत्तूरः

महेशस्त्वां धत्ते शिरसि रसराजस्य जयिनी[1]
विशुद्धिस्त्वत्सङ्गात्कनकमयमेतत्त्रिभुवनम् ।
तनोति त्वत्सेवा ननु कनकवृक्ष त्वदपरः
परस्तत्को नु स्याद्यदि न सुलभीभावमभजः ॥ ५८ ॥

प्रह्लादनस्य ।

उन्मत्त[2] कण्टकिफलप्रतियोगिबुध्या
वैरं वृथैव कुरुषे पनसेन सार्धम् ।
सन्तो हसन्ति न भजन्ति भजन्ति चेत्त्वां
भ्रान्ता भवन्ति सहसा न पुनर्भजन्ति ॥ ५९ ॥

तृणम्

जातस्य सिन्धुतटमनु तस्य तृणस्यापि जन्म रमणीयम् ।
यत्सलिलमज्जदाकुलजनहस्तालम्बनं भवति ॥ ६० ॥

वल्लभदेवस्य ।

स्तम्बः[3]

उच्चुङ्गैस्तरुभिः किमेभिरफलैराकाशसंस्पर्शिभि-
र्धन्योऽसौ नितरामुलूपविटपो नद्यास्तटे तिष्ठति ।
एवं यः कृतबुद्धिरुत्थितजलव्यालोलवीचीवशा-
न्मज्जन्तं जनमुद्धरामि यदि वा तेनैव मज्जाम्यहम् ॥ ६१ ॥

राणकस्य ।

इति वृक्षविशेषवर्णनम् ।

इति श्रीमदारोहकभगदत्तजल्हणदेवविरचितायां सूक्तिमुक्तावल्यां वृक्षपद्धतिः ।

---

१ जननी. क. ख. ग. घ. च. जयिनी. शार्ङ्गधरपद्धतौ. २. अयं श्लोकः. क पुस्तके अधिकपाठतया दृश्यते ।
३ ग. पुस्तके ।

# दावानलपद्धतिः (३४)



हे दावानल शैलाग्रवासिनः साधुशाखिनः।
मुग्ध व्यर्थं त्वया दग्धाः प्रेरितेन प्रभञ्जनैः॥ १॥

वनमनिवारितसत्रं द्विजसार्थानां विभिन्नजातीनाम्।
दहतः कपीटयोने [र्ज्ञा][1] तं माहात्म्यमेतस्य॥ २॥

यस्या महत्त्वभाजो भवन्ति गुणिनोऽमिता धनुर्दण्डाः।
दहतस्तां वंशालिं को वनवह्नेर्विवेकोऽस्य॥ ३॥

अभ्युन्नतेऽपि जलदे जगदेकसारसाधारणप्रणयहारिणि हा यदेते।
उल्लासलास्यललितं तरवो न यान्ति हे दावपावक स तावक एव दोषः[2]॥४॥

विध्वस्ता मृगपक्षिणो विधुरता नीताः स्थलीदेवता
धूमैरन्तरिताः स्वभावमलिनैराशा मही तापिता।
भस्मीकृत्य सपुष्पपल्लवफलानेतान् महापादपा-
नुन्नृत्तेन दवानलेन विपिनं वल्मीकशेषं कृतम्॥ ५॥

केषामप्येते।

दिक्चक्रं तृणभस्मना मलिनितं मूलान्यपि क्ष्मारुहा
निर्दग्धानि न चार्भकोऽपि हरिणीयूथेऽवशेषीकृतः।
हा कष्टं विपिनौकसोऽपि मुनयः प्लुष्टाः कृतान्तक्रियां
कृत्वेत्थं वनवह्निना किममुना शान्तेन दीप्तेन वा॥ ६॥

उमापतिधरस्य।

आरोहत्यवनीरुहः प्रविशति श्वभ्रं नगैः स्पर्धते
खं व्यालेढि विचेष्टते क्षितितले कुञ्जोदरे लीयते।
अन्तर्भ्राम्यति कोटरस्य विवरे व्यालम्बते वीरुधः
किं तद्यन्न करोति मारुतवशं यातः कृशानुर्वने॥ ७॥

वसुन्धरस्य।

१ जार्त. क. ख. च. २ शो. क. ख. च.

दिग्दाहैकरते वनान्तकर ते ज्वाला न मे रोचते
दग्धुं स्वाश्रयमुद्यतस्य भवतो नेच्छन्ति वृद्धिं जनाः ।
मूलान्यस्य महीभृतो वलयितुं दुर्वेधसा निर्मिते
को वा न त्वयि शङ्कते स्म जगतः खेदावहे दाव हे ॥ ८ ॥

॥ इति श्रीमदारोहकभगदत्तजल्हणविरचितायां सूक्तिमुक्तावल्यां दावानलपद्धतिः ॥

## मरुपद्धतिः ( ३५ )



इतः काकानीकं प्रतिभयमितः कौशिकरुता-
दितो गृध्रव्यूहः कुलमिदमितः कङ्कवयसाम् ।
श्मशानावस्थेऽस्मिन्नखिलगुणवन्ध्ये हतमरा-
वपि द्वित्राः केचिन्न खलु कलवाचः शकुनयः ॥ १ ॥

गतमतिजवाद्ध्वान्तं सर्वं समुत्खनिता च भू-
श्चिरतरमहो निःश्वासास्रैः सदैन्यमवस्थितम् ।
किमिव न कृतं पान्थेनेत्थं तथाऽपि शठो मरुः
प्रकृतिविरसः कष्टं यातो मनागपि नार्द्रताम् ॥ २ ॥

कयोरप्येतौ ।

किमासि विमनाः किञ्चोन्मादी क्षणादपि लक्ष्यसे
पुनरपि पुनः प्रेक्षापूर्वा न काञ्चन ते क्रियाः ।
स्वयमजलदां जानानोऽपि प्रविश्य मरुस्थलीं
शिशिरमधुरं वारि प्राप्तुं यदध्वग वाञ्छसि ॥ ३ ॥

नरसिंहस्य ।

दिनमवसितं विश्रान्ताः स्मस्त्वया मरुकूप रे
परमुपकृतं शेषं वक्तुं ह्रिया न वयं क्षमाः ।
भवतु सुकृतैरध्वन्यानामशोषजलो भवा-
नियमपि घनच्छाया भूयाच्चवोपतटं शमी ॥ ४ ॥

कस्यापि ।

१ दल. ग २. दुर्मे. क. ख. ग. च ३ रुषि. क. ख. ग. च ४ विश्वासान्धं क. ख. च. ५ नी. क.

परार्थे यः पीडामनुभवति भङ्गेऽपि मधुरो
  यदीयस्सर्वेषामिह खलु विकारोऽप्यभिमतः।
न संप्राप्तो वृद्धिं यदि स भृशमक्षेत्रपतितः
  किमिक्षोर्दोषोऽसौ न पुनरगुणाया मरुभुवः ॥ ५ ॥

इन्दुराजस्य।

भो भोः किं किमकाण्ड एव पतितस्त्वं पान्थ काऽन्या गति-
  स्तत्तादृकूतृषितस्य ते खलमतिस्सोऽयं जलं गूहते।
अस्थानोपनतामकालसुलभां तृष्णां प्रति क्रुध्य भोः
  त्रैलोक्यप्रथितप्रभावमहिमा पन्थाः पुनर्मारवः ॥ ६ ॥

अभिनवगुप्तस्य।

आम्राः किं फलभारनम्रशिरसो रम्याः किमूष्मच्छिदः
  सच्छायाः कदलीद्रुमाः सुरभयः किं पुष्पिताश्चम्पकाः।
एतास्ता निरवग्रहोग्रकरभोल्लीढावरूढाः पुरः
  शम्यो भ्राम्यसि मूढ निर्मरुति किं मिथ्यैव मर्तुं मरौ ॥ ७ ॥

प्रकाशवर्षस्य।

इति श्रीमदारोहकभगदत्तजह्लणविरचितायां सूक्तिमुक्तावल्यां मरुपद्धतिः।



# संकीर्णवस्तुवर्णनपद्धतिः ( ३६ )



त्वश्चेत्संचरसे वृषेण लघुता का नाम दिग्दन्तिनां
व्यालैः कङ्कणकुण्डलानि कुरुषे हानिर्न हेम्नः पुनः ।
मूर्ध्ना चेद्वहसे जडांशुमयशः किं नाम लोकत्रयी–
दीपस्याम्बुजबान्धवस्य जगतामीशोऽसि किं ब्रूमहे ॥ १ ॥

उमापतिधरस्य ।

विष्णो त्वया द्विजपतिं विमलद्विपक्षं
हित्वा महान् द्विरसने निहितस्स्वभारः ।
प्रायो विमोहितधियो न विदन्ति लक्ष्म्या
निस्संशयं किमिति कार्यमकार्यमेतत् ॥ २ ॥

चतुर्मुखमहादेवस्य ।

उदस्योच्चैः पुच्छं शिरसि निहितं जीर्णजटिले
यदृच्छाव्यापन्नद्विपपिशितलेशाः कवलिताः ।
गुहागर्भे शून्ये सुचिरमुषितं जंबुक सखे
तदेतत्किं क्रुर्मो यदसि न गतः सिंहसमताम् ॥ ३ ॥

भट्टेन्दुराजस्य ।

कान्तारं[1] परितो ज्वलत्यतिबले[2] दावानले दैवतो
गोमायोर्गहनां गुहां परिपतन् दर्पोद्धुरः केसरी ।
यन्नापादयति स्म तं न कृपया तेनैष तस्मिन्वने
सिंहानामभयप्रदोऽहमधुनेत्युत्पुच्छमुद्धावति ॥ ४ ॥

अभिनवगुप्तस्य ।

तत्पञ्चाननकानने विलसितं त[[3]द्दी]र्णदन्तिद्रव-
न्मदःकर्दमकुर्दनं कृतमलं तत्पानलीलासरः ।
आयुःशेषतया त्वया कलुषितं तत्कोल मन्ये क्षणं
तस्मिन् क्वापि गते तदीयशयने स्वापः पुनर्नोचितः ॥ ५ ॥

१. रे. क. ख. च. २. व्यतिकरे. क. ख. च. ३. द्दी. क. ख. च.

निष्कन्दामरविन्दिनीं स्थपुटितोद्देशां कशेरुस्थलीं
जम्बालाविलमम्बु कर्तुमितरा सूते वराही सुतान्।
दंष्ट्रायां चतुरर्णवोर्मिपटलैराप्लावितायामियं
यस्या एव शिशोः स्थिता वसुमती सा पुत्रिणी पौत्रिणी ॥ ६ ॥

जम्भारिरेव जानाति रम्भासंभोगविभ्रमम्।
घटचेटीविटः किन्नु जानात्यमरकामिनीम् ॥ ७ ॥

केषामप्येते।

दामोदरमुदराहितभुवनं यो वहति लीलया गरुडः।
कस्य तरोरुपरिष्टात् खिन्नोऽसौ श्रान्तिमपनयतु ॥ ८ ॥

मालतीमाधवस्य।

रतिरसवर्धननन्दनचन्दनतरुदलनदुर्नयशतानि।
संसहते हरिरनिशं केनापि गुणेन सुरकरिणः ॥ ९ ॥

अहिरहिरिति संभ्रमपदमितरजनः किमपि कातरो भवतु।
विहगपतेराहारः स तु सरसमृणालदलरुचिरः ॥ १० ॥

यद्यपि विलसति वासुकिरधिरूढः शिरसि नाम गिरिशस्य।
श्लाघ्यतरो भुवनानां तथाऽपि खलु भरसहः शेषः ॥ ११ ॥

वल्लभदेवस्य।

रोहणाचल शैलेषु कस्तुलां कलयेत्तव।
यस्य पाषाणखण्डानि मण्डनं मेदिनीभृताम् ॥ १२ ॥

प्रह्लादनस्य।

रत्नानां न किमालयो जलनिधिः किन्न स्थिरा मेदिनी
किन्न व्योम महत्पदं सुकृतिनां किं नाम नैवोन्नतम्।
हंहो रोहण किन्तु याचकचमूनिश्शङ्कटङ्कक्षति-
क्षान्तिस्वीकरणेन गोत्रातिलक त्रैलोक्यवन्द्यो भवान् ॥ १३ ॥

कस्यापि।

ये सन्तोषसुखप्रबुद्धमनसस्तेषामभिन्नो मृदः
केचिद्ये धनलोभसंकुलधियस्तेषां तु दूरे नृणाम् ।
इत्थं कस्य कृते कृतस्स विधिना तादृक्पदं सम्पदां
स्वात्मन्येव समाप्तहेममहिमा मेरुर्न मे रोचते ॥ १४ ॥

विद्यापतेः ।

एकस्यायमुदेति मूर्धनि गिरेरन्यस्य चैव क्रमा-
दस्तं याति कलानिधिस्तदुभयोरस्तः प्रशस्तोऽचलः ।
को नामोदयिनं करोति न शिरोमाणिक्यमस्तं पुन-
र्यातं यः कुरुते भवानिव स दुष्प्रापोऽयमुच्चैश्शिराः ॥ १५ ॥

कस्यापि ।

श्लाघ्यं महत्त्वमेकस्य नभसो भुवनत्रये ।
परस्य वृद्ध्यै यन्नैव गणयत्यात्मनः क्षयम् ॥ १६ ॥
महत्त्वं धिग्धिगेतस्य गगनस्यात्मवृद्धये ।
उद्वीक्षमाणमेवास्ते यत्परस्य परिक्षयम् ॥ १७ ॥

यः पीयूषसहोदरैः स्नपयति ज्योत्स्नाजलैस्सर्वतो
यश्च त्वामधिकाधिकं ज्वलयति प्रोद्दामतापैः करैः ।
भ्रातर्व्योम तयोरपि स्थितिमिह व्यातन्वतो विक्रिया-
निर्मुक्तस्य महत्त्वमेतदसमं दूरेऽधिरूढं तव ॥ १८ ॥

श्रीभोजदेवस्यैतौ ।

अब्जं त्वब्जमथाब्जभूस्तत इदं ब्रह्माण्डमण्डात्पुन-
र्विश्वं स्थावरजंगमं तदितरत्त्वन्मूलमित्थं पयः ।
धिक् त्वां चोर इव प्रयासि निभृतं निर्गत्य जालान्तरै-
र्बद्ध्यन्ते विवशास्त्वदेकशरणास्त्वामाश्रिता जन्तवः ॥ १९ ॥

शैत्यं नाम गुणस्तवैव तदनु स्वाभाविकी स्वच्छता
किं ब्रूमः शुचितां व्रजन्त्यशुचयस्सङ्गेन यस्यापरे ।
किंवाऽतः परमस्ति ते स्तुतिपदं त्वं जीवनं प्राणिनां
त्वं चेन्नीचपथेन गच्छसि पुनः कस्त्वां निरोद्धुं क्षमः ॥ २० ॥

१ तदिति रे. ग. घ. २ जीवितं. क. ख. च. जीवनमिति शार्ङ्गधरपद्धतौ.

को हि तुलामधिरोहति शुचिना दुग्धेन सहजमधुरेण।
तप्तं विकृतं मथितं केवलमुद्गिरति यत्स्नेहम् ॥ २१ ॥

केषामप्येते।

सद्वृत्तस्य च वंशजस्य च गुणश्लिष्टस्य च क्षुब्धक
स्नेहं प्रत्यसमस्य एष किमपि द्वेषोऽत्र जागर्ति ते।
स्वीकृत्य भ्रमिमभ्युपेत्य निबिडं तद्बन्धनं सन्तता-
मङ्गीकृत्य च तृप्तिमत्र यदमुं मोद्धर्तुमेवाग्रहः ॥ २२ ॥

श्रीभोजदेवस्य।

कष्टा वैधव्यथा कष्टो नित्यं च वहनक्रमः।
श्रवणानामलङ्कारः कपोलस्य तु कुण्डलम् ॥ २३ ॥

श्रीमुरारेः।

यत्पूर्वं पवनाग्निशस्त्रसलिलैश्चीर्णं तपो दुष्करं
तस्यैतत्फलमीदृशं परिणतं यज्जातरूपं वपुः।
मुग्धापाण्डुकपोलचुंबनसुखं सङ्गश्च रत्नोत्तमैः
प्राप्तुं कुण्डल वाञ्छयते किमपरं यन्मूढ डोलायसे ॥ २४ ॥

कस्यापि।

लक्ष्मीकौस्तुभचन्द्रमःप्रभृतिभिर्जातैः किमेभिर्वृथा
देवानेव विनोदयन्ति यदमी जन्माश्रयं मथ्नतः।
श्लाघ्यं तद्विषमेव येन बहुलज्वालाविलोपद्रव-
द्राग्विद्रावितनाकनायकचमूभद्रस्समुद्रः कृतः ॥ २५ ॥

लक्ष्मीधरस्य।

शुभ्रत्वं यदिदं य एष गरिमा स्वच्छत्वमेतच्च यत्
भ्राजत्येतदिहोपकारनिरते सर्वं रसेन्द्र त्वयि।
मूर्च्छामप्यनुभूय यो हुतभुजि न्यस्यापि च स्वं वपुः
स्वीकृत्यापि मृतिं करोष्यविरतं वस्तून्यवस्तून्यपि ॥ २६ ॥

वह्निं विशाम्भसि निमज्ज सहस्व टङ्कच्छेदं तुलां समधिरोह भवातिशुभ्रम्।
अन्तस्तथाऽपि दधतः कलधौत कार्ष्ण्यं दुर्वर्णमित्ययमपैति न ते प्रवादः ॥२७॥

ते सन्ति हन्त बहवो भुवि ये परेषां
रन्ध्राण्यवाप्य विदधत्यपकारमुद्राम्।
छिद्रेण यः परमुपेत्य पुनर्निजेन
पीडां करोषि हतशृङ्क्क स त्वमेकः ॥ २८ ॥

स्नेहाद्यत्त्वमिहावसज्य निबिडं कर्पस्यसृग्देहिना—
मन्तःशून्य न कश्चिदेव भवतस्स्वार्थोऽमुना सेत्स्यति।
सम्यक्पूर्णमवेत्य हन्त निपुणं लोकः पुरा तद्यत—
स्त्वामुद्दालयति प्रसह्य विगतातङ्कः क्षणात्तुम्बक ॥ २९ ॥

अमी तिलास्तैलिक नूनमेतां स्नेहादवस्थां भवतोपनीताः।
द्वेषोऽभविष्यद्यदमीषु नूनं तदा न जाने किमिवाकरिष्यः ॥ ३० ॥

यत्सद्गुणोऽपि सरलोऽपि तटस्थितोऽपि
वंशोन्नतोऽपि विदधासि नृशंसकर्म।
वक्रात्मनो बडिशदण्ड तदेतदस्य
जानामि संगतिफलं तव कण्टकस्य ॥ ३१ ॥

सद्वंशस्य प्रविततगुणश्लाधिनः सन्नतस्य
त्वं चापस्य त्यजसि यदहो सङ्गमङ्गीकृतोऽपि।
तेन भ्रातर्विशिख नियतं भीतिकर्तुः परेषां
मर्मच्छेदि प्रकृतिकठिनं युक्तमेतत्फलं ते ॥ ३२ ॥

अस्पृश्यसंगतिमिह प्रविधाय सोढा
दण्डाहतीः पटह बन्धमपि प्रपद्य।
दोषं प्रकाशयसि यत्प्रतिरथ्यमेव
लोकस्य तद्विमुखतां प्रकटीकरोषि ॥ ३३ ॥

गम्भीरस्य महाशयस्य सहजस्वच्छस्य सेव्यस्य ते
सर्वं साध्विह कूप किन्तु तदपि स्तोकं किमप्युच्यते।
पात्रं दूरमधः करोषि गुणवद्यः सोऽपि [ तृष्णाश्रम—]
प्रौढिप्रोन्मथने भवानतिपटुर्यत्तेन लज्जामहे ॥ ३४ ॥

---

१. व. ग घ. २. संग. क. ख. च. ३. तोऽसि. क. ख. च. ४. तक्ष्णाक्षम. क. ख. च.

भीमश्यामप्रतनुवदनक्रूरपातालकुक्षि-
क्रोडप्रान्तोपहितविभवस्याथ ते किं ब्रवीमि।
येन त्वत्तस्समभिलषतो वांछितं क्षुद्र कूप-
क्राम्यन्मूर्तेर्भवति सहसा कस्य नाधोमुखत्वम् ॥ ३५ ॥

सान्द्रज्योतिःपटलदलितध्वान्तचक्रोऽपि बाढं
तस्माल्लोके भवसि न खलु स्पर्शयोग्यः प्रदीप।
प्राप्नोषि त्वं नियतमधिकं येभ्य एवात्मलाभं
तेषामेव प्रशमविधिना यत्तनोषि स्वतेजः ॥ ३६ ॥

श्रीभोजदेवस्यैते।

न यत्र गुणवत्पात्रमेकमप्यस्ति सन्निधौ।
ततस्ते पान्थ कः कूपाज्जीवनग्रहणे ग्रहः ॥ ३७ ॥
रक्ष पात्रगतं स्नेहं प्रदीप श्रीविवर्धनम्।
प्रयास्यन्ति विनाऽनेन भस्मभूयं भवद्गुणाः ॥ ३८ ॥

एतौ राजपितामहमहादेवस्य।

इदमपटु कपाटं जर्जरः पञ्जरोऽयं
विरमति न गृहेऽस्मिन् क्रूरमार्जारयात्रा।
शुक मुकुलितजिह्वं स्थीयतां किं वचोभि-
स्तव वचनविनोदे नादरः पामराणाम् ॥ ३९ ॥

कृष्णमिश्रस्य।

अमुष्मिन्नुद्याने विहगखल एष प्रतिकलं
विलोलः काकोलः क्वणति कटु यावत्पटुतरम्।
सखे तावत्कीर द्रढय हृदि वाचंयमकलां
न मौनेन न्यूनीभवति गुणभाजां गुणगणः ॥ ४० ॥

किं सीत्कृतैर्मधुसुधानिधिभिर्मुधैव
किं कूजितैः कलरवैरलमायताक्षि।
जानात्युलुम्बपृथुकामलकालमेयं-
भेदानयं नवधनाश्विरपामरोऽयम् ॥ ४१ ॥

१. स्यास्य. क. ख. च. श्यामेति शार्ङ्गधरपद्धतौ. २ से. क. ख. च.

वक्रां नैष तनूविवर्तनगतिं जानाति साचिस्मित-
स्निग्धैर्दृग्वलनैरमुष्य न मनाक्चेतः परावर्तते ।
पाणौ त्वं मुनिदारकस्य पतिता कल्याणि तन्नीयतां
वेदीमार्जनबर्हिरर्पणवषट्कर्तव्यपाकैर्वयः ॥ ४२ ॥

ऐणं चर्म पलाशवेश्म पुरतो दृष्ट्वैव कृष्णाजिनं
भिक्षार्थी क्षुधितस्तपोवनधिया किं धार्मिक भ्राम्यसि ।
एनां भिल्लपुरीमवेहि सुरभीशृङ्गेण यत्र स्थितैः
पीयन्ते वनवह्निदग्धमहिषीमांसोपदंशं सुराः ॥ ४३ ॥

वंशः पांशुरयं घुणव्रणयुतो जीर्णा वरत्रा इमाः
कीलाः कुण्ठतया विशन्ति न महीमाहन्यमाना अपि ।
आरोहव्यवसायसाहसमिदं शैलूष सन्त्यज्यतां
दूरे श्रीर्निकटे कृतान्तमहिषग्रैवेयघण्टारवः ॥ ४४ ॥

दुर्गा नदी शिथिलबन्धविडम्बिनी नौ-
रभ्युन्नता जलमुचो विषमस्समीरः ।
आरूढवान्निजकुटुम्बयुतोऽध्वनीन-
स्तत्कर्णधार कुरु यत्सदृशं कुलस्य ॥ ४५ ॥

शुक्लो वा मलिनोऽस्तु वा मृगमदः किं तावता तादृशः
कोऽप्यस्यानवधिश्चमत्कृतिनिधिः सौरभ्यमेको गुणः ।
येनायं स्मरविभ्रमैकवसतिः फाले कपोलस्थले
दोर्मूले कुचमण्डले च लभते सङ्गं कुरङ्गीदृशः ॥ ४६ ॥

केषामप्येते

जन्मस्थानं न खलु विमलं वर्णनीयो न वर्णो
दूरे पुंसां वपुषि रचना पङ्कशङ्कां करोति ।
यद्यप्येवं सकलसुरभिद्रव्यगर्वापहारी
को जानीते परिमलगुणः कोऽपि कस्तूरिकायाः ॥ ४७ ॥

विद्यापतेः ।

---

१. कस्तु. ख. ग. च.

अलमन्ध भुजायष्टिभ्रान्त्या भ्रातर्जडस्य ते।
दंशाय दंदशूकोऽयं दंशमुद्रां न मुञ्चति ॥ ४८ ॥

कस्यापि।

किं नाम दर्दुर दुरध्यवसाय सायं
कायं निपीड्य निनदं कुरुषे रुषेव।
एतानि केलिरसितानि सितच्छदाना-
माकर्ण्य कर्णमधुराणि न लज्जितोऽसि ॥ ४९ ॥

मङ्खणस्य।

उच्चैर्दैवादिह पशुपतौ भूषणीभूय तिष्ठन्
कालव्याल प्रथयसि फणां भीषणां तावदेव।
देवे दूरादविनयभयाद्यावदेवं गरुत्मान्
कोपाटोपं कथमपि तिरोभावयन् मौनमास्ते ॥ ५० ॥

पृथ्वीधरस्य।

पापव्याल परोपकारकरणे नामापि ते दूरतः
शक्तिश्चैव परापकारजनने निष्पाणिपादस्य ते।
इत्थञ्चेद्विधिरेव तालुनि जगद्व्यापत्करं कण्टकं
नाधास्यत् ध्रुवमेवमेतदपि ते जन्माऽभविष्यद्वृथा ॥ ५१ ॥

अध्यापितोऽसि केनैतां मशक क्षुद्रतामिह।
यस्यैव कर्णे लगसि पीडां तस्य करोषि यत् ॥ ५२ ॥

श्रीभोजदेवस्यैतौ।

सिंहिकासुतसन्त्रस्तः शशश्शीतांशुमाश्रितः।
अग्रसत्साश्रयं तत्र तमन्यस्सिंहिकासुतः ॥ ५३ ॥
वामन फलमत्युच्चात्तरुतो मरुतोपनीतमुपलभ्य।
युक्तं त्वं यत्तृप्यसि दृप्यसि चैतत्तु हास्यतरम् ॥ ५४ ॥

वररुचेः।

एष रविस्तेजस्वी खद्योतोऽप्येष हन्त तेजस्वी।
एष रसालश्शाखी शाखी शाखोटकोऽप्येषः ॥ ५५ ॥

पिब पयः प्रसर क्षितिपान्तिके कलय काञ्चन काञ्चनशृङ्खलाम् ।
इदमवद्यतमं तु यदीहसे भषक संप्रति केसरिणस्तुलाम् ॥ ५६ ॥

श्रीभीमसिंहपण्डितस्यैतौ ।

शतपदी सति पादशते क्षमा यदि न गोष्पदमप्यतिवर्तितुम् ।
किमियता द्विपदोऽस्य हनूमतो जलनिधेः क्रमणे विवदामहे ॥ ५७ ॥

भल्लटस्य ।

सततमुलूखलमुसलव्रीह्याघातादिकी श्रुतिस्सुलभा ।
कान्ताकरतलताडितवीणारणितं तु दुरवापि ॥ ५८ ॥

वेदव्यासस्य ।

अचिन्त्याः पन्थानः प्रकृतिमहतामन्धकरिपो-
यदक्ष्णोऽभूत्तेजस्तदकृत कथामप्यमदनाम् ।
मुनेर्नेत्रादत्रेर्यदजनि घनज्योतिरहह
प्रतेने तेनेदं मदनमयमेतत्त्रिभुवनम् ॥ ५९ ॥

कस्यापि ।

भ्रातः काञ्चनलेपगोपितबहिस्ताम्राकृते सर्वतो
मा भैषीः कलश स्थितो भव चिरं देवालयस्योपरि ।
ताम्रत्वं गतमेव काञ्चनमयी कीर्तिः स्थिरा तेऽधुना
नान्तस्सारविचारणप्रणयिनो लोका बहिर्बुद्धयः ॥ ६० ॥

आदित्यभट्टस्य ।

इति श्रीमदारोहकभगदत्तजल्हणदेवविरचितायां सूक्तिमुक्तावल्यां संकीर्णवस्तुवर्णनपद्धतिः ।



१. रो. ग. घ. च.

# शृङ्गारपद्धतयः

## दयितगमनपद्धतिः ( ३७ )

अनङ्गेनाबलासङ्गाज्जिता येन जगत्त्रयी ।
स चित्रचरितः कामः सर्वकामप्रदोऽस्तु वः ॥ १ ॥

क्षेमेन्द्रस्य ।

दृशा दग्धं मनसिजं जीवयन्ति दृशैव याः ।
विरूपाक्षस्य जयिनीस्ताः स्तुवे वामलोचनाः ॥ २ ॥

राजशेखरस्य ।

तत्र कवेरुक्तिः—

गन्तुर्विवस्वदुदये हृदयेश्वरस्य प्रत्यूषपक्षिनिनदश्रवबद्धकम्पा ।
निद्रां जलैरशिशिरैर्नयनान्तवान्तैः कान्ता तदंसशिखरे पतितैर्जहार ॥ ३ ॥

शक्नोमि नासितुमहं विरहाभितप्ते तप्तायसीव वपुषि क्षणमप्यमुष्याः ।
इत्थं मनो निषदनाक्षमवन्मृगाक्ष्याः प्रातिष्ठत प्रवसता सह वल्लभेन ॥ ४ ॥

सूक्तिसहस्रादेतौ ।

लग्ना नांशुकपल्लवे भुजलता न द्वारदेशेऽर्पिता
नो वा पादयुगे तया निपतितं तिष्ठेति नोक्तं वचः ।
काले केवलमम्बुदालिमलिने गन्तुं प्रवृत्तश्शठ-
स्तन्व्या बाष्पजलौघकल्पितनदीपूरेण रुद्धः प्रियः ॥ ५ ॥

दृष्टः कातरनेत्रया चिरतरं बध्वाऽञ्जलिं याचितः
पश्चादंशुकपल्लवेन विधृतो निर्व्याजमालिङ्गितः ।
इत्याक्षिप्य यदा समस्तमघृणो गन्तुं प्रवृत्तश्शठः
पूर्वं प्राणपरिग्रहो दयितया मुक्तस्ततो वल्लभः ॥ ६ ॥

अमरुकस्यैतौ ।

प्रहरविरतौ मध्ये वाह्नस्ततोऽपि परेऽथवा
किमुत सकले याते वाह्नि प्रिय त्वमिहैष्यसि ।
इति दिनशतप्राप्यं देशं प्रियस्य यियासतो
हरति गमनं बाला वाक्यैस्सबाष्पझलज्झलैः ॥ ७ ॥

झलज्झलवासुदेवस्य ।

१ प्रातस्त्य. ख. २. विपद. क. ख. च. ३ समस्तमर्थं. ग. ४. अमरुक. १२.

कान्ते कथंचित्कथितप्रयाणे क्षणं विनम्रा विरहार्दिताङ्गी।
ततस्तमालोक्य कदाऽऽगतोऽसीत्यालिङ्ग्य मुग्धा मुदमाससाद ॥ ८ ॥

नायिकां प्रति नायकोक्तिः—

दुःखानि मे निरवशेषमपघ्नतीं त्वां दुःखे निधाय किमहं कलयामि गन्तुम्।
पातोऽम्भसामयमदृष्टचरस्तवाक्ष्णोः पाताय मे नियतमद्य भवेदसूनाम् ॥ ९ ॥

कुर्वाणस्सुकृतानि रक्ष्यमखिलं रक्षन्निगृह्णन् द्विष-
स्तन्वानश्च यशस्सुखेन विषयान् भुङ्क्ते पुमानुत्तमः।
अन्यो जङ्गमकाष्ठमत्र नियतं तत्सर्वमुत्साहतो
लभ्यं तत्कतिचिद्दिनानि विरहस्सह्यो भवत्या मम ॥ १० ॥

सूक्तिसहस्रादेतौ।

स्मर्तव्या वयमिन्दुसुन्दरमुखि प्रस्तावतोऽपि त्वया
स्यादेवं यदि नाथ दास्यति विधिर्जातिस्मरत्वं मम।
एकस्मिन्नपि जन्मनि प्रियतमे जातिस्मरत्वं कुतः
प्राणाः पान्थ सह त्वयैव चलिताः क्वाद्यापि जन्मैकता ॥ ११ ॥

कस्यापि।

नायकं प्रति नायिकोक्तिः—

लोलैर्लोचनवारिभिस्सशपथैः पादप्रणामैः परै-
रन्यास्ता विनिवारयन्ति कृपणाः प्राणेश्वरं प्रस्थितम्।
पुण्याहं व्रज मङ्गलं सुदिवसः प्रातः प्रयातस्य ते
यत्स्नेहोचितमीहितं प्रिय मया तन्निर्गतः श्रोष्यसि ॥ १२ ॥

अमरुकस्य।

नायिकासखीः प्रति नायकोक्तिः—

एतत्सर्वं शृणुत वचनं संग्रहादत्र सख्यः
प्राणानां नः फलमविकलं नूनमेषा सखी वः।
विश्लेषेऽस्मिन् प्रचलति भृशं दीपिकेव प्रवाते
सत्यामस्यां वयमतमसस्सर्वथा रक्षतैनाम् ॥ १३ ॥

सूक्तिसहस्रात्।

नायकं प्रति सखीवाक्यम्—

अस्यास्त्राणमहो वियोगदुरितादस्मासु कृत्वा कृती
स्वैरं गच्छसि तत्तु किं विमृशसि त्रासावहं हन्त नः।
वाचालेषु दिनेषु कोकिलरुतैरुत्पञ्चमप्रक्रमैः
सज्योत्स्नासु च यामिनीष्वशरणाः किं नाम कुर्मो वयम् ॥ १४ ॥

किं भद्रं पथि गच्छतस्तव वयं ब्रूमः किमस्याः स्वयं
प्राणानामिह गच्छतामिति हि नः सन्देहमुग्धा धियः।
किन्तु स्वस्तिफलप्रवासमिह च प्रत्यागतं नः शुभै-
स्त्वां पश्येम गताः पुनः कथय किं प्राणाः परावर्तिनः ॥ १५ ॥

सूक्तिसहस्रात्।

यद्बिम्बोष्ठरुचिः क्व विद्रुममणिः स्वप्नेऽपि तां लब्धवान्
हासश्रीसदृशैस्तपोभिरपि किं मुक्ताफलैर्भूयते।
तत्कान्तिः शतशोऽपि वह्निपतनैर्हेम्नः कुतस्स्येत्स्यति
त्यक्त्वा रत्नमयीं प्रयासि दयितां कस्मै धनायाध्वग ॥ १६ ॥

सूक्तिसहस्रात्।

त्वं जीवितं त्वमसि मे हृदयं द्वितीयं
त्वं कौमुदी नयनयोरमृतं त्वमङ्गे।
इत्यादिभिः प्रियशतैरनुरुध्य तन्वीं
तामेव शान्तमथवा किमतः परेण ॥ १७ ॥

भवभूतेः।

सखीं प्रति नायिकोक्तिः—

न यावद्विस्रम्भं चिरपरिचयाद्याति हृदयं
मुखं हस्तोष्माणं न च निरवशेषं विसृजति।
अमी वेणीभङ्गाः प्रियसखि न यान्त्येव समतां
तथाऽप्यद्यैवायं मयि निरनुकम्पः प्रवसति ॥ १८ ॥

कस्यापि।

स्वजीवितं प्रति नायिकोक्तिः—

प्रस्थानं वलयैः कृतं प्रियसखैरस्रैरजस्रं गतं
धृत्या न क्षणमासितं व्यवसितं चित्तेन गन्तुं पुनः।
यातुं निश्चितचेतसि प्रियतमे सर्वे समं प्रस्थिता
गन्तव्ये सति जीवित प्रियसुहृत्सार्थः किमुत्सृज्यते ॥ १९ ॥

इति श्रीमदारोहकभगदत्तजल्हणविरचितायां सूक्तिमुक्तावल्यां दयितगमनपद्धतिः।

---

१ या बिम्बोष्ठरुचिर्न. ग. २ अमरुक. ३६.

# विरहिण्यवस्थापद्धतिः ( ३८ )

निक्षिप्य काऽपि शयने विवशं शरीरं
संविश्य तत्र झटिति स्वयमेव यत्नात् ।
उत्थाय सौधमधिरुह्य गवाक्षरन्ध्रैः
पत्युर्विलोक्य पदवीं भजति प्रमोहम्[1] ॥ १ ॥

श्रुत्वा बहिः क्वचन कंचन काऽपि शब्दं
मत्वा निवर्तनमहो दयितस्य मुग्धा ।
तल्पादुदीय च नियम्य च पार्श्वशब्दान्
धत्ते ततः श्रुतिमनल्पकुतूहलाक्षी ॥ २ ॥

सूक्तिसहस्रादेतौ ।

सा तोरणान्तिकमुपेत्य दिशो विलोक्य
निःश्वस्य दीर्घमुपधाय करं कपोले ।
मत्वाऽथ तं पुरत एव ससंभ्रमाऽभूत्
ज्ञात्वा मृषा च लिखितेव न किं किमासीत् ॥ ३॥

पृथ्वीधरस्य ।

तस्याः स्तनान्तरे न्यस्तं चन्दनं तापशोषितम् ।
मनोभवाग्निदग्धस्य बभौ भस्मेव चेतसः ॥ ४ ॥

कस्यापि ।

खण्डिता मा भवन्त्वेताः कदाऽपीत्यनुकम्पया ।
नदीर्निनीषतीवाब्धिं साऽश्रुपूरैर्निरन्तरैः ॥ ५ ॥

श्रीवैद्यभानुपण्डितस्य ।

तापापनोददक्षाणि मृणालानि नतभ्रुवः ।
नाभूवन् दीर्घसूत्रेभ्यो वाञ्छितं प्राप्यते कुतः ॥ ६ ॥

भट्टवृद्धेः ।

१ रोहं, क. ख. च.

दह्यमानेऽपि हृदये मृगाक्ष्या मन्मथाग्निना।
स्नेहस्तथैव यत्तस्थौ तदाश्चर्यमिवाभवत् ॥ ७ ॥

शकवृद्धेः।

लिखति न गणयति रेखा निर्भरबाष्पाम्बुधौतगण्डतला।
अवधिदिवसावसानं माभूदिति शङ्किता बाला ॥ ८ ॥

मोरिकायाः।

दुःखानि सन्दिशन्त्यास्तस्याः कण्ठं मुहुर्मुहुर्बाष्पः।
स्वल्पावशेषजीवितनिर्वाणभियेव निरुणद्धि ॥ ९ ॥

भट्टबाणस्य।

नलिनीदलमाहितं सखीभिः परितापोपशमाय यद्यदङ्के।
अकृतप्रतिकारलज्जयेव परितो म्लानिमुपैति तत्तदस्याः ॥ १० ॥

कस्यापि।

मदकलकलकण्ठकण्ठनादव्यतिकरभैरवदिङ्मुखानि तन्वी।
कथमिव गमयेद्विदग्धमल्लीपरिमलकञ्चुकितानि वासराणि ॥ ११ ॥

तरुणबाणस्य।

परिच्युतस्तत्कुचभारमध्यात् किं शोषमायासि मृणालहार।
न सूक्ष्मतन्तोरपि तावकस्य तत्रावकाशो भवतः किमु स्यात् ॥ १२ ॥

श्रीहर्षस्य।

विवृद्धतापोपशमार्थमङ्के न्यस्तं यदिन्दीवरदाम तस्याः।
मुक्तेषुणा पञ्चशरेण भाति व्यापारितं धौतमिवासिपत्रम् ॥ १३ ॥

देवगुप्तस्य।

परिमृदितमृणालीम्लानमङ्गं प्रवृत्तिः
कथमपि परिवारप्रार्थनाभिः क्रियासु।
कलयति च हिमांशोर्निष्कलङ्कस्य लक्ष्मी-
मभिनवकरिदन्तच्छेदगौरः कपोलः ॥ १४ ॥

भवभूतेः।

१ क्रम. ग.

मदनदहनशुष्यत्कान्तकान्ताकुचान्त-
र्नवमलयजपङ्के गाढबद्धाखिलाङ्घ्रिः ।
उपरि विवृतपक्षो लक्ष्यतेऽलिर्निमग्न-
श्शर इव कुसुमेषोरेष पुङ्खावशेषः ॥ १५ ॥

कस्यापि ।

अस्त्रं विमुच्य सकलं प्रथमप्रयोगे
भूयोऽपि हन्तुमबलां विहितोद्यमस्य ।
पुष्पायुधस्य वपुरेव तदीयमेकं
लक्ष्यश्च हन्त शरधिश्च तदा बभूव ॥ १६ ॥

स्थितमुरसि विशालं पद्मिनीपत्रमेतत्
कथयति न तथान्तर्मन्मथोत्थामवस्थाम् ।
अतिशयपरितापम्लापिताभ्यां यथाऽस्याः
स्तनयुगपरिणाहं मण्डलाभ्यां ब्रवीति ॥ १७ ॥

परिम्लानं पीनस्तनजघनसङ्गादुभयत-
स्तनोर्मध्यस्यान्तः परिमिलनमप्राप्य हरितम् ।
इदं व्यस्तन्यासं श्लथभुजलताक्षेपवलनैः
कृशाङ्ग्याः सन्तापं वदति बिसिनीपत्रशयनम् ॥ १८ ॥

श्रीहर्षस्यैतौ ।

यदेतन्नेत्राम्भः पतदपि समासाद्य तरुणी-
कपोले व्यासङ्गं कुचकलशमस्याः कलयति ।
पुनः श्रोणीबिम्बं समुचितविलासं तदुचितं
स्वभावस्वच्छानां विपदपि मुखं दन्तुरयति ॥ १९ ॥

कस्यापि ।

तन्वङ्ग्या गुरुसन्निधौ नयनयोर्यद्वारि संस्तंभितं
तेनान्तर्गलितेन मन्मथशिखी सिक्तो वियोगोद्भवः ।
मन्ये तस्य निरस्यमानकिरणस्यैषा मुखेनोद्गता
श्वासायाससमागतालिसरणिव्याजेन धूमावली ॥ २० ॥

अमरुकस्य ।

एतस्या विरहज्वरः करतलस्पर्शैः परीक्ष्यो न यः
स्निग्धेनापि सखीजनेन भयतः प्रस्थम्पचः पाथसाम्।
निश्शक्तीकृतचन्दनौषधिविधौ तस्मिंस्तडत्कारिणो
लाजस्फोटममी स्फुटन्ति मणयो विश्वेऽपि हारस्रजः ॥ २१ ॥

राजशेखरस्य।

वक्रे यां मृगनाभिपङ्करचनां खिन्नेव धत्ते परं
यस्यास्सान्द्रमुरःस्थले निपतितं भारायते चन्दनम्।
अङ्गान्यप्यतिलालसा वहति या क्लेशेन तस्यामपि
न्यस्तश्शोकभरोऽपरः कथमहो निस्त्रिंशता वेधसः ॥ २२ ॥

श्रीभानुषेणस्य।

मुग्धा स्वप्नसमागते प्रियतमे तत्पाणिसंस्पर्शनं
रोमाञ्चाङ्कितया शरीरलतया संभाव्य रोषात्किल।
मा मा वल्लभ संस्पृशेति सहसा शून्यं वदन्ती मुहुः
सख्या नो हसिता सचिन्तमसकृत्संशोचिता प्रत्युत ॥ २३ ॥

रुद्रस्य।

अस्मिन्वर्षमहे न वर्तत इदं यत्कामदेवोत्सवे
स्थेयं पुत्रि निरन्नया तदधुना किञ्चिन्मुखे दीयताम्।
इत्युक्ते जरतीजनेन कथमप्यध्वन्यवध्वा ततः
पर्यस्तेऽहनि कल्पितश्च कवलो धौतश्च धाराश्रुभिः ॥ २४ ॥

कस्यापि।

विश्रान्तो दिवसः प्रपञ्चितरुतैर्वाचालितः कोकिलैः
सख्यस्संप्रति निर्भयाऽस्मि जहत प्राणेषु मे संशयम्।
इत्यन्ते दिवसस्य हन्त विगतत्रासामिवाभाषिणीं
ज्योत्स्नाकैरवभैरवो नयति तां मोहं प्रदोषो हतः ॥ २५ ॥

सूक्तिसहस्रात्।

शीघ्रं भूमिगृहे गृहाण वसतिं प्राणैः किमु क्रीडसि
भ्रान्तां पश्यसि नैव दैवहतिके ज्योत्स्नां गवाक्षोदरे ।
इत्थं मन्मथतीव्रसंज्वरजुषां गेहेषु वामभ्रुवा-
मुद्गच्छन्ति कुरङ्गलाञ्छनभयाद्दीनास्सखीनां गिरः ॥ २६ ॥

बिल्हणस्य ।

भ्रातः पान्थ पथि त्वया नु पथिकः कश्चित्समासादितो
बाले नैकशतानि कीदृश इति प्रख्याप्यतां वल्लभः ।
यं दृष्ट्वा प्रमदाजनस्य भवतः स्फारे मुदा लोचने
स ज्ञेयो दयितो ममेति पथिकायावेद्य मोहं गता ॥ २७ ॥

कस्यापि ।

अभ्यर्थ्य सप्रणति मन्दिरमभ्युपेता
देवी स्वयं भगवती पृथगेव तासाम् ।
आसन्नवल्लभसमागमसूचनानि
संजीवनानि वचनान्यपि वाचितानि ॥ ॥ २८ ॥

सूक्तिसहस्रात् ।

॥ इति श्रीमद्दारोहकभगदत्तजल्हणविरचितायां सूक्तिमुक्तावल्यां विरहिण्यवस्थावर्णनपद्धतिः ॥



१ हितके. ९.

# सखीप्रश्नपद्धतिः ( ३९. )



यत्संभाषणलालसेव कुरुषे वक्त्रेन्दुमर्धानतं
धत्से बाहुलतागलान् कुचतटे निष्क्रान्तिभीत्येव यत्।
किं वा मन्त्रयते जनोऽयमिति यत्सर्वत्र शङ्काकुला
तज्ज्ञातं[1] हृदि कोऽपि तिष्ठति युवा प्रौढश्च गूढश्च ते ॥ १॥

बिह्लणस्य।

यत्तालीदलपाकपाण्डु वदनं यन्नेत्रयोर्दुर्दिनं
गण्डः पाणिनिषेवणाच्च यदयं संक्रान्तपञ्चाङ्गुलिः।
गौरी क्रुध्यतु[2] वर्तते यदि न ते तत्कोऽपि चित्ते युवा
धिक् धिक्त्वां सहपांसुखेलनसखीलोकेऽपि यन्निन्हवः॥ २ ॥

आहारे विरतिः समग्रविषयग्रामे निवृत्तिः परा
नासाग्रे नयनं यदेतदपरं यच्चैकनिष्ठं मनः।
मौनं चेदमिदं च शून्यमखिलं यद्विश्वमाभाषसे[3]
ब्रूयास्त्वं सखि योगिनी किमसि भोः किं वा वियोगिन्यसि ॥ ३ ॥

राजशेखरस्य।

अलसवलितैः प्रेमार्द्रार्द्रैर्मुहुर्मुकुलीकृतैः
क्षणमभिमुखैर्लज्जालोलैर्निमेषपराङ्मुखैः।
हृदयनिहितं भावाकूतं वमद्भिरिवेक्षणैः
कथय सुकृती कोऽयं मुग्धे त्वयाऽद्य विलोक्यते ॥ ४

अमरुकस्य[4]।

उज्जृम्भाननमुल्लसत्कुचतटं लोलद्भ्रमद्भ्रूलतं
स्वेदाम्भस्नपिताङ्गयष्टि विगलद्व्रीडं सरोमाञ्चया।
धन्यः कोऽपि युवा स यस्य वदने व्यापारितास्सांप्रतं
मुग्धे दुग्धमहाब्धिफेनपटलप्रख्याः कटाक्षच्छटाः॥ ५ ॥

धनिकस्य।

१ तज्ज्ञाने ग. २ क्रुध्यतु क. ख छ. ३ माहाति के. ख. माभाति के. ख. च. माभाति ते. इति शार्ङ्गधरपद्धतौ ४ अयं नामनिर्देशो. ग. पुस्तके.

[अं][1]भ्यस्तेऽपि नितम्बभारफलके खेदालसेयं गतिः
किंचित्संवलितार्धपक्ष्मविरलालोका दृशोऽन्तर्गताः।
तन्मन्ये निभृतं त्वयाऽद्य हृदये कश्चिद्धृतो वल्लभो
निश्वासाः कथमन्यथा द्विगुणतामेते तवैवं गताः॥ ६॥

कस्यांपि।

भगिनि मदनः श्रीमानेष त्वया यदि लिख्यते
[ि][2]कमपि सुमुखि व्यग्रासीति व्रजामि निजालयम्।
यदपि मकरोऽधस्तात् पौष्पं करे च शरासनं
तदपि परितो दृष्टिर्देया जनः सखि नागरः॥ ७॥

बाले प्रियेण विरहात्तव कर्शिताया
हस्तच्युतं वलयमेतदलब्धदेशम्।
हस्ते पुनः स्थितिमगादिदमङ्गुलीयं
स्थानच्युतिर्महत एव भवत्यनर्थः॥ ८॥

मुग्धे कं हृदये निधाय सुचिरं रोमाञ्चिताङ्गी मुहु-
र्जृम्भामन्थरतारकां सललितापाङ्गां दधाना दृशम्।
सुप्तेवालिखितेव शून्यहृदया लेखावशेषीभव-
स्यात्मद्रोहिणि किं ह्रिया कथय मे गू[ढो][3] निहन्ति स्मरः॥ ९॥

कस्यापि।

को धन्यस्सखि सुस्थितेन मनसा को वेधसा निर्मितः
कः प्रेयान्मदनस्य कस्य फलितः प्राचीनपुण्यद्रुमः।
एतद्यस्य कृते दिवानिशम[4]विश्रान्तस्खलद्धारिभि-
मौंनाल्लोचनगड्डुगैः स्नपयसे वक्षोजलिङ्गद्वयम्॥ १०॥

पक्ष्माग्रग्रथिताश्रुबिन्दुनिकरैर्मुक्ताफलस्पर्धिभिः
कुर्वन्त्या हरहासहारि हृदये हारावलीभूषणम्।
बाले बालमृणालनालवलयालङ्कारकान्ते करे
विन्यस्याननमायताक्षि सुकृती कोऽयं त्वया स्मर्यते॥ ११॥

१ लभ्यस्ते. क. ख. त. २ त्वमपि च. ३ ढो. क. ख. च. ४, पि. क. ख. च.

विश्रान्ता दिवसस्तटीमयमटत्यस्ताचलस्यांशुमान्
संप्रत्यङ्कुरितान्धकारपटलैर्लम्बालका द्यौरभूत् ।
एह्यन्तर्विश वेश्मनश्शशिमुखि द्वारस्थलीतोरण-
स्तम्भालम्बितबाहुवल्लि रुदती किं त्वं पथः पश्यसि ॥ १२ ॥

रुदतिब्राह्मणस्य ।

गोपायन्ती विरहजनितं दुःखमग्रे गुरूणां
किं त्वं मुग्धे नयनविसृतं बाष्पपूरं रुणत्सि ।
नक्तं नक्तं नयनसलिलैरेष आर्द्रीकृतस्ते
शय्योपान्तः कथयति दशामातपे शोष्यमाणः ॥ १३ ॥

मारुलायाः ।

मूकीभूताः पिकयुवतयः किं वसन्तेऽपि तस्मिन्
किं जातोऽसौ मलयमरुतां दुष्प्रवेशः प्रदेशः ।
किं वा तस्मिन्नमृतमहसो न प्लवन्ते मयूखाः
यत्रावासं कृशतनु तव स्वान्तचोरः करोति ॥ १४ ॥

बाले नैते पयोदास्सुरपतिकरिणो नो बकाः कण्ठशङ्खाः
सौदामिन्योऽपि नैताः कनकमयमिदं मण्डनं कुंभपीठे ।
नैतत्तोयं विकीर्णं पतति मदजलं श्वासवातावधूतं
तत्किं मुग्धे वृथैवं मलिनयसि मुखं प्रावृडित्यश्रुपातैः ॥ १५ ॥

कयोरप्येतौ ।

स्फुरति यदिदमुच्चैर्लोचनं सुभ्रु वामं
स्तनतटमपि धत्ते चारु रोमाञ्चमालम् ।
कलयति च यदन्तःकम्पितामूरुकाण्डं
ननु वदति तदद्य प्रेयसा संगमं ते ॥ १६ ॥

इति श्रीमदारोहकभगदत्तजल्हणविरचितायां सूक्तिमुक्तावल्यां सखीप्रश्नपद्धतिः ।

---

१. मभि. ग. ख. च.

# वियोगिनीप्रलापपद्धतिः ( ४० )

शल्यानि मर्मण्यपि कीलितानि गलन्त्ययस्कान्तमणेः प्रभावात् ।
हृदि प्रविष्टस्य पुनर्जनस्य न लभ्यते निर्गमनाभ्युपायः ॥ १ ॥

बिह्लणस्य ।

स्वयमज्ञातदुःखो यः स दुनोति न विस्मयः ।
त्वं स्मर प्राप्तदाहोऽपि दहसीति किमुच्यते ॥ २ ॥

अरतिरियमुपैति मां न निद्रा गणयति तस्य गुणान् मनो न दोषान् ।
विगलति रजनी न संगमाशा व्रजति तनुस्तनुतां न चानुरागः ॥ ३ ॥

कयोरप्येतौ ।

इदानीं तीव्राभिर्दहन इव भाभिः परिवृतो
ममाश्चर्यं सूर्यः किमु सखि रजन्यामुदयते ।
अयं मुग्धे चन्द्रः किमिति मयि तापं प्रकटय-
त्यनाथानां बाले किमिव विपरीतं न भवति ॥ ४ ॥

पुष्टिकरस्य ।

कालं पुरा गरलमम्बुनिधेरुदस्था-
द्द्येन्दुनाम धवलं विषमभ्युदेति ।
अद्यादिदं स गिरिशो यदि हन्त हन्यात्
कार्ष्ण्यं स्वकण्ठनिहितं सखि मद्वयश्च ॥ ५ ॥

उत्प्रेक्षावल्लभस्य ।

मुग्धस्य ते वद विधुन्तुद किं भणामि
किं मुक्तवानसि मुखे पतितं शशाङ्कम् ।
अस्यैव बिम्बगलितेन सुधारसेन
सन्धानमेष्यति कथं न जरत्कबन्धः ॥ ६ ॥

क्षोणीभृत्कटकप्रयाणसमये प्रेमाकुला प्रेयसी
हस्तन्यस्तविशुद्धतण्डुलकणान् दातुं शिरस्यागता ।
संस्वेदाद्विरहानलात् करयुगे जातं च पक्वोदनं
तं दृष्ट्वा गुरुसन्निधौ कृतवती नीराजनं लज्जया ॥ ७ ॥

१. लोके. ख. २ ना धवलितं. क. ख. च.

चन्द्रो न चेद्व्रजति तत्सखि किञ्चिदेव चक्रं कथञ्चिदपसारय तारकाणाम्।
एताः कदाचिदशुभैः पतिखण्डितानां पिण्डत्वमेत्य रचयन्ति विधुं द्वितीयम् ।८॥

ज्योत्स्नां पिबेयुः कियतीं चकोराः किं नात्र धात्रा करिणो नियुक्ताः।
शीघ्रं यदेषां करपूरणेन जायेत चन्द्रः प्रभया विहीनः ॥ ९ ॥

बिह्लणस्यैते।

किं ते न सन्ति गिरयश्शिखरेषु येषा-
मुत्सङ्गलोलतडितो विहरन्ति मेघाः।
किं तस्य वर्त्मनि न सन्ति वनानि तानि
प्रस्थानसाहसरसैकपरायणस्य ॥ १० ॥

अयं [ जय ] तुङ्गोदयात्।

निश्वासैस्सह सांप्रतं सखि गता वृद्धिं ध्रुवं रात्रयः
सार्धं लोचनवारिणा विगलितं तत्प्राकृतनं मे सुखम्।
प्राणाशा तनुतामुपैति च मुहुर्नूनं तनुस्पर्द्धया
कन्दर्पः परमेक एव विजयी यातेऽ[त्र कान्ते]स्थितः ॥ ११ ॥

रुद्रस्य।

श्वासो बाष्पतरङ्गितस्सकरुणा मार्गे च नेत्रार्पणा
केनेदं न कृतं प्रियस्य विरहे कस्यासवो निर्गताः।
सख्येवं यदि तेन नास्मि कथिता पान्थः कथं प्रोषितः
प्राणास्संप्रति मे कलङ्कमलिनास्तिष्ठन्तु वा यान्तु वा ॥ १२ ॥

यास्यामीति समुद्यतस्य गदितं विस्रब्धमाकर्णितं
गच्छन्दूरमुपेक्षितो मुहुरसौ व्यावृत्य तिष्ठन्नपि।
तच्छून्ये पुनरास्थिताऽस्मि भवने प्राणास्त एते दृढा-
स्सख्यस्तिष्ठत जीवितव्यसनिनी दम्भादहं रोदिमि ॥ १३ ॥

यात्रामङ्गल [ संवि ] धानरचनाव्यग्रे सखीनां गणे
बाष्पाम्भःपिहितेक्षणे गुरुजने तद्वत्सुहृन्मण्डले।
प्राणेशस्य मदीक्षणार्पितदृशः कृच्छ्रादतिक्रामतः
किं व्रीडाजडया मया भुजलतापाशो न कण्ठेऽर्पितः ॥ १४ ॥

१ दरिद्रः ग. च. २ त्रिकान्त. क. ख. च. ३ संनिधान. क. ख. च.

स्वप्नेनाद्य मया पुरः प्रियतमो दृष्टश्चिरादागतो
यत्नेनाप्यनुकूलयन्नपि मया मानान्न संभावितः ।
पश्चाद्या [ [1]वंदुपैमि ] मन्मथपथारूढा तमालिङ्गितुं
तावन्मे सहसैव मृत्युसदृशः प्राप्तः प्रबोधोदयः ॥ १५ ॥

केषामप्येते ।

गतोऽस्तं घर्मांशुर्व्रज सहचरीनीडमधुना
सुखं सुप्या भ्रातः स्वजनचरितं वायस कृतम् ।
मयि स्नेहात् बाष्पस्थगितनयनायां गतघृणो
रुदन्त्यां यो यातस्त्वयि स विलपत्येष्यति कथम् ॥ १६ ॥

शिवस्वामिनः ।

दुर्वाराः स्मरसायकाः प्रियतमो दूरे मनोऽत्युत्सुकं
गाढं प्रेम नवं [2]वयोऽतिकठिनाः प्राणाः कुलं निर्मलम् ।
स्त्रीत्वं धैर्यविरोधि मन्मथसुहृत्कालः कृतान्तोऽक्षमी
सोढव्याः सखि सांप्रतं कथममी सर्वेऽग्नयो दुस्सहाः ॥ १७ ॥

भट्टमयूरशंकरस्य ।

प्रसरशिशिरामोदं [3]मन्दं समीर समीरय
प्रकटय शशिन्नाशाः कामं मनोभव जृंभताम् ।
अवधिदिवसः पूर्णस्सख्यो विमुञ्चत तत्कथां
हृदयमधुना किञ्चित्कर्तुं ममान्यदिहेच्छति ॥ १८ ॥

रुद्रस्य ।

अवधिदिवसः प्राप्तश्चायं तनोर्विरहस्य वा
रविरयमुपैत्यस्तं सख्यो ममापि च जीवितम् ।
तदलमफलैराशाबन्धैः प्रसीद नमोऽस्तु ते
हृदय सहसा पाकोत्पीडं विडम्बय दाडिमम् ॥ १९ ॥

[4]क्षेमेन्द्रस्य ।

॥ इति श्रीमदारोहकभगदत्तजल्हणविरचितायां सूक्तिमुक्तावल्यां विरहिणीप्रलापपद्धतिः ॥

---

१ मदुपैति. क. ख. च. २ वं तनो. क. ख. च. वं वय इति शार्ङ्गधरपद्धतौ पाठः. ३ मोदं. च. क. ख. पुस्तकयोरत्र पदं विगलितम्. ४ क्षमेश्वरस्य ग.

# दूतीप्रेषणपद्धतिः ( ४१ )



दुर्वारां कुसुमशरव्यथां वहन्त्या तन्वङ्ग्या यदभिहितं पुरस्सखीनाम्।
तद्भूयः शुकशिशुसारिकाभिरुक्तं धन्यानां श्रवणपथातिथित्वमेति ॥ १ ॥

श्रीहर्षस्य।

विरक्तमन्यप्रमदानुरक्तं विमुक्तदाक्षिण्यलवं शठं च।
या संवृणीते खलु दूतिका सा कोऽस्याः समप्रेम्णि जने प्रकर्षः ॥ २ ॥

आपूजितैवास्तु गिरीन्द्रकन्या किं पक्षपातेन मनोभवस्य।
यद्यस्ति दूती सरसोक्तिदक्षा नाथः पतेत्पादतले वधूनाम् ॥ ३ ॥

तस्य त्वया कर्कशवादिनोऽपि प्रकाशनीयं मसृणत्वमेव।
प्रेम्णोऽस्ति भग्नस्य न हि प्ररोहः पुष्पस्य वृन्तादिव विच्युतस्य ॥ ४ ॥

सा दूति धत्ते यदि रोषणत्वं तद्दूषणत्वेन न शङ्कनीयम्।
साधुत्वमायाति रसान्तरेण करम्बिता पुण्ड्रकशर्कराऽपि ॥ ५ ॥

वृथा गाथाश्लोकैरलमलमलीकां मम रुजं
कदाचिद्धूर्तोऽयं कविवचनमित्याकलयति।
इदं पार्श्वे तस्य प्रहिणु सखि लग्नाञ्जनलव-
स्रवद्बाष्पोत्पीडग्रथितलिपि ताटङ्कयुगलम् ॥ ६ ॥

बिल्हणस्यैते।

प्राणेश विज्ञप्तिरियं मदीया तत्रैव नेया दिवसाः कियन्तः।
सम्प्रत्ययोग्यस्थितिरेष देशः करा यदिन्दोरपि तापयन्ति ॥ ७ ॥

उत्प्रेक्षावल्लभस्य।

उल्लङ्घ्याऽपि सखीवचस्समुचितामुन्मूल्य लज्जामलं
भित्वा भीतिभरं निरस्य च निजं सौभाग्यगर्वं मनाक्।
आज्ञां केवलमेव मन्मथगुरोरादाय नूनं मया
त्वं निश्शेषविलासिवर्गगणनाचूडामणिः संश्रितः ॥ ८ ॥

रुद्रस्य।

१. तदा पतिः पाद. क. पाठभेदः २. स. क. ख. ग. घ. च. ३. स्वादु. क. पाठभेदः

पत्त्रं न श्रवणेऽस्ति बाष्पगुरुणोर्नो नेत्रयोः कज्जलं
रागो नाधरपल्लवे चरणयोर्युग्मे न चालक्तकः।
वार्तोच्छित्तिषु निष्ठुरेति भवता मिथ्यैव संभाव्यते
सा लेखं लिखतु च्युतोपकरणा न्यायेन केनाधुना ॥ ९ ॥

अमरुकस्य।

जीवामीति वियोगिनी यदि लिखेत्तेनैव वृत्ताः कथाः
अद्य श्वोऽथ मरिष्यतीति मरणे कालात्ययः किं कृतः।
आगन्तव्यमिहेति संप्रति पुनः संभावना निष्फला
दूति त्वं तमुपैहि नास्ति लिखितं तद्ब्रूहि यत्तत्क्षमम् ॥ १० ॥

लोहितकस्य।

दूति त्वं तरुणी युवा स चपलः श्यामास्तमोभिर्दिश-
स्सन्देशस्स रहस्य एव विजने सङ्केतकावासकः।
भूयोभूय इमे वसन्तमरुतश्चेतो नयन्त्यन्यतो
गच्छ क्षिप्रसमागमाय निपुणं रक्षन्तु ते देवताः ॥ ११ ॥

शिलाभट्टारिकायाः।

॥ इति विप्रलम्भे दूतीप्रेषणपद्धतिः ॥



# वियोग्यवस्थापद्धतिः ( ४२ )



प्रियाविरहितस्यास्य हृदि चिन्ता समागता।
इति मत्वा गता निद्रा के कृतघ्नमुपासते ॥ १ ॥

कस्यापि।

गमनमलसं शून्या दृष्टिश्शरीरमसौष्ठवं
श्वसितमधिकं किंह्ये[1](न्न्वे)तत्स्यात् किमन्यदतोऽथवा।
भ्रमति भुवने कन्दर्पाज्ञा विकारि च यौवनं
ललितमधुरास्ते ते भावाः क्षिपन्ति च धीरताम् ॥ २ ॥

यदिन्दावानन्दं प्रणयिनि जने वा न भजते
व्यनक्त्यन्तस्तापं तदयमतिधीरोऽपि गहनम्।
प्रियङ्गुश्यामाङ्गप्रकृतिरपि चापाण्डुमधुरं
वपुः क्षामं क्षामं वहति रमणीयश्च भवति ॥ ३ ॥

धत्ते चक्षुर्मुकुलिनि रणत्कोकिले बालचूते
मार्गे गात्रं क्षिपति वकुलामोदगर्भस्य[2] वायोः।
दावप्रेम्णा[3] सरसबिसिनीपत्रमात्रान्तरीय[4]-
स्ताम्यन्मूर्तिः श्रयति बहुशो मृत्यवे चन्द्रपादान् ॥ ४ ॥

एते भवभूतेः।

प्रत्यादिष्टविशेषमण्डनविधिर्वामप्रकोष्ठे श्लथं
बिभ्रत्काञ्चनमेकमेव वलयं श्वासापरक्ताधरः।
चिन्ताजागरणप्रतान्तनयनस्तेजोगुणादात्मन-
स्संस्कारोल्लिखितो महामणिरिव क्षीणोऽपि नो लक्ष्यते ॥ ५ ॥

रम्यं द्वेष्टि यथा पुरा प्रकृतिभिर्न प्रत्यहं सेव्यते
शय्योपान्तविवर्तनैर्विगमयत्युन्निद्र एव क्षपाः।

---

१. किंत्वे. क. ख. च. २. मुकु. क. ख. च. ३. दाम. क. ख. च. ४. न्तरा. क. ख. ग. घ. च.

दाक्षिण्येन ददाति वाचमुचितामन्तःपुरेभ्यो यथा
गोत्रेभ्यस्स्खलितस्तथा भवति च व्रीडावनम्रश्चिरम् ॥ ६ ॥

कालिदासस्यैतौ ।

हृद्योद्यानमरुत्तरङ्गितसरस्तीरे तरूणामध–
स्तल्पेऽनल्पसरोजिनीनवदलप्रायेऽपि खिन्नात्मनः ।
धीरस्यापि मनाङ्मनस्तृणकुटीकोणान्तराले बला–
ल्लग्नोऽस्येति विभाव्यते परवशैरङ्गैरनङ्गानलः ॥ ७ ॥

कर्पूराम्बुनिषेकभाजि सरसैरम्भोजिनीनां दलै–
रास्तीर्णेऽपि विवर्तमानवपुषोः स्रस्तस्रजि स्रस्तरे ।
मन्दोन्मेषदृशोः किमन्यदभवत्सा काऽप्यवस्था तयो–
र्यस्यां चन्दनचन्द्रचम्पकदलश्रेण्यादि वह्नीयते ॥ ८ ॥

त्रिविक्रमभट्टस्यैतौ ।

सा तन्वीति घनस्तनीति विकसल्लीलाब्जनेत्रेति च
स्वैरं संचरतीति वक्ति मधुरां वाचं विचित्रामपि ।
इत्थं विद्रुमपाटलाधरपुटां सीमन्तिनीं ध्यायतो
रोमाञ्चो रुदितं स्मितं प्रलपितं पान्थस्य संजायते ॥ ९ ॥

देशैरन्तरितः शतैश्च सरितामुर्वीरुहां काननै–
र्यत्नेनापि न याति लोचनपथं कान्तेति जानन्नपि ।
उद्ग्रीवश्चरणार्धरुद्धवसुधः कृत्वाऽश्रुपूर्णे दृशौ
तामाशां पथिकस्तथाऽपि किमपि ध्यायन् मुहुर्वीक्षते ॥ १० ॥

अमरुकस्य ।

॥ इति विप्रलम्भे वियोगिनोऽवस्थापद्धतिः ॥

---

१ मिति, क. पाठभेदः २ भूतां, ३ प्रलम्न, ४ संमृज्य साह्ने, क. पाठभेदाः ५ अयं नामनिर्देशः क, पाठभेदः

# वियोगिप्रलापपद्धतिः ( ४३ )



बाणाः पञ्च मनोभवस्य नियतास्तेषामसङ्ख्यो जनः
प्रायोऽस्मद्विध एव लक्ष्यमिति यल्लोके प्रसिद्धिं गतम् ।
दृष्टं तत्त्वयि विप्रतीपमधुना यस्मादसङ्ख्यैरयं
विद्धः कामिजनश्शरैरशरणो नीतस्त्वया पञ्चताम् ॥ १ ॥

श्रीहर्षस्य ।

अहो अहं नमो मह्यं यदहं वीक्षितोऽनया ।
बालया त्रस्तसारङ्गचपलायतनेत्रया ॥ २ ॥

बिल्ह्याकस्य ।

सा दृष्टा यैर्न दृष्टा वा मुषितास्सममेव ते ।
हृतं हृदयमेकेषामन्येषां चक्षुषः फलम् ॥ ३ ॥

प्रभाकरदेवस्य ।

दिव्यचक्षुरहं जातः सरागेणापि चेतसा ।
इहस्थो येन पश्यामि देशान्तरगतां प्रियाम् ॥ ४ ॥

धैर्यमित्रस्य ।

स्त्रीति श्रुते गतं धैर्यं सुरूपेति किमुच्यते ।
कष्टं सहृदया सा चेत्सस्पृहेत्यातिदुस्सहम् ॥ ५ ॥

साभिप्रायं प्रणयसरसं प्रौढमारूढरागं
पश्यन्ती मां विकचकमलश्रीमुषा लोचनेन ।
सख्याः कर्णे किमपि किमपि व्याहरन्ती हसन्ती
मन्दं मन्दं ललितललितं मन्दिरं सा जगाम ॥ ६ ॥

वैद्यचक्रवर्तिनः ।

अविदितपरवेदनो मनोभूर्ध्रुव[मयमेव]मनङ्ग एव नित्यम् ।
यदि पुनरभविष्यदस्य चाङ्गं न खलु तदाऽव्यथयिष्यदन्यदेहम् ॥ ७ ॥

कस्यापि ।

१ यैर्मु. क. पाठभेदः २ बिद्या. क. पाठभेदः ३ मेवाय. क. ख. च.

अभिमुखे मयि संहृतमीक्षितं
हसितमन्यनिमित्तकथोदयम् ।
विनयबाधितवृत्तिरतस्तया
न विवृतो मदनो न च संवृतः ॥ ८ ॥

स्निग्धं वीक्षितमन्यतोऽपि नयने यत्प्रेरयन्त्या तया
यातं यच्च नितम्बयोर्गुरुतया मन्दं विलासादिव ।
मागा इत्यवरुद्धया यदपि सा सासूयमुक्ता सखी
सर्वं तत्किल मत्परायणमहो कामी स्वतां पश्यति ॥ ९ ॥

कालिदासस्यैतौ ।

किं पक्वं सुकृतं किमंह इति मे नाद्यापि सं[विद्यते]
तन्व्याश्चेतसि किंस्विदस्मि कलितः किं नेति नैव स्फुटम् ।
एतत्किञ्चिदभूत्तदा मयि सकृत् कृत्वा कटाक्षं ततः
स्निग्धव्याकुललोचनं तरलया सख्यस्तया वीक्षिताः ॥ १० ॥

मदालसकुवलयान्नाटकात् ।

लीलाताण्डवितभ्रु विभ्रमचलद्वक्त्रं कुरङ्गीदृशा
साकूतं च सकौतुकं च सुचिरं न्यस्ताः किलास्मान् प्रति ।
नीलाब्जव्यतिमिश्रकेतकिदलद्राघीयसीनां स्रजां
सोदर्यस्सुहृदः स्मरस्य सुधया [दि[२]]ग्धाः कटाक्षच्छटाः ॥ ११ ॥

कस्यापि ।

तरत्तारं तावत्प्रथममथ चित्रार्पितमिव
क्रमादेवापाङ्गे सहजमिव लीलामुकुलितम् ।
ततः किञ्चित्फुल्लं तदनु घनबाष्पाम्बुलहरी-
परिक्षामं चक्षुः पततु मयि तस्या मृगदृशः ॥ १२ ॥

वीर्यमित्रस्य ।

प्रेमार्द्राः प्रणयस्पृशः परिचयादुद्गाढरागोदया-
स्तास्ता मुग्धदृशो निसर्गमधुराश्चेष्टा भवेयुर्मयि ।

१. विद्घ्नः क. २. मुग्धाः क. ख. च.

यास्वन्तःकरणस्य बाह्यकरणव्यापाररोधी क्षणा-
दाशंसापरिकल्पितास्वपि भवत्यानन्दसान्द्रो लयः ॥ १३ ॥

संभूयैव सुखानि चेतसि परं भूमानमातन्वते
यत्रालोकपथावतारिणि रतिं प्रस्तौति नेत्रोत्सवः।
यद्बालेन्दुकलोच्चयादपचितैस्सारैरिवोत्पादितं
तत्पश्येयमनङ्गमङ्गलगृहं भूयोऽपि तस्या मुखम् ॥ १४ ॥

एतौ भवभूतेः।

यदैवारभ्यान्तः पदमुपहितं पक्ष्मलदृशा
तदैवेदं चेतः क्वचिदपि [ न रम्येऽपि ] रमते।
इदं चान्यज्जातं स्मरणपुनरुक्तव्यसनिन-
स्तदाकाराः सर्वे मम खलु पदार्थाः परिणताः ॥ १५ ॥

यत्सारैरिव पङ्कजस्य घटितं यच्चन्द्रगर्भादिव
प्रोत्कीर्णं यदनङ्गसायकशिखाभागेन संवर्धितम्।
यत्संसिच्य सुधारसैरिव रतेरास्थानभूमीकृतं
तद्भूयोऽपि कदा सरोरुहदृशः पश्यामि तस्या मुखम् ॥ १६ ॥

रुद्रस्य।

तैस्तैश्चाटुभिराज्ञया किल तदा वृत्ते रतिव्यत्यये
लज्जामन्थरया तया निवसिते भ्रान्त्या मदीयेंऽशुके।
तत्पट्टांशुकमुद्वहन्नहमपि स्मित्वा यदुक्तोऽधुना
वेषो युज्यत एष एव हि तवेत्येतन्न विस्मर्यते ॥ १७ ॥

अमरुकस्य।

प्रियायाः प्रत्यूषे [ गं ] लितकबरीबन्धनविधा-
वुदञ्चद्दोर्वल्लीदर [ गं ] लितचेलाञ्चलमुरः।
घनाकूतं पश्यत्यथ मयि समन्दाक्षहसितं
नमन्त्यास्तद्वक्त्रं यदि लिखितुमीशो मनसिजः ॥ १८ ॥

उमापतिधरस्य।

१ निरस्येति क, २ दलि, क, ख, च, ३ दलि, क, ख, च,

पादाङ्गुष्ठेन भूमिं किसलयरुचिना सापदेशं लिखन्ती
भूयोभूयः क्षिपन्ती मयि सितशबले लोचने लोलतारे ।
वक्त्रं ह्रीनम्रमीषत्स्फुरदधरपुटं वाक्यगर्भं दधाना
यन्मां नोवाच किञ्चित्स्थितमपि हृदये मानसं तद्दुनोति ॥ १९ ॥

कस्यापि ।

याताः किन्न मिलन्ति सुन्दरि पुनश्चिन्ता त्वया मत्कृते
नो कार्या नितरां कृशाऽसि कथयत्येवं सबाष्पे मयि ।
लज्जामन्थरतारकेण निपतत्स्फीताश्रुणा चक्षुषा
दृष्ट्वा मां हसितेन भाविमरणोत्साहस्तया सूचितः ॥ २० ॥

अमरुकस्य

व्रीडायोगान्नतवदनया सन्निधाने गुरूणां
बद्धोत्कम्पं स्तनकलशयोर्मन्युमन्तर्निरुध्य[२] ।
तिष्ठेत्युक्तं किमिव न तया यत्समुत्सृज्य बाष्पं
मय्यासक्तश्चकितहरिणीहारिनेत्रत्रिभागः ॥ २१ ॥

कस्यापि[३] ।

बाणान् संहर मुञ्च कार्मुकलतां लक्ष्यं तव त्र्यम्बकः
के नामात्र वयं शिरीषकलिकाकल्पं यदीयं मनः ।
तत्कारुण्यपरिग्रहात् कुरु दयामस्मिन्विधेये जने
स्वामिन्मन्मथ तादृशं पुनरपि स्वप्नामृतं दर्शय ॥ २२ ॥

राजशेखरस्य ।

अस्थाने जनसङ्कटे मयि मनाक् काञ्चीं समास्कन्दति
व्यालोले रशनांशुके विगलिते नीते च नाभेरधः ।
धन्योऽयं स करः कुरङ्गकदृशा तस्मिन्नवस्थान्तरे
कम्पातङ्ककरंबिताङ्गलतया यस्यावकाशः कृतः ॥ २३ ॥

निकारकणिका कृता हरिणलोचने नो मया
मुधैव करसंपुटे मुखविधुः किमावासितः ।

१ मृदु, क, पाठभेदः २ बाष्प. क. ख. च. मन्युमिति शार्ङ्गधरीयः पाठः ३ नेत्रत्रिभागब्रह्मयशस्विनः, शार्ङ्गध.

इतीयति मयोदिते तरलिताङ्गुलीकोटरै-
विलोक्य विहितस्तया रभसहासकण्ठग्रहः ॥ २४ ॥

भट्टवामनस्य।

जाने कोपपराङ्मुखी प्रियतमा स्वप्नेऽद्य दृष्टा मया
मा मा संस्पृश पाणिनेति रुदती गन्तुं प्रवृत्ता ततः।
नो यावत्परिरभ्य चाटुशतकैराश्वासयामि क्षणं
भ्रातस्तावदहं शठेन विधिना निद्रादरिद्रीकृतः ॥ २५ ॥

निद्रादरिद्रस्य।

निद्रार्धमीलितदृशो मदमन्थराणि
नात्यर्थवन्ति न च यानि निरर्थकानि।
अद्यापि मे मृगदृशो मधुराणि तस्या-
स्तान्यक्षराणि हृदये किमपि ध्वनन्ति ॥ २६ ॥

कलशस्य।

पुरस्तन्व्या गोत्रस्खलनचकितोऽहं नतमुखः
प्रवृत्तो वैलक्ष्यात्किमपि लिखितुं दैवहतकः।
स्फुटो रेखान्यासः कथमपि स तादृक् परिणतो
गता येन व्यक्तिं पुनरवयवैः सैव तरुणी ॥ २७ ॥

डिंभोकस्य।

प्रथमविरहखेदव्यापिनी यत्र बाला
वसति नयनवान्तैरश्रुभिर्धौतगण्डा।
प्रहतमुरजवृन्दध्वानवद्भिः पयोदैः
कथमलिकुलनीलैः साऽपि दिक्संनिरुद्धा ॥ २८ ॥

बियाकस्य।

सन्तापो हृदय स्मरानलकृतः स प्रत्यहं सह्यतां
नास्त्येवोपशमोऽस्य संप्रति पुनः किं त्वं मुधा ताम्यसि।
यन्मूढेन मया तथा कथमपि प्राप्तो गृहीत्वा परं
विन्यस्तस्त्वयि सान्द्रचन्दनरसस्पर्शो न तस्याः करः ॥ २९ ॥

श्रीहर्षस्य।

क्वाकार्यं शशलक्ष्मणः क्व च कुलं भूयोऽपि दृश्येत सा
दोषाणां प्रशमाय मे श्रुतमहो कोपेऽपि कान्तं मुखं ।
किं वक्ष्यन्त्यपकल्मषाः कृतधियः स्वप्नेऽपि सा दुर्लभा
चेतस्स्वास्थ्यमुपैहि कः खलु युवा धन्योऽधरं पास्यति ॥ ३० ॥

कालिदासस्य[1] ।

हे यामिनीश जडिमा कतमस्तवैष
संघर्ष[2]मावहसि येन मुखेन तस्याः ।
त्वं वह्निमुद्गिरसि तद्विरहे करोति
पीयूषवर्षमिह तद्भवता विनापि ॥ ३१ ॥

गोत्रानन्दनस्य ।

पञ्चत्वं तनुरेतु भूतनिवहाः स्वांशं विशन्तु प्रभो
त्वां याचे द्रुहिण प्रणम्य शिरसा भूयोऽपि मे सन्निवाति ।
तद्वापीषु पयस्तदीयमुकुरे ज्योतिस्तदीयालय-
व्योम्नि व्योम तदीयवर्त्मनि धरा तत्तालवृन्तेऽनिलः ॥ ३२ ॥

आकाशपोलेः ।

आक्रन्दाः स्तनितैर्विलोचनजलान्यश्रान्तधाराम्बुभि-
स्तद्विच्छेदभवाश्च शोकशिखिनस्तुल्यास्तडिद्विभ्रमैः ।
अन्तर्मे दयितामुखं तव शशी वृत्तिस्समैवावयो-
स्तत्किं मामनिशं सखे जलधर त्वं दग्धुमेवोद्यतः ॥ ३३ ॥

यशोवर्मणः ।

भ्रमय जलदानम्भोगर्भान् प्रमोदय चातकान्
कलय शिखिनः केका[3]गर्भान् कठोरय केतकान् ।
विरहिणि जने मूर्च्छां लब्ध्वा विनोदयति व्यथा-
मकरुण पुनस्संज्ञाव्याधिं विधाय किमीहसे ॥ ३४ ॥

[ भवभूतेः । ]

१. अयं नामनिर्देशः क. पुस्तके । २. संह. ख. ग. च. ३ केकोत्कण्ठानिति मालतीमाधवे ।

रक्ताशोक कृशोदरी क्व नु गता त्यक्त्वाऽनुरक्तं जनं
नो दृष्टेति मुधैव कम्पयसि किं वातावधूतं शिरः।
उत्कण्ठाघटमानषट्पदघटासंघट्टदष्टच्छद-
स्तत्पादाहतिमन्तरेण भवतः पुष्पोद्गमोऽयं कुतः ॥ ३५ ॥

वसुनागस्य।

मृणालीहारोऽयं न भुजगपतिश्चन्दनरसो
न भस्मेदं कण्ठे कुवलयदलाली न गरलम्।
सिताम्भोजं पाणौ लसति न कपालं मयि मुधा
पुरारातिक्रोधात् स्मर किमनभिज्ञः[1] प्रहरसि ॥ ३६ ॥

उमापतिधरस्य।

ज्योत्स्नां श्यामलिमानमानयत भोः सान्द्रैर्मषीकूर्चकै-
र्मन्त्रं तन्त्रमथ प्रयुज्य हरत श्वेतोत्पलानां स्मितम्।
चन्द्रं चूर्णयत क्षणाच्च कणशः कृत्वा शिलापट्टके
येन द्रष्टुमहं क्षमे दशदिशस्तद्वक्त्रमुद्राङ्किताः ॥ ३७ ॥

राजशेखरस्य।

स सन्तापः क्रूरः कुसुमसुभगा साऽङ्गलतिका
विपक्षाच्चत्तावत् भयमतनु लज्जासहचरम्।
कथं तन्न प्राणानहह दयिता शान्तमथवा
शिवं शिल्पाश्चर्ये नियतमिह [ नि[2] ] ध्यास्यति विधिः ॥ ३८ ॥

गोत्रानन्दनस्य।

दलति हृदयं गाढोद्वेगं द्विधा तु न भिद्यते
वहति विकलः कायो मोहं न मुञ्चति चेतनाम्।
ज्वलयति तनूमन्तर्दाहः करोति न भस्मसात्
प्रहरति विधिर्मर्मच्छेदी न कृन्तति जीवितम् ॥ ३९ ॥

---

१ किमिममन. कं. २ विध्या. क. ख. च.

परिच्छेदातीतः स किल वचनानामविषयः
　पुनर्जन्मन्यस्मिन्ननु भवपथं यो न गतवान् ।
विवेकप्रध्वंसादुपचितमहामोहगहनो
　विकारः कोऽप्यन्तर्जडयति च तापं च कुरुते ॥ ४० ॥

एतौ भवभूतेः ।

घर्मांशुर्भगवानसूत यमुनां ताप्या (?) कृतं गङ्गया
　पाथोऽस्याः क्वथितं पुरारिमुकुटे नेत्रानलज्वालया ।
स्यन्दैश्चन्दनशाखिनां शतमुखैः किर्मीरनीरोर्मयः
　सेवायै मलयाचलेन्द्रसरितः संभूय तिष्ठन्तु मे ॥ ४१ ॥

प्रालेयाद्रिस्त्वरितमुरसि क्षिप्यतां शैत्यहेतो-
　रास्तां यद्वा स खलु निखिलः स्याद्विलीया[श्मे]शेषः
त्यक्त्वा क्षारं जलधिसलिलं जाह्नवीतोयपूर्णा-
　स्तूर्णं गात्रे मम जलमुचः कञ्चुकत्वं प्रयान्तु ॥ ४२ ॥

बिल्हणस्यैतौ ।

शीतांशोरमृतच्छटा यदि करास्त(ःक)स्मान्मनो मे दृशं
　सं[प्लु]ष्यन्त्यथ कालकूटपटलीसंवाससंदूषिताः ।
किं प्राणान्न हरन्त्युत प्रियतमासञ्जल्पमन्त्राक्षरै
　रक्ष्यन्ते किमु मोहमेमि हहहा नो वेद्मि केयं गतिः ॥ ४३ ॥

श्रीमदभिनवगुप्तस्य ।

विलीयेन्दुस्साक्षादमृतमयवापी यदि भवेत्
　कलङ्कस्तत्रत्यो यदि च विकचेन्दीवरवनम् ।
ततः स्नानक्रीडाजनितजडभावैरवयवैः
　कदाचिन्मुञ्चेयं मदनशिखिपीडापरिभवम् ॥ ४४ ॥

राजशेखरस्य ।

॥ इति श्रीमदारोहकभगदत्तजल्हणविरचितायां सूक्तिमुक्तावल्यां वियोगिप्रलापप्रकरणम् ॥

---

१ मशेषः. क. ख. च. २ संपुष्य. क. ख. च.

# नायकस्याग्रे दूत्युक्तिः ( ४४ )



स्मरदवथुनिमित्तं गूढमुन्नेतुमस्याः
सुभग तव कथायां प्रस्तुतायां सखीभिः ।
वदति विततपृष्ठोदस्तपीनस्तनाग्रा
बत वलयितबाहूज्जृम्भितैस्साङ्गभङ्गैः ॥ १ ॥

कस्यापि ।

मा गच्छ प्रमदाप्रिय प्रियशतैरभ्यर्थितस्त्वं मया
बाला प्राङ्गणमागतेन भवता प्राप्नोत्यवस्थां पराम् ।
किं चास्याः कुचकुम्भपीडनपरैरङ्गैरनङ्गातुरै-
स्त्रुट्यत्कञ्चुकजालकैरनुदिनं निस्सूत्रमस्मद्गृहम् ॥ २ ॥

मोरिकायाः ।

गन्तुं प्राङ्गणतो ददाति न मुहुःस्तम्भः कुरङ्गीदृशः
साकूतं स्वरभङ्गविभ्रमकला दत्ते न वक्तुं कियत् ।
मार्गे यान्तमवेक्षितुं न सहते त्वां बाष्पवारिप्लव-
स्तस्याः कञ्चुकिनो भवन्ति सुभग त्वद्दर्शने सात्त्विकाः ॥ ३ ॥

हरिहरस्य ।

श्वासैस्त्रुट्यति वेगिभिर्नयनयोरुष्णाम्बुभिः क्लाम्यति
स्वेदाम्भोलववाहिना करतलेनावर्जिता म्लायति ।
इत्यालोक्य तया चलद्वदनया तिर्यक्पतन्नेत्रया
दूरोत्सारितहस्तया तव सखे क्रीडालता सिच्यते ॥ ४ ॥

[1]रत्नचन्द्रस्य ।

त्वद्देशागतमारुतेन मृदुना सञ्जातरोमाञ्चया
त्वद्रूपाङ्कितचारुचित्रफलकेनावर्जयन्त्या दृशम् ।
त्वन्नामामृतसिक्तकर्णपुटया त्वन्मार्गवातायने
नीचैः पञ्चमगीतिगर्भितगिरा नक्तं दिवं स्थीयते ॥ ५ ॥

त्रिविक्रमस्य ।

१ चन्द्रकवेरिति क. पाठभेदः

अङ्गेऽनङ्गज्वरहुतवहश्चक्षुषि ध्यानमुद्रा
कण्ठे जीवः करकिसलये दीर्घशायी कपोलः ।
अंसे वेणी कुचपरिसरे चन्दनं वाचि मौनं
तस्यास्सर्वं स्थितमिति ननु त्वां विना क्वापि चेतः ॥ ६ ॥

राजशेखरस्य[1] ।

विलिम्पत्येतस्मिन्मलयजरसद्रोणमहसा
दिशां चक्रं चन्द्रे सुकृतमथ तस्या मृगदृशः ।
दृशोर्बाष्पः पाणौ वदनमसवः कण्ठकुहरे
हृदि त्वं ह्रीः पृष्ठे वचसि च गुणा एव भवतः ॥ ७ ॥

राजशेखरस्य[2] ।

श्वासेषु प्रथिमा मुखं करतले गण्डस्थले पाण्डिमा
मुद्रा वाचि विलोचनेऽश्रुपटलं देहे च दाहोदयः ।
एतावत्कथितं यदस्ति हृदये तस्याः कृशाङ्ग्याः पुन-
स्तज्जानासि ननु त्वमेव सुभग श्लाघ्या स्थितिस्तत्र या ॥ ८ ॥

गोत्रानन्दनस्य ।

चन्द्रं चन्दनकर्दमेन लिखितं सा मार्ष्टि दष्टाधरा
कामः पुष्पशरः किलेति सुमनोवर्गान् लुनीते च यत् ।
वन्द्यं निन्दति यच्च मन्मथमसौ भङ्क्त्वाऽग्रहस्ताङ्गुली-
स्तत्कामं सुभग त्वया वरतनुर्वातूलतां शिक्षिता ॥ ९ ॥

नन्दनस्य ।

अस्मिन् चन्द्रमसि प्रसन्नमहसि व्याकोचकुन्दत्विषि
प्राचीनं खमुपेयुषि त्वयि गते दूरं निजप्रेयसि ।
श्वासः कैरवकोरकीयति मुखं तस्यास्सरोजीयति
क्षीरोदीयति मन्मथो दृगपि च द्राक् चन्द्रकान्तीयति ॥ १० ॥

भीमटस्य[3] ।

१. क्षेमेन्द्रस्य. ग. घ. २. अयं नामनिर्देशः क. पुस्तके ३. ग. घ.

निवसति यदि तव हृदये सा बाला सुभग वज्रघटितेऽस्मिन्।
तत्खलु कुशलं तस्या मदनशरैस्ताड्यमानायाः ॥ ११ ॥

तस्याः स्मरन्त्याः सुभग त्वदीयं मुहुर्मुहुर्मन्मथचेष्टितं तत्।
बभूव दृष्टिः क्षणमात्तज्रम्पा[1] क्षणं प्रफुल्ला क्षणमश्रुमिश्रा ॥ १२ ॥

श्रीवैद्यभानुपण्डितस्यैतौ।

उन्मीलन्ति नखैर्लुनीहि वहति क्षौमाञ्चलेनावृणु
क्रीडाकाननमाश्रयन्ति वलयक्वाणैस्समुत्त्रासय।
इत्थं वञ्जुलदक्षिणानिलकुहूकण्ठीषु साङ्केतिक-
व्याहारास्सुभग त्वदीयविरहे तस्यास्सखीनां मिथः ॥ १३ ॥

कस्यापि[2]।

वाचस्तावदपेक्षते पिकयुवा लम्बालकानां श्रियः
भृङ्गाली विरुणद्धि चूतकलिका सौभाग्यमाशंसति।
किञ्चान्यत्कथयामि निर्दय दशा तस्यास्तथा वर्तते
निश्वासानपि हन्तुमिच्छति यथा क्रूरो वसन्तानिलः ॥ १४ ॥

परशुरामस्य।

धत्ते दृष्टिमधीतविभ्रमलवां सा पुष्पलावीजने
चैत्रस्य क्षणमादरेण महता मौहूर्तिकान् पृच्छति।
श्येना[त्?]तुष्यति कोकिलध्वनिरुषा सन्त्यज्य लीलाशुकान्
निश्शोक त्वयि दुर्लभे किमपरं शक्यं वराक्या तया ॥ १५ ॥

नीरागा मृगलाञ्छने मुखमपि स्वं नेक्षते दर्पणे
त्रस्ता कोकिलकूजितादपि गिरं नोन्मुद्रयत्यात्मनः।
चित्रं दुस्सहदाहदायिनि धृतद्वेषाऽपि पुष्पायुधे
मुग्धा सा सुभग त्वयि प्रतिपदं प्रेमाधिकं पुष्यति ॥ १६ ॥

१ मातृजृम्भा. ख. २ सत्कविमिश्रस्येति, शार्ङ्गधरपद्धतौ।

स्पृशन्त्याः क्षामत्वं मदनशरटङ्कव्यतिकरात्
　कुरङ्गाक्ष्यास्तस्याश्शृणु सुभग कौतूहलमिदम् ।
अपूर्वेति त्रासात् परिहरति तां केलिहरिणी
　न विश्वेऽप्याश्वासं दधति गृहलीलाशकुनयः ॥ १७ ॥

गृहीतं ताम्बूलं परिजनवचोभिः कथमपि
　स्मरत्यन्तः शून्या सुभग विगतायामपि निशि ।
तथैवास्ते हस्तः कलितफणिवल्लीकिसलय-
　स्तथैवास्यं तस्याः क्रमुकफलपालीपरिचितम् ॥ १८ ॥

तीव्रः कोऽपि विजृम्भते वरतनोस्त्वद्विप्रयोगज्वरः
　किं ब्रूमः सुभग त्वया परिजनः कौतूहलाद्दृश्यताम् ।
कण्ठे शेषमधैर्यगद्गदगिरा कृत्वा सखीनां तया
　गौराङ्गि त्वमनङ्गतापसुहृदः सर्वाः परित्याजिताः(?) ॥ १९ ॥

गलत्येका मूर्च्छा भवति पुनरन्या यदनयोः
　किमप्यासीन्मध्यं सुभग निखिलायामपि निशि ।
लिखन्त्यास्तत्रास्याः कुसुमशरलेखं तव कृते
　समाप्तिं स्वस्तीति प्रथमपदभागोऽपि न गतः ॥ २० ॥

बिह्लणस्यैते ।

चित्राय त्वयि चिन्तिते तनुभुवा सज्यं वितेने धनु-
　र्वर्तिं धर्तुमुपागतेऽङ्गुलियुगे बाणा गुणे योजिताः ।
आरब्धे तव चित्रकर्मणि धनुर्मुक्तास्त्रभि(खि)न्ना भृशं
　भित्तिं द्रागवलम्ब्य निर्दय चिरं सा तत्र चित्रायते ॥ २१ ॥

सिंहलपतेः ।

त्वामन्तः स्थिरभावनापरिणतं मत्वा पुरोऽवस्थितं
　यावद्दोर्वलयं करोति रभसान्मुग्धा समालिङ्गितुम् ।
तावत्तां निजमेव देहमचिरादालिङ्ग्य बाधातुरां
　दृष्ट्वा वृष्टिजलच्छलेन रुदितं मन्ये पयोदैरपि ॥ २२ ॥

त्वां चिन्तापरिकल्पितं सुभग सा संभाव्य रोमाञ्चिता
शून्यालिङ्गनसञ्चलद्भुजयुगेनात्मानमालिङ्गति ।
किञ्चान्यद्विरहव्यथाप्रशमनीं संप्राप्य मूर्च्छां चिरात्
प्रत्युज्जीवति कर्णमूलपतितैस्त्वन्नाममन्त्राक्षरैः ॥ २३ ॥

तन्वङ्ग्यास्त्वमिति प्रसादविशदं नासीति खेदालसं
चक्षुर्द्वारपथावतारिणि जने व्यापारयन्त्या मुहुः ।
हर्षार्त्तिप्रभवाः प्रतिक्षणभुवः स्वेदाम्बुदाहज्वरे
नेत्राम्भःकणिकाः पयोधरतटे पुष्यन्ति शुष्यन्ति च ॥ २४ ॥

केषामप्येते ।

तस्यास्तापमहं नृशंस कथयाम्येणीदृशस्ते कथं
पद्मिन्यास्सरसं दलं विनिहितं यस्यास्सतापोरसि ।
आदौ शुष्यति संकुचत्यनु ततश्चूर्णत्वमापद्यते
पश्चान्मुर्मुरतां दधद्दहति च श्वासावधूतं सखीम् ॥ २५ ॥

[गे]हादङ्गणमङ्गणादपि बहिर्बाह्याच्चलन्ती गृहं
तामार्तिं यदि वेत्ति सैव सुमुखी किञ्चान्यदाचक्ष्महे ।
पर्यङ्कोऽपि तवाङ्गसङ्गसुभगः स्वेदाम्भसां निर्झरै-
र्धारामण्डपतामनीयत तया तस्मिन्लुठन्त्या मुहुः ॥ २६ ॥

तस्यास्सदा विरहवह्निशिखाकलाप-
तप्ते स्थितोऽसि हृदये सततं प्रियायाः ।
प्रालेयशीकरसमे हृदि सा कृपालो
बाला क्षणं वसति नैव खलु त्वदीये ॥ २७ ॥

सखीभिक्षां याचे बत नतशिरास्त्वामियमहं
न चेदस्ति प्रेमा कुरु तदपि कारुण्यकणिकाम् ।
अवस्था सा तस्यास्सुकृतमय यस्याः किमपरं
प्रमोहे विश्रामस्त्वमथ मरणं वा प्रतिकृतिः ॥ २८ ॥

केषामप्येते ।

अच्छिन्नं नयनाश्रु बन्धुषु कृतं तापस्सखीष्वाहितो
न्यस्तं दैन्यमशेषतः परिजने चिन्ता गुरुभ्योऽर्पिता ।
अद्य श्वः किल निर्वृतिं व्रजति सा श्वासैः परं खिद्यते
विस्रब्धो भव विप्रयोगजनितं दुःखं विभक्तं तया ॥ २९ ॥

अमरुकस्य ।

संप्राप्तेऽवधिवासरे क्षणमसौ त्वद्वर्त्मवातायनं
वारं वारमुपेत्य निष्क्रिय तया निश्चित्य किञ्चिच्चिरम् ।
संप्रत्येव निवेद्य केलिकुररीः सास्रं सखीभ्यः शिशो-
र्माधव्यास्सहकारकेण करुणं पाणिग्रहो निर्मितः ॥ ३० ॥

कस्यापि ।

विलासिन्नासीने प्रतिवसतिमध्यं त्वयि तदा
दशां दीप्तां कृत्वा गृहमनु पदान्येत्य कतिचित् ।
मरु[ त्व ]न्तर्वाति द्रुतमिति भवद्दर्शनधिया
प्रदीपो [ द्वा ]राणां शत[ मिति ] तया किं न शमितः ॥ ३१ ॥

प्रदीपवसुन्धरस्य ।

तन्वी सङ्केतवेश्मन्यतनुतरुतले सा त्वदर्थं शयाना
जानीते नोपधानीकृतमपि भुजगं कुण्डलीभूतमन्तः ।
तस्या धम्मिल्लवान्तप्रसवपरिमलश्वाससौरभ्यलोभात्
सोऽपि श्रीखण्डलीलां सुचिरमनुभवन्नाविरासीदकम्पः ॥ ३२ ॥

चित्रोत्कीर्णादपि विषधराद्भीतिभाजो निशायां
किं तद्ब्रूमस्त्वदभिसरणे साहसं नाथ तस्याः ।
ध्वान्ते यान्त्या यदतिनिभृतं मुग्धयाऽऽत्मप्रकाश-
त्रासात्पाणिः पथि फणिफणारत्नरोधी व्यधायि ॥ ३३ ॥

हरिहरस्यैतौ ।

॥ इति श्रीभगदत्तजल्हणविरचितायां सूक्तिमुक्तावल्यां विप्रलम्भे दूत्युक्तिः ॥

---

१. वा. क. ख. च. २ मपि. क. ख. च.

# नायिकां प्रति विरहिसंदेशः (४५)

जीमूतप्रथमाम्बुशीकरवहश्शीतः पुरो मारुतः
पृथ्वीं प्रौढनिदाघचण्डकिरणप्लोषावसन्नामिव।
तामाश्वासमलम्भयत्कृशतनुं प्रस्थापितः प्रेयसा
सन्देशः परिपीडितः प्रणतिभिस्तस्याः सखीनामपि॥ १॥

वेणीबन्धनशेषितैर्विलुलितैरुत्तंसितः कुन्तलै-
र्विन्यस्तः कुचकुम्भयोरशिशिरैर्बाष्पाम्बुभिस्तप्तयोः।
अक्ष्णोस्सन्ततरोदनादरुणयोराश्लेषितःश्लाघितो
लेखः किं तदकारि यन्न सदृशं प्रेम्णोऽतिसीम्नस्तया॥ २॥

उद्वेष्ट्य स्वयमेव लेखमुदितप्रस्वेदकम्पाङ्गुलि-
स्तस्मिन्सेकविलुप्तशेषशिथिलं दृष्ट्वा लिपिप्रक्रमम्।
एतत् किन्नु हताऽस्मि सम्प्रति दशा तस्यैवमासीदियं
बाष्पो हन्त करस्य कम्पितमिदं हन्तेति सा रोदिति॥ ३॥

बाष्पस्तस्य न जायते किमु न किं लेखे करः कंपते
जानीषे किमु सांप्रतं त्वयि तथा निघ्नं तदीयं मनः।
इत्थं तामभिधाय तत्करतलादादाय पत्रं सखी
काचिद्वाचयति प्रगल्भवचना कौतूहलेऽपि क्रमात्॥ ४॥

मार्गे मे निरपायतां परिणतिं कार्यस्य भद्रोत्तरां
श्रुत्वा लेखहराननान्मम परावृत्तिं च नेदीयसीम्।
स्वस्थैवास्व तव क्रमे मम दशा या पूर्वमुक्ता मया
भूयस्संस्मर तां च मानिनि परो माभूद्द्विषामुत्सवः॥ ५॥

शृंगारकिन्नराञ्नाटकादेते।

स्थानान्निर्गत्य दूरं व्रजति मयि चिरं मुक्तकण्ठं रुदित्वा
पश्चादुन्मृज्य नेत्रे प्रणतिमुपगता वेपमानाङ्गयष्टिः।
कान्ते यन्मामवोचः प्रलयघनघटाटोपबद्धान्धकारे
काले कापालिकोऽपि प्रवसति न गृहात्तन्मनो मे दुनोति॥ ६॥

१ चतुरा. क. पाठभेदः

त्वद्रूपामृतपानदुर्ललितया दृष्ट्या क्व विश्रम्यतां
त्वद्वाक्यश्रवणाभियोगपरयोः श्राव्यं कुतः श्रोत्रयोः।
एभिस्त्वत्परिरम्भनिर्भररसैरङ्गैः कथं स्थीयतां
कष्टं त्वद्विरहेण सम्प्रति वयं कष्टामवस्थां गताः ॥ ७ ॥

कयोरप्येतौ।

यत्त्वन्नेत्रसमानकान्ति सलिले मग्नं तदिन्दीवरं
मेघैरन्तरितः प्रिये तव मुखच्छायानुकारी शशी।
येऽपि त्वद्गमनानुकारिगतयस्ते राजहंसा गता-
स्त्वत्सादृश्यविनोदमात्रमपि मे दैवेन न क्षम्यते ॥ ८ ॥

श्रीयशोवर्मणः।

नित्यं त्वद्गुणकीर्तनेन निबिडं रोमाञ्चितैरङ्गकै-
स्त्वद्वक्त्रेन्दुविलोकनैकमनसः कान्ते सुखेनास्महे।
किन्तु त्वद्विरहोत्थितोद्धुराशिखिज्वालाप्लुताङ्गे मयि
प्रस्थाप्यः कृपया निजाङ्गिकमलोदन्ताम्बुदः शान्तये ॥ ९ ॥

कस्यापि।

संक्षिप्यन्ते क्षणमिव कथं दीर्घयामास्त्रियामा-
स्सर्वावस्थास्वहरपि कथं मन्दमन्दातपं स्यात्।
इत्थं चेतश्चटुलनयने दुर्लभप्रार्थनं मे
गाढोष्माभिः कृतमशरणं त्वद्वियोगव्यथाभिः ॥ १० ॥

एतस्मान्मां कुशलिनमभिज्ञानदानाद्विदित्वा
मा कौलीनादसितनयने मय्यविश्वासिनी भूः।
स्नेहानाहुः किमपि विरहे ध्वंसिनस्ते ह्यभोगा-
दिष्टे वस्तुन्युपचितरसाः प्रेमराशीभवन्ति ॥ ११ ॥

कालिदासस्यैतौ।

॥ इति भगदत्तजल्हणविरचितायां सूक्तिमुक्तावल्यां विरहिसंदेशपद्धतिः ॥

---

१ क्वै कवि. क. ख. च. २ तस्मर. क. ख. च.

# नायिकां प्रति विरहिणोऽवस्थाकथनम् ( ४६ )



पृष्टो लेखहरस्स निर्गमदिनादारभ्य यं प्रेयसो
वृत्तान्तं तमखण्डितं मृगदृशो निर्व्याजमाह क्रमात् ।
कुर्वाणः कथयैव तस्य करुणातङ्कप्रमोहोत्तरां
तस्यास्तस्य सखीजनस्य च दशां प्रेमप्रकर्षोचिताम् ॥ १ ॥

संसक्तेषु दृढं मिथस्तरुलताद्वन्द्वेषु चिन्तामयीं
प्रायो बाष्पमयीं शकुन्तमिथुनक्रीडासु कुर्वन् दृशम् ।
पश्यन्दुःखदशामिव प्रणयिनीश्चन्योपकण्ठान्मृगान्
कुर्वाणः करुणव्यथाभयमयानस्मान् स मार्गानगात् ॥ २ ॥

ब्रूमः किं परमत्यगात्तव पतिस्तास्ता निशाश्चन्द्रिका-
मल्लीकैरवगन्धमन्दमरुतां मध्येऽपि शान्तव्यथः ।
त्वां सङ्कल्पपथे समक्षयति यद्वाघीयसी जागरा
यच्चाहन्ति दुरन्तदुस्सहतरां मोहो मनोवेदनाम् ॥ ३ ॥

तत्रैकं करिणीवियुक्तमतटाघातक्रियाकौतुकं
चिन्तादीनमसल्लकीकिसलयग्रासाभिलाषं गजम् ।
दृष्ट्वा लोचनवारि भूरि विसृजन् ब्रूते स्म ते वल्लभः
प्राचीनं गजराज पातकमहो नौ तुल्यमासीदिति ॥ ४ ॥

शृणु परमिदमन्त्ये यामिनीनां स यामे
कथमपि सुकृतैर्नः किञ्चिदायातनिद्रः ।
सुतनु किमिदमस्यास्त्वदृशः क्वापि नान्तः
किमिति वलितबाहुर्व्याहरन् बोधमेति ॥ ५ ॥

सूक्तिसहस्रादेते ।

पदशब्दलीनहृदयो रूपालङ्कारभावनानिपुणः ।
कविरिव बञ्चितनिद्रस्तरुणि तवार्थे भृशं स युवा ॥ ६ ॥

॥ इति भगदत्तजल्हणविरचितायां सूक्तिमुक्तावल्यां विरहिणोऽवस्थाकथनम् ॥

# दूतीं प्रति नायिकाप्रश्नाः ( ४७ )



किं त्वं दूति गता गताऽस्मि सुभगे तस्यान्तिकं कामिनः
दृष्टः किं सुचिरं करोति किमसौ वीणाविनोदक्रियाम् ।
सौभाग्योदयगर्वितः किमवदन्नैवोत्तरं दत्तवान्
किं गर्वान्न हि बाष्पगद्गदतया धूर्तस्य माया हि सा ॥ १ ॥

कथय निपुणे कस्मिन् दृष्टः कथं नु कियच्चिरं
किमभि[1]लिखितं किं[2] तेनोक्तं कदा स इहैष्यति ।
इति बहुविधप्रेमोल्लासप्रकल्पितविस्तराः
प्रियतमकथाः स्वल्पेऽप्यर्थे प्रयान्ति न नि[3]ष्ठताम् ॥ २ ॥

कयोरप्येतौ ।

अलमलमघृणस्य तस्य नाम्ना पुनरपि सैव कथा गतस्स कालः ।
कथय कथय वा तथाऽपि दूति प्रतिवचनं द्विषतोऽपि माननीयम् ॥ ३ ॥

॥ इति भगदत्त जल्हणविरचितायां सूक्तिमुक्तावल्यां दूतीं प्रति नायिकाप्रश्नाः ॥



---

१. भिलषि. क. ख. च. २. कान्तेनो. क. ख. च. ३ निर्मि. क. ख. च. तत्तत्स्थाने उपरि प्रदर्शिताः पाठाः शार्ङ्गधरपद्धतीयाः ।

# दूत्युपहासपद्धतिः (४८)



अनेन वीतरागेण बुद्धेनेवाधरेण ते।
दूति निर्व्याजमाख्याता सर्ववस्तुषु शून्यता ॥ १ ॥

निश्शेषच्युतचन्दनं स्तनतटं निर्मृष्टरागोऽधरो
नेत्रे दूरमनञ्जने पुलकिता तन्वी तवेयं तनुः।
मिथ्यावादिनि दूति बान्धवजनस्याज्ञातपीडागमे
वापीं स्नातुमितो गताऽसि न पुनस्तस्याधमस्यान्तिकम् ॥ २ ॥

कयोरप्येतौ।

अधरेणोन्नतिभाजा भुजङ्गपरिपीडितेन ते दूति।
संक्षोभितं मनो मे जलनिधिरिव मन्दरागेण ॥ ३ ॥

विशाल्यस्य।

बहुनात्र किमुक्तेन दूति मत्कार्यसिद्धये।
स्वमांसान्यपि दत्तानि वस्तुष्वन्येषु का कथा ॥ ४ ॥

वररुचेः।

श्वासः किं त्वरितागतात्पुलकिता कस्मात्प्रसादः कृतः
स्रस्ता वेण्यपि पादयोर्निपतनात् नीवी गमादागमात्।
स्वेदार्द्रं मुखमातपाकुलतया क्षामा किमत्युक्तिभि-
र्दूति म्लानसरोरुहद्युतिधरस्योष्ठस्य किं वक्ष्यसि ॥ ५ ॥

शिलाभट्टारिकायाः।

नायातो यदि तादृशं स शपथं कृत्वाऽपि दूति प्रिय-
स्तात्किं कोपनया त्वया स्वदशनैरग्राधरः खण्डितः।
स्वेदाम्भःकणदायि वेपितमिदं त्यक्त्वा भज स्वच्छतां[2]
को लोकस्य सखि स्वभावकुटिलस्यान्तर्गतं ज्ञास्यति ॥ ६ ॥

डिंबोकस्य।

[3]रजन्यामन्यस्यां सुरतपरिवर्तादनुचितं
मदीयं यद्वासः कथमपि हृतं तेन सुहृदा।
त्वया प्रत्यानीतं निजवसनदानात् पुनरिदं
कुतस्त्वादृक् दूति स्खलितशमनोपायनिपुणा ॥ ७ ॥

॥ इति भगदत्तजल्हणविरचितायां सूक्तिमुक्तावल्यां विप्रलंभे दूत्युपहासः ॥

१. जवा. क. पाठभेदः २. स्वस्थ. क. पाठभेदः ३. अयं श्लोकः बीजाकरस्येति शार्ङ्गधरपद्धतौ.

# नायिकानायकयोरवलोकनम् ( ४९ )



## तत्र नायिकावलोकनम्

नामापि स्त्रीति संह्लादि विकरोत्येव मानसम् ।
किं पुनर्दर्शनं तस्या विलासोल्लासितभ्रुवः ॥ १ ॥

कामन्दकस्य ।

प्रियादर्शनमेवास्तु किमन्यैर्दर्शनान्तरैः ।
प्राप्यते तेन निर्वाणं सरागेणापि चेतसा ॥ २ ॥

अस्यां नेत्रपथं मन्ये गतायां लोलचक्षुषि ।
भवन्ति पञ्चबाणस्य स्वबाणा एव वैरिणः ॥ ३ ॥

कयोरप्येतौ ।

यन्निष्पीड्य विरिञ्चेन स्यन्दितैषा मधुस्रुतिः ।
मन्ये तत्क्षौद्रपटलं त्यक्तं तेनेन्दुमण्डलम् ॥ ४ ॥

तापकाठिन्यचलतापरिम्लानीरकल्पयत् ।
दीपरत्नतडित्पुष्पेष्वस्याः प्रव्यक्तये विधिः ॥ ५ ॥

कैस्सुरैः केन शैलेन कुतोऽब्धेर्मथनादियम् ।
अजायत नवा लक्ष्मीरमृतेन्दुकलामयी ॥ ६ ॥

न त्वरा श्रेयसे पुंसां किमद्य क्रियतां हरिः ॥
इमामजानन्नेष्यन्तीं जग्राह सहसा श्रियम् ॥ ७ ॥

हन्त मोहादिमामल्पं कालमप्रतिपालयन् ।
स्मरारुशम्भौ विचक्राम गौरीमात्रावलम्बनः ॥ ८ ॥

एते पञ्चेन्दुलेखायाम् ।

क्षीरसागरकल्लोललोललोचनयाऽनया ।
असारोऽपि हि संसारः सारवानिव लक्ष्यते ॥ ९ ॥

आकाशपोलेः ।

---

१ हृदि. क. स्मृति. क. पाठान्तरम् ।

लीलावधूतपद्मा कथयन्ती पक्षपातमधिकं नः।
मानसमुपैति केयं चित्रगता राजहंसीव ॥ १० ॥

श्रीहर्षस्य।

अये केयं लीलाधवलगृहवातायनतले
तुलाकोटिक्वाणैः कुसुमधनुषं जागरयति।
अहो नेत्रद्वन्द्वं विलसति किलङ्घ्य श्रुतिपथं
कथं न त्रैलोक्यं जयति मदनः स्मेरवदनः ॥ ११ ॥

पुरः स्थित्वा किंचिद्दलितमुखमालोकय सखे
सखेदाः स्थास्यन्ति ध्रुवमिदमदृष्टास्तव दृशः ॥
इतश्चश्चत्काञ्चीरणितमुखरान् सौधशिखरा-
नराकायां केयं कवचयति चान्द्रेण महसा ॥ १२ ॥

बिल्हणस्यैतौ।

उपप्राकाराग्रं प्रहिणु नयने तर्कय मना-
गनाकाशे कोऽयं गलितहरिणश्शीतकिरणः।
सुधाबद्धग्रासैरुपवनचकोरैरनुसृतां
किरन्ज्योत्स्नामच्छां नवलवलिपाकप्रणयिनीम् ॥ १३ ॥

राजशेखरस्य।

विनैवाम्भोवाहं बहलरुचिलिप्ताम्बरतला-
त्तडिल्लेखा हेमद्युतिविततिरम्या विलसति।
विनैव स्वर्गङ्गां नभसि रभसव्यग्रशफरी-
परीवर्तैस्सार्धं स्फुरति विकचेन्दीवरवनम् ॥ १४ ॥

जयदेवस्य।

अमृतममृतं चन्द्रश्चन्द्रस्तथाऽम्बुजमम्बुजं
रतिरपि रतिः कामः कामो मधूनि मधून्यपि।
इति न भजते वस्तु प्रायः परस्परसंकथां
तदियमबला लक्ष्मीं धत्ते कुतस्सकलात्मिकाम् ॥ १५ ॥

राजपुत्रविजयपालस्य।

१. लवलिफलपाकेति शार्ङ्गधरपद्धतौ।

कमलमनम्भसि कमले कुवलयमेतानि कनकलतिकायाम् ।
मा च सुकुमारसुभगेत्युत्पातपरम्परा केयम् ॥ १६ ॥

श्रीशंकरगणस्य ।

लावण्यसिन्धुरपरैव हि केयमत्र यत्रोत्पलानि शशिना सह संप्लवन्ते ।
उन्मज्जति द्विरदकुम्भतटी च यत्र यत्रापरे कमलकाण्डमृणालदण्डाः ॥ १७ ॥

विक्रमादित्यस्य ।

उभौ रम्भास्तम्भावुपरि विपरीतौ कमलयो-
स्तदूर्ध्वं रत्नाश्मस्थलमथ दुरूहं किमपि तत् ।
ततः कुम्भौ पश्चाद्बिसकिसलये कन्दलमथो
तदन्विन्दाविन्दीवरमधुकराः किं पुनरिदम् ॥ १८ ॥

कस्यापि ।

तमस्तोमः पूर्वं तदनु सकलश्शीतलरुचिः
ततः कोकद्वन्द्वं तदनु न च किञ्चित पुनरभूत ।
अनम्भस्यावर्तस्तदनु कदलीकाण्डयुगलं
ततोऽवाञ्चौ पद्मौ किमिदमतिचित्रैव रचना ॥ १९ ॥

देवबोधेः ।

मन्ये पार्वणचन्द्रमध्यशकलेनासूत्रितैषा चिरा-
दङ्गैरद्भुतभङ्गिभिः परिणतव्युत्पत्तिना वेधसा ।
योषित्सर्गविलक्षणाकृतिरियं यद्दृश्यते भाति च
छिद्रद्वारविलोक्यमानगगनेवाद्यापि चान्द्री तनुः ॥ २० ॥

बिल्हणस्य ।

सरस्यामेतस्यामुदरवलिवीचीविलुलितं
यथा लावण्याम्भो जघनपुलिनोल्लङ्घनपरम् ।
यथा लक्ष्यश्चायं चलनयनमीनव्यतिकर-
स्तथा मन्ये मग्नः प्रकटकुचकुम्भः स्मरगजः ॥ २१ ॥

कृच्छ्रेणोरुयुगं विलङ्घ्य सुचिरं भ्रान्त्वा नितम्बस्थले
मध्येऽस्यास्त्रिवलीतरङ्गविषमे निष्पन्दतामागता ।
मद्दृष्टिस्तृषितेव संप्रति शनैरारुह्य तुङ्गौ स्तनौ
साकांक्षं मुहुरीक्षते जललवप्रस्यन्दिनी लोचने ॥ २२ ॥

श्रीहर्षस्य ।

आनन्दोर्मिव्यतिकरदरस्मेरसंसक्तपक्ष्म
प्रेमोद्गारप्रवणमसृणारेचितस्निग्धतारम् ।
अन्तश्चिन्ताभरपरिचयाकुञ्चितभ्रूलतान्तं
चक्षुश्चेतो हरति हरिणीलोचनायास्तदेतत् ॥ २३ ॥

कस्यापि ।

जगति जयिनस्ते ते भावा नवेन्दुकलादयः
प्रकृतिमधुरास्सन्त्येवान्ये मनो मदयन्ति ये ।
मम तु यदियं याता लोके विलोचनचन्द्रिका
नयनविषयं जन्मन्येकस्स एव महोत्सवः ॥ २४ ॥

भवभूतेः ।

इति नायिकावलोकनम्

---

## अथ नायकस्यावलोकनम् ।



कृच्छ्रेण कापि गुरुणैव जनेन रोधादुल्लङ्घ्य नायकसमीपभुवं प्रतस्थे ।
हा हन्त शीघ्रगमनप्रतिरोधहेतुस्तस्या घनस्तनतटोऽपि गुरुर्बभूव ॥ २५ ॥

काचिन्निवारितबहिर्गमना जनन्या द्रष्टुं प्रियं भवनजालकमाससाद ।
तस्या विलोचनमदृश्यत दाशदत्तयन्त्रोपरुद्धशफरोपमितं क्षणेन ॥ २६ ॥

काचिद्विहृत्य किल कन्दुककेलिरङ्गाद्धूरेणुभूषिततनुर्निरगान्मृगाक्षी ।
उत्फुल्लपङ्कजवने सुचिरं विहृत्य किंजल्करेणुपरिधूसरितेव लक्ष्मीः ॥ २७ ॥

उत्प्रेक्षावल्लभस्यैते

॥ इति श्रीभगदत्तजल्हणविरचितायां सूक्तिमुक्तावल्यां नायिकानायकयोरवलोकनप्रकरणम् ॥

---

१. जाता. ख. च. २ कन. ख. च. ३. रूपित. क. पाठभेदः

# स्त्रीवर्णने बाल्यावस्था ( ५० )

अमन्दानन्दनिष्पन्दमपास्तान्यक्रियाक्रमम् ।
जगज्जन्मोत्सवे तस्याः पीतामृतमिवाभवत् ॥ १ ॥

सर्गव्यापारखिन्नस्य बह्वोः कालाद्विधेरपि ।
आसीदिमां विनिर्माय श्लाघ्यः शिल्पपरिश्रमः ॥ २ ॥

दग्धो विधिर्विधत्ते न सर्वगुणसुन्दरं जनं कमपि ।
इत्यपवादभयादिव हरिणाक्षी वेधसा विहिता ॥ ३ ॥

लावण्यपुण्यपरमाणुदलं तदन्यदन्यस्स चापि निपुणः खलु कोऽपि वेधाः ।
येनाद्भुता कृतिरियं विहिता विशिष्टकार्येषु कारणविशेषगुणोऽनुमेयः॥ ४॥

त्रिविक्रमस्यैते ।

घुणाक्षरन्यायतया विधात्रा विनिर्मितेयं मृगशावकाक्षी ।
जाने पुनः कौशलमेतदीयमेतादृशीं यद्यपरां विधत्ते ॥ ५ ॥

कस्यापि ।

चित्रे निवेश्य परिकल्पितसत्त्वयोगा
रूपोच्चयेन [2]विधिना मनसा कृता नु ।
स्त्रीरत्नसृष्टिरपरा प्रतिभाति सा मे
धातुर्विभुत्वमनुचिन्त्य वपुश्च तस्याः ॥ ६ ॥

कालिदासस्य ।

वक्त्रं निर्मलमुन्नता कुचतटी मध्यप्रदेशः कृशः
श्रोणीमण्डलमङ्गनाकुलगुरोर्देवस्य सिंहासनम् ।
कृत्वा चारुदृशश्चतुष्टयमिदं तुष्टाव मन्ये विधि-
र्हर्षोद्गद्गदगद्यपद्यरचनागर्भैश्चतुर्भिर्मुखैः ॥ ७ ॥

बिल्हणस्य ।

दृशः पृथुतरीकृताः जितनिजाब्जपत्रत्विष-
श्चतुर्भिरपि साधु साध्विति मुखैः समं व्याहृतम् ।
शिरांसि चलितानि विस्मयवशाद्ध्रुवं वेधसा
विधाय ललनां जगत्त्रयललामभूतामिमाम् ॥ ८ ॥

१ भिन्न. क, ख, च. २ घटिता. क, ख, च.

लावण्यद्रविणव्ययो न गणितः क्लेशो महान्[१] स्वीकृतः
स्वच्छन्दस्य[२] सुखं जनस्य वसतश्चिन्ताज्वरो निर्मितः।
एषाऽपि स्वयमेव तुल्यरमणाभावाद्वराकी हता
कोऽर्थश्चेतसि वेधसा विनिहितस्तन्व्यास्तनुं तन्वता ॥ ९ ॥

भदन्तधर्मकीर्तेः।

आस्यप्रोञ्छि[ज्झि]तपार्वणेन्दुयशसं नेत्रावधूतोत्पल-
श्रीगर्वां दशनच्छदव्यवहिताशोकप्रवालद्युतिम्।
एतां दृष्टिसुधाप्रपां त्रिजगतः शिल्पी विधाय स्वयं
मन्ये हर्षवशादजायत निजस्तोत्रप्रचण्डः कविः ॥ १० ॥

एकान्तसुन्दरविधानजडः क्व वेधाः सर्वाङ्गकान्तिचतुरं क्व च रूपमस्याः।
मन्ये महेश्वरभयान्मकरध्वजेन प्राणार्थिना युवतिरूपमिदं गृहीतम् ॥ ११ ॥

लावण्यामृतदीर्घिका कुलगृहं सौभाग्यसौन्दर्ययो-
स्त्रैलोक्याकररत्नकन्दलिरियं जीयात्सहस्रं समाः।
लोकालोकनकौतुकाय बहुना शिल्पश्रमेणादरा-
न्मन्ये यां विधिना विधाय विहितं सृष्टिध्वजारोहणम् ॥ १२ ॥

केषामप्येते।

भजन्नासीन्निद्रापरिचयमुपेन्द्रः खलु तदा
यदा नाभीपङ्केरुहवसतिनाऽसर्जि विधिना।
इयं यद्यायाता क्षणमपि भवेल्लोचनपथं
कथं तस्य स्वान्ते निवसति तदद्यापि कमला ॥ १३ ॥

त्रिविक्रमस्य।

निर्माल्यं नयनश्रियः कुवलयं वक्त्रस्य दासश्शशी
भ्रूयुग्मस्य सनाभि मन्मथधनुर्ज्योत्स्ना स्मितस्याञ्चलः।
सङ्गीतस्य च मत्तकोकिलरुतान्युच्छिष्टमेणीदृशः-
स्सर्वाङ्गीणमहो विधेः परिणतं विज्ञानचित्रं चिरात् ॥ १४ ॥

राजशेखरस्य।

इति श्रीभगदत्तजल्हणविरचितायां सूक्तिमुक्तावल्यां [स्त्री]बाल्यप्रकरणम् ॥

---

१. २. ३. ४. ५. नार्जितः, न्दं चरतो, हृदये, स्वगुणानुरूप, स्तन्वीमिमां–इत्येते क्रमात्तत्तत्स्थाने, क. पाठभेदाः ६. रोप. शार्ङ्गधरपद्धतौ।

# वयस्सन्धिपद्धतिः ( ५१ )



अनाकूतैरेव प्रियसहचरीणां शिशुतया
　वचोभिः पाञ्चालीमिथुनमधुना सङ्गमयितुम् ।
उपादत्ते नो वा विरमति न वा केवलमियं
　कपोलौ कल्याणी पुलकमुकुलैर्दन्तुरयाति ॥ १ ॥

मुरारेः ।

समं विलासोऽङ्कुरितः स्तनाभ्यां त्रपा विलासेन सहावतीर्णा ।
अवर्त्ततास्यास्त्रपयैव सार्धं कान्तः प्रकारो वचसां कृशाङ्ग्याः ॥ २ ॥

जयतुङ्गोदयात् ।

परिहरति वयो यथा यथाऽस्याः स्फुरदुरुकन्दलशालि बालभावम् ।
द्रढयति धनुषस्तथा तथा ज्यां स्पृशति शरानपि सज्जयन्मनोभूः ॥ ३ ॥

त्रिविक्रमभट्टस्य ।

लीलाताण्डवितभ्रु चारुवदनं किञ्चित्प्रगल्भे दृशौ
　स्तोकोद्भेदनिवेदितस्तनमुरो मध्यं दरिद्राति च ।
अस्या यज्जघनं घनं च कलया प्रत्यङ्गमेणीदृशः
　सत्यं [ चां १ ]र इव स्मरैकसुहृदा तद्यौवनेनार्पितः ॥ ४ ॥

आकण्ठार्पितकञ्चुकाञ्चितमुरो हस्ताङ्गुलीमुद्रणा-
　मात्रासूत्रितहास्यमास्यमलसाः पाञ्चालिकाकेलयः ।
तिर्यग्लोचनवलितानि वचसां छेकोक्तिसंक्रान्तयः
　तस्यास्सीदति शैशवे प्रतिकलं कोऽप्येष केलिक्रमः ॥ ५ ॥

दृष्टिश्शैशवमण्डना प्रतिकलं प्रागल्भ्यमभ्यस्यते
　पूर्वाकारमुरस्तथापि कुचयोरुशोभां नवामीहते ।
नो धत्ते गुरुतां तथाऽप्युपचिताभोगा नितम्बस्थली
　तन्व्याः स्वीकृतमन्मथं विजयते नेत्रैकपेयं वयः ॥ ६ ॥

---

१ कारयति. ख. च. कार इव. क. २ इत आरभ्य स्त्रीणामवयववर्णनपद्धतौ मुखवर्णने 'विधायापूर्वपूर्णेन्दु' मिति श्लोकं यावत् ख. च. पुस्तकयोः भूयान् ग्रन्थो विगलितः ।

भ्रुवोः काचिल्लीला परिणतिरपूर्वा नयनयोः
स्तनाभोगो व्यक्तस्तरुणिमानि संरम्भसमये ।
इदानीं बालायाः किममृतमयः किं विषमयः
किमानन्दस्साक्षाद्ध्वनितमधुरः पञ्चमरवः ॥ ७ ॥

लब्ध्वा मण्डलमुन्नतं कुचतटं स्फीता जघन्याश्रिय—
स्ताः क्रान्ता वलिभिश्च मध्यमभ्रुवो भ्रूभ्यां धृतो वक्रिमा ।
पञ्चेषुर्विजिगीषते त्रिजगतीं तद्बाल्यतारुण्ययो–
र्द्वैराज्ये समुपस्थिते मृगदृशः किं केन नारभ्यते ॥ ८ ॥

प्रेमाशङ्कि च भङ्गि च प्रतिवचोऽप्युक्तं च गुप्तं तथा
यत्नाद्याचितमाननं प्रति समाधाने च हाने च धीः ।
इत्यन्यो मधुरस्स कोऽपि शिशुतातारुण्ययोरन्तरे
वर्त्तिष्णुर्मृगचक्षुषो विजयते द्वैविध्यमुग्धो रसः ॥ ९ ॥

दरोत्तानं चक्षुः कलितविरलापाङ्गचपलं
भविष्यद्विस्तारिस्तनयुगलगर्भालसमुरः ।
नितम्बं संक्रान्ताः कतिपयकला गौरवपुषो
वपुर्मुग्धद्बाल्यं किमपि कमनीयं मृगदृशः ॥ १० ॥

कलितगरिमा श्रोणिर्मध्यं विवृद्धवलित्रयं
हृदयमुदयल्लज्जं मज्जच्चिरन्तनचापलम् ।
मुकुलितकुचं वक्षश्चक्षुर्मनाग्धृतवक्रिम
क्रमपरिगलद्बाल्यं तस्या वपुस्तनुते श्रियम् ॥ ११ ॥

केषामप्येते ।

गण्डे मण्डनमात्मनैव कुरुते वैदग्ध्यगर्वादसौ
त्यक्त्वा हेमविभूषणानि तनुते तालीदलेष्वाग्रहम् ।
मन्दा कन्दुकखेलनाय भजते शारीषु शिक्षारसं
तन्व्या चित्रमकाण्ड एव लटभाभावे निबद्धो भरः ॥ १२ ॥

१ दाने क.

लास्याभ्यासमिषेण चित्रमनया गात्रार्पणं शिक्षितं
　　लीलापञ्चमडोलनेन दलिता कण्ठस्य कुण्ठा गतिः ।
किं व्यावर्णनया समस्तलटभालङ्कारतामेष्यति
　　स्वल्पेनैव परिश्रमेण रमणी देवस्य रामागुरोः ॥ १३ ॥

दोलायां जघनस्थलेन चलता लोलेक्षणा लज्जते
　　धत्ते दिक्षु निरीक्षणं स्मितमुखी पारावतानां रुतैः ।
[1]स्पर्शः कण्टककोटिभिः कुटिलया लीलावने नेष्यते
　　सज्जं मौग्ध्यविसर्जनाय सुतनोः शृङ्गारमित्रं वयः ॥ १४ ॥

बिल्हणस्यैते ।

कुरङ्गीवाङ्गानि स्तिमितयति गीतध्वनिषु य-
　　त्सखीं कान्तोदन्तं श्रुतमपि पुनः प्रश्नयति यत् ।
अनिद्रा यच्चान्तः स्वपिति तदहो वेद्म्यभिनवां
　　प्रवृत्तोऽस्यास्सेक्तुं हृदि मनसिजः प्रेमलतिकाम् ॥ १५ ॥

त्रिविक्रमभट्टस्य ।

पाञ्चालीमिथुनेषु नातिरसिका लोला विभूषाविधौ
　　सोत्कण्ठा कलगीतिषु प्रियतमालापेषु लज्जालसा ।
स्मारंस्मारमहर्निशं प्रियसखीसंभोगवार्तां पुन-
　　स्सन्दिष्टा मदनेन तत्र विदुषा बाला चिरं लीयते ॥ १६ ॥

आकाशपोलेः ।

प्रायो दास्यति नो पयोधतरटी गन्तुं पुरस्तादिति
　　ध्यानेनैव चकास्ति साचिगमने शिक्षारसरुचक्षुषोः ।
अन्तःस्थानमिव प्रदातुमधुना कस्यापि पुण्यात्मनो
　　निर्गन्तुं बहिरुन्नतं स्तनतटं विस्तारि सन्नह्यते ॥ १७ ॥

इति श्रीभगदत्तजल्हणविरचितायां सूक्तिमुक्तावल्यां वयस्सन्धिपद्धतिः ।

---

१ 'साशङ्कं तनुकण्टकक्षतभिया क्रीडावने क्रीडति' इति शार्ङ्गधरपद्धतीयः पाठः

# तारुण्यपद्धतिः ( ५२ )



दृशोस्सीमावादः श्रवणयुगलेन प्रतिकलं
स्तनाभ्यां संरुद्धे हृदि मनसिजास्तिष्ठति बलात्।
नितम्बः साक्रन्दं क्षिपति रशनादाम परितः
प्रवेशस्तन्वङ्ग्या वपुषि तरुणिम्नो विजयते ॥ १ ॥

बिल्हणस्य।

पर्याप्तस्तनभारपीडितमुरस्तेनैव मध्यो हतः
पुंसां चित्रवधं धृतेर्विदधते काश्चित् दृशोर्वृत्तयः।
किं भूयः कथितेन पक्ष्मलदृशः पूर्णे तथा यौवने
कन्दर्पः परिपूर्णविश्वविजयः किं दर्पतो नाचरेत् ॥ २ ॥

कस्यापि।

मुखं विकसितस्मितं [१]वलितवक्रिम प्रेक्षणम्
समुच्छ्वसितविभ्रमा गतिरपास्तसंस्था मतिः।
उरो मुकुलितस्तनं जघन[२]मण्डलं बन्धुरं
बतेन्दुवदनातनौ तरुणिमोद्गमो मोदते ॥ ३ ॥

रुमस्य।

पङ्क्त्या मुक्तास्तरलगतयस्संश्रिता लोचनाभ्यां
श्रोणीबिम्बस्त्यजति तनुतां सेवते मध्यभागः।
धत्ते वक्षः कुचसचिवतामद्वितीयं च वक्त्रं
तद्गात्राणां गुणविनिमयः कल्पितो यौवनेन ॥ ४ ॥

शारीद्यूतकलाकुतूहलि मनश्छेकोक्तिशिक्षारतिः
हृद्यं दर्पणपाणिना स्वकबरीबन्धेन चाचार्यकम्।
प्रौढस्त्रीचरितानुवृत्तिषु रसो बाल्ये च लज्जा मनाक्
स्तोकारोहिणि यौवने मृगदृशः कोऽप्येष केलिक्रमः ॥ ५ ॥

राजशेखरस्यैतौ।

---

१ वशित. क. २ मंशबन्धोद्धुरं. ग. घ. मंसेति शार्ङ्गधरपद्धतौ।

तरन्तीवाङ्गानि स्खलदमललावण्यजलधौ
प्रथिम्नः प्रागल्भ्यं स्तनजघनमुन्मुद्रयाति च ।
दृशोर्लीलारम्भास्स्फुटमपवदन्ते सरलता-
महो सारङ्गाक्ष्यास्तरुणिमानि गाढः परिकरः ॥ ६ ॥

कुम्भकस्य ।

गतं कर्णाभ्यर्णं प्रसरति तथाऽप्याक्षियुगलं
कुचौ कुम्भारम्भौ तदपि चिबुकोत्तम्भनरुची ।
नितम्बप्राग्भारो गुरुरपि गुरुत्वं मृगयते
कथञ्चिन्नो तृप्तिस्तरुणिमानि मन्ये मृगदृशः ॥ ७ ॥

रुद्रस्य ।

ऊरुद्वन्द्वमनिन्दितं प्रथयता श्रोणीं समातन्वता
रोमालीं सृजता समागमयता नाभिं गभीरश्रिया ।
मध्यं क्षामयता स्तनौ घनयता कान्त्या मुखं लिम्पता
तन्वङ्ग्या नवयौवनेन किमपि प्रत्यङ्गमुन्मीलितम् ॥ ८ ॥

तरत्तारं चक्षुः क्षपयति मुनीनामपि दृशः
कुचद्वन्द्वाक्रान्तं हृदयमहृदः कान्न कुरुते ।
गतिर्मन्दीभूता हरति गमनं मन्मथवता-
महो तुल्यं तन्व्यास्तरुणिमानि सर्वं विजयते ॥ ९ ॥

रुद्रस्य ।

भ्रूभङ्गः कुटिलः स्तने च गरिमा दृष्टेर्गतिर्मन्थरा
विस्रब्धं हसितं कपोलफलके वैदग्ध्यवक्रं वचः ।
नोद्दिष्टं गुरुणा न बन्धुकथितं दृष्टं न शास्त्रे क्वचित्
बालायास्स्वयमेव मन्मथकलापाण्डित्यमुन्मीलति ॥ १० ॥

स्मितपरिवृता वृत्तिर्वाचामपाङ्गतरङ्गितं
नयनचरितं पादन्यासो नितम्बभरालसः ।
हहह सुतनोर्लीलासूत्रैः कृतं पदमङ्गके
वहतु मदनः शोभामात्रं धनुर्ननु संप्रति ॥ ११ ॥

घोरकस्य ।

॥ इति श्रीभगदत्तजल्हणविरचितायां सूक्तिमुक्तावल्यां तारुण्यवर्णनपद्धतिः ॥

---

१. तत्तन्वङ्ग्या. ग. घ.

# स्त्रीणामङ्गवर्णनपद्धतिः (५३)



तत्र प्रथमं केशपाशः।

स्नेहं परित्यज्य निपीय धूमं तन्व्याः कचा मोक्षपथं प्रपन्नाः।
नितम्बसङ्गात्पुनरेव बद्धा अहो दुरन्ता विषयेषु सक्तिः॥ १॥

कस्यापि।

स्नानार्द्रमुक्तेष्वनु धूपवासं विन्यस्तसायन्तनमल्लिकेषु।
कामो वसन्तात्ययमन्दवीर्यः केशेषु लेभे पदमङ्गनानाम्॥ २॥

कालिदासस्य।

उन्मीलद्वदनेन्दुकान्तिविसरैर्दूरं समुत्सारितं
भग्नं पीनकुचस्थलस्य च रुचा हस्तप्रभाभिर्हतम्।
एतस्याः कलविंककण्ठकदलीकल्पं मिलत्कौतुका-
दप्राप्ताभिमुखं रुषेव सहसा केशेषु लग्नं तमः॥ ३॥

कस्यापि।

हृतं यद्यपि नीलाब्जं हृता मदमषी गजात्।
अलकानां तथाऽप्यस्याः प्रापुः कान्तिं न षट्पदाः॥ ४॥

वैद्यभानुपण्डितस्य।

कौटिल्याच्छन्नमाहात्म्यस्तदीयोऽलकसञ्चयः।
कृष्णद्युतिः पुरस्तिष्ठन्नादधे कं समाकुलम्॥ ५॥

शकवृद्धेः

ललाटम्।

अस्या ललाटे रचिता सखीभिर्विभाव्यते चन्दनपत्रलेखा।
आपाण्डुरक्षामकपोलभित्तावनङ्गबाणव्रणपट्टिकेव॥ ६॥

भासस्य।

भ्रुवौ।

भ्रूलेखायुगलं भाति तस्याश्चटुलचक्षुषः।
पत्रद्वयीव हरिता नासावंशीविनिर्गता॥ ७॥

बिल्हणस्य।

जडस्येन्दोर्लक्ष्मीं गतमपि मदान्धस्य करिणः
[कि[१]]शोरस्य छायां हरतु हरिणस्येक्षणगताम् ।
इदं तु श्यामाङ्ग्याः किमपि ललितं यन्मदनतः
समक्षं भ्रूक्षेपैर्धनुरपि विदग्धादपहृतम् ॥ ८ ॥

यत्रैता ल[२]हरीचलाञ्चलदृशो व्यापारयन्ति भ्रुवं
यत्तत्रैव पतन्ति सन्ततममी मर्मस्पृशो मार्गणाः ।
तच्चक्रीकृतचापसं[३]ञ्चितशरप्रेङ्खत्करः क्रोधनो
धावत्यग्रत एव शासनधरस्सज्यं यदासां स्मरः ॥ ९ ॥

नेत्रे—

नूनमाज्ञाकरस्तस्यास्सुभ्रुवो मकरध्वजः ।
यतस्तन्नेत्रसंचारसूचितेषु प्रवर्तते ॥ १० ॥

यथा यथाऽस्याः स्तनयोः समुन्नतिस्तथा तथा लोचनमेति वक्रताम् ।
अहो सहन्ते बत नापरोदयं निसर्गतोऽन्तर्मलिना मनागपि ॥ ११ ॥

कयोरप्येतौ ।

सन्मार्गे तावदास्ते प्रभवति पुरुषस्तावदेवेन्द्रियाणां
लज्जां तावद्विधत्ते विनयमपि समालम्बते तावदेव ।
भ्रूचापाकृष्टमुक्ताः श्रवणपथजुषो नीलपक्ष्माण एते
यावल्लीलावतीनां न हृदि धृतिमुषो दृष्टिबाणाः पतन्ति ॥ १२ ॥

बाणस्य ।

नासा—

पुराणबाणत्यागाय नूतनास्त्रकुतूहलात् ।
तन्नासा भाति कामेन तूणीवाधोमुखीकृता ॥ १३ ॥

बिल्हणस्य ।

पुण्डरीकमिवाभाति नासावंशगमौक्तिकम् ।
कुचसिंहासनस्थस्य स्मरभूपस्य सुभ्रुवः ॥ १४ ॥

[४]क्षेमेन्द्रस्य

१ शि. क. ख. च. २ लहरीश्चला चलदृशोर्व्या, क ३ मञ्चितशिरः क. ४. ग. पुस्तके अयं निर्देशः ।

नासाऽदसीया तिलपुष्पतूणं जगत्त्रयन्यस्तशरत्रयस्य ।
श्वासानिलामोदभरानुमेयां दधद्विबाणीं कुसुमायुधस्य ॥ १५ ॥

श्रीहर्षपण्डितस्य ।

ललाटे लोलाक्ष्यास्तिलकमिषधारी विधुरयं
स्वमापूर्णं वाञ्छन्नधरसुधया देवहितकृत् ।
अतो नासाग्रेऽसौ तदुपहतये मौक्तिकमिषात्
स्फुटं दैत्यामात्योऽधरशशभृतोरन्तरगतः ॥ १६ ॥

कर्णपाशः—

सौन्दर्यपात्रे वक्त्रेन्दौ कुरङ्गासङ्गभीतया ।
सूचितौ श्रोत्रपाशाभ्यां पाशाविव मृगीदृशा ॥ १७ ॥

बिल्हणस्य ।

कपोलौ—

आबध्नन्परिवेषमण्डलमलं वक्त्रेन्दुबिम्बाद्बहिः
कुर्वंश्चम्पकजृम्भमाणकलिकाकर्णावतंसक्रियाम् ।
तन्वङ्ग्याः परिनृत्यतीव हसतीवोत्सर्पतीवोल्बणं
लावण्यं ललतीव काञ्चनशिलाकान्ते कपोलस्थले ॥ १८ ॥

त्रिविक्रमस्य ।

वेत्रत्वचा तुल्यरुचां वधूनां कर्णाग्रतो गण्डतलागतानि ।
भृङ्गाः सहेलं यदि नापतिष्यन् कोऽवेदयिष्यन्नवचम्पकानि ॥ १९ ॥

अधरः—

द्विजसङ्गतिमासाद्य सर्वो रागाद्विमुच्यते ।
रक्तस्तथाऽपि तन्वङ्ग्या बिम्बोष्ठः केन हेतुना ॥ २० ॥

लक्ष्मणस्य ।

रसवदमृतं कस्सन्देहो मधूनि मधून्यथो
मधुरमधिकं चूतस्यापि प्रसन्नरसं फलम् ।
सकृदपि पुनर्मध्यस्थस्सन् रसान्तरविज्जनो
वदतु यदिहान्यत्स्वादु स्यात्प्रियारदनच्छदात् ॥ २१ ॥

कस्यापि ।

अधरक्षतम्—

सर्वस्यैव हि रत्नस्य व्रणेऽर्घः परिहीयते ।
दयिताधररत्नं तु व्रणितं यात्यनर्घताम् ॥ २२ ॥

अयि मृगाक्षि तवाधरपल्लवे दयितदन्तपदं न भवत्यदः ।
भुवनमोहनमन्त्रपदाङ्कितं किमुत यन्त्रमिदं स्मरयोगिनः ॥ २३ ॥

कयोरप्येतौ ।

दन्ताः—

भाति दन्तच्छदेनास्यास्स्वच्छा दशनमल्लिका ।
सरस्वत्यक्षमालेव पूजापद्मदलाञ्चिता ॥ २४ ॥

बिल्हणस्य ।

द्विधा विधाय शीतांशुं कपोलौ कृतवान्विधिः ।
तन्व्यास्तद्रसनिष्यन्दबिन्दवो रदनावली ॥ २५ ॥

कपोलकवेः ।

कपोलौ लोलाक्ष्या मधुमुकुललीलाविजयिना-
　वुरोजौ रेजाते कनककलशाभोगसुभगौ ।
दृशौ वातोत्खेलत्तरलतरनीलोत्पलरुचौ
　वचो नो जानीमः किममृतमयं किं विषमयम् ॥ २६ ॥

मुखम्—

तस्या वदनचन्द्रस्य कान्तिरन्यैव जायते ।
कलङ्कतुलनां धत्ते यत्र नासाग्रमौक्तिकम् ॥ २७ ॥

भानुपण्डितस्य ।

विधायापूर्वपूर्णेन्दुं मुखमस्या अभूद्ध्रुवम् ।
धाता निजासनाम्भोजविनिमीलितदुःस्थितः ॥ २८ ॥

श्रीहर्षस्य ।

आरब्धे दयितामुखप्रतिसमे निर्मातुमस्मिन्नपि
　व्यक्तं जन्मसमानकालमिलितामंशुच्छटां वर्षति ।
आत्मद्रोहिणि रोहिणीपरिवृढे पर्यङ्कपङ्केरुहः
　संकोचादतिदुःस्थितस्य न विधेस्तच्छिल्पमुन्मीलितम् ॥ २९ ॥

मुरारेः ।

बिभ्राणो मृगसख्यमेव किमपि प्रौढं तपस्तप्यता-
मारान्नोतु निरन्तरं दिविषदः पीयूषसत्रेण च ।
देहार्धेन पुनः करोतु यदि वा भूतेश्वरस्यार्चनं
तद्वक्त्रेण समस्तथापि भविता शङ्के न शीतद्युतिः ॥ ३० ॥

गोत्रानन्दनस्य ।

यदपि विबुधैस्सिन्धोरन्तः कथञ्चिदुपार्जितं
तदपि सकलं चारु स्त्रीणां मुखेषु विभाव्यते ।
सुरसुमनसः श्वासामोदे शशी च कपोलयो-
रमृतमधरे तिर्यग्भूते विषं च विलोचने ॥ ३१ ॥

भोसस्य[1] ।

अनाकाशे चन्द्रस्सरसिजदलद्वन्द्वसहितो
गृहीतः पश्चार्धे कुटिलकुटिलैस्सोऽपि तिमिरैः ।
सुधां मुञ्चत्युच्चैरनिशमथ संमोहजननीं
किमुत्पातालीयं वदत जगतः कर्तुमुदिता ॥ ३२ ॥
जनानन्दश्चन्द्रो भवति न कथं नाम सुकृती
प्रयातोऽवस्थाभिस्तिसृभिरपि यः कोटिमियतीम् ।
भ्रुवोर्लीलां बालः श्रियमलिकपट्टस्य तरुणो
मुखेन्दोस्सर्वस्वं हरति हरिणाक्ष्याः परिणतः ॥ ३३ ॥
वक्त्रं जेष्यामि चन्द्रः प्रतिदिवसमसौ कान्तिमभ्येति गुर्वीं
नेत्रच्छायां हरिष्याम्यहमिति विकसत्युत्पलं दीर्घिकायाम् ।
कुर्वाणे ते तथापि श्रियमधिकतरां वीक्ष्य लोलेक्षणाया
वैलक्ष्यात् क्षीण एको विघटितमपरं मत्सरे नास्ति भद्रम् ॥ ३४ ॥
साधु चन्द्रमसि पुष्करैः कृतं मीलितं यदभिरामताधिके ।
उद्यता जयिनि कामिनीमुखे तेन साहसमनुष्ठितं पुनः ॥ ३५ ॥

अभिनन्दस्य[2] ।

मैकं तमस्तबकमूर्ध्वमपाकृथास्त्वमेणं त्यजास्य विमले नयने गृहाण ।
लोलालकं तरलवीक्षितमायताक्ष्यास्साक्षान्मुखं यदि भवाननुकर्तुकामः ॥ ३६ ॥

केषामप्येते ।

---

१. क. २. क. पुस्तके अयं निर्देशः ।

कण्ठः—

कण्ठस्य विदधे कान्तिं मुक्ताभरणता यथा।
तस्यास्स्वभावरम्यस्य मुक्ताभरणता तथा॥ ३७॥

शकवृद्धेः।

मातङ्गकुम्भसंस्पर्शजातपातकशङ्कया।
स्नातीव मुक्ताहारोऽस्याः स्फुरत्कान्तिजले गले॥ ३८॥

श्रीवैद्यभानुपण्डितस्य।

अयं त्रयाणां ग्रामाणां निधानं मधुरध्वनिः।
रेखात्रयमितीवास्याः सूत्रितं कण्ठकन्दले॥ ३९॥

बिल्हणस्य।

बाहू—

दयिताबाहुपाशस्य कुतोऽयमपरो विधिः।
जीवयत्यर्पितः कण्ठे मारयत्यपवर्जितः॥ ४०॥

शब्दवद्भिरलङ्कारैरुपेतमतिकोमलम्।
सुवृत्तं काव्यवद्रेजे तद्बाहुलतिकाद्वयम्॥ ४१॥

शकवृद्धेरेतौ।

सरले अपि दोर्लेखे चित्रं चञ्चलचक्षुषः।
अमुग्धाभ्यो मृणालीभ्यः कथमाजह्रतुः श्रियम्॥ ४२॥

बिल्हणस्य।

हस्ततलम्—

कान्तिप्रकर्षं दशनच्छदेन सन्ध्याघने बद्धपदं हरन्त्याः।
तस्या गृहोद्यानसरोगतस्य हस्तस्थ एवाम्बुरुहस्य रागः॥ ४३॥

कुमारदासस्य।

अङ्गुल्यः—

अङ्गुलीभिः कुरङ्गाक्ष्याः शोभते मुद्रिकावली।
प्रोतेव बाणैः पञ्चेषोः सूक्ष्मा लक्ष्यपरम्परा॥ ४४॥

बिल्हणस्य।

१ नास्या इति शार्ङ्गधरपद्धतौ।

सुदीर्घा रागशालिन्यो बहुपर्वमनोहराः।
तस्या विरेजुरङ्गुल्यः कामिनां संकथा इव ॥ ४५ ॥

शाकवृद्धेः।

स्तनौ—

मुखेन्दुचन्द्रिकापूरप्लाव्यमानौ पुनः पुनः।
शीतभीताविवान्योन्यं तस्याः पीडयतः स्तनौ ॥ ४६ ॥

तत्कुचौ चरतः किञ्चिन्नूनं मनसिजव्रतम्।
नित्योन्मुखौ यदासाते मौलिरत्नस्य भास्वतः ॥ ४७ ॥

बिल्हणस्यैतौ।

तस्याः स्मितप्रणयिपूर्णमुखेन्दुबिम्बा—
न्निर्गच्छदच्छदशनांशुसुधां निधातुम्।
पीनस्तनद्वयमिषात्तपनीयकुम्भौ
लोभादधः प्रगुणिताविव पद्मजेन ॥ ४८ ॥

नाचिराजस्य।

नायं शशी तत्प्रतिरूपमन्यद्यस्मान्न विश्लेषयाति द्वयं नौ।
इति स्म तर्कादिव पश्यतस्तौ तस्या मुखेन्दुं कुचचक्रवाकौ॥ ४९ ॥

कुमारदासस्य।

पङ्कोद्भवत्वपरिवादभयान्मृगाक्ष्या जातं सरोजयुगलं कुचवेषधारि।
शक्यं न धातृविहितं परिहर्तुमस्य भूयोऽपि येन घनचन्दनपङ्कयोगः॥५०॥

उत्प्रेक्षावल्लभस्य।

तदात्वप्रोन्मीलन्म्रदिमरमणीयात् कठिनतां
विचित्य प्रत्यङ्गादिव तरुणभावेन घटितौ।
स्तनावाबिभ्राणाः क्षणविनयवैयात्यमसृण-
स्मरोन्मेषाः केषामुपरि न रसानां युवतयः॥ ५१ ॥

श्रीमुरारेः

निखिलैर्निरस्तमङ्गैरङ्गीकृत्यापि भाविपरिमर्दम्।
शरणागतमिव रक्षति काठिन्यं कुचयुगं तन्व्याः॥ ५२ ॥

मालतीमाधवस्य

धृतघनरुचिरद्युतिना विलसद्धारेण मण्डलाग्रेण।
दलयति कं नाभिमुखं बाला कुचमण्डलाग्रेण ॥ ५३ ॥

विजयशर्मणः।

स्तनराजौ तथाऽन्योन्यं मण्डलाक्रमणोद्यतौ।
कर्तुं यथैतयोस्सन्धिर्विधात्राऽपि न शक्यते ॥ ५४ ॥

तन्वङ्ग्याः स्तनयुग्मेन मुखं न प्रकटीकृतम्।
हाराय गुणिने स्थानं न दत्तमिति लज्जया ॥ ५५ ॥

काठिन्यमङ्गैर्निखिलैर्निरस्तं स्तनौ कृशाङ्ग्याः शरणं जगाम।
अधः पतिष्याव इतीव भीत्या न शक्नुतस्तावपि हातुमेतत् ॥ ५६ ॥

केषामप्येते।

मध्यम्—

निर्णेतुं शक्यमस्तीति मध्यं तव नितम्बिनि।
अन्यथा नोपपद्येत पयोधरभरस्थितिः ॥ ५७ ॥

कस्यापि।

अंशुकेन जघनं तिरोदधे कञ्चुकेन च कुचौ मृगीदृशाम्।
पीयमानमनिशं प्रियेक्षणैः क्षामतामिव जगाम मध्यमम् ॥ ५८ ॥

माधवमागधस्य।

वपुःप्रकर्षादुपचीयमानस्तनद्वयस्योद्वहनश्रमेण।
अत्यन्तकार्श्यं वनजायताक्ष्याः मध्यो जगामेति ममैष तर्कः ॥ ५९ ॥

कुमारदासस्य।

सुहृत्तमावेकत उन्नतौ स्तनौ गुरुर्नितम्बोऽप्ययमन्यतः स्थितः।
कथं भजे कान्तमितीव चिन्तया ततान तन्मध्यमतीव तानवम् ॥ ६० ॥

चन्द्रसूरेः।

---

१ नुपपत्त्यैव ख. २. मदिरेक्षणायाः ख हरिणेक्षणायाः च ३. कुमारिराजस्य ख. च.

मध्येन तस्या विजितः कृशाङ्ग्याः पञ्चाननः काननलब्धवासः।
तस्याः स्तनद्वन्द्वतटीधियेव कुम्भीन्द्रकुम्भौ कुपितो भिनत्ति ॥ ६१ ॥

अरसिठक्कुरस्य।

वलित्रयम्।

तत्त्रित्रिविष्टपमाख्यातं तन्वङ्ग्या यद्वलित्रयम्।
येनानिमिषदृष्टित्वं नृणामप्युपजायते ॥ ६२ ॥

विशाखदेवस्य।

दरिद्रमुदरं दृष्ट्वा चक्रे लावण्यपूर्णयोः।
पन्थानं स्तनयोस्तन्व्यास्त्रिवलीविषमं विधिः ॥ ६३ ॥

बिल्हणस्य।

तनुत्वरमणीयस्य मध्यस्य च भुजस्य च।
अभवन्नितरामस्या वलयः कान्तिवृद्धये ॥ ६४ ॥

( वचनश्लेषः ) कस्यापि।

मध्येत्रिवलित्रिपथं पीवरकुचचत्वरे च धवलदृशाम्।
दलयति मदनपिशाचः पुरुषं हि मनागपि स्खलितम् ॥ ६५ ॥

त्रिविक्रमभट्टस्य।

रोमावली—

भाति रोमावली तस्याः पयोधरभरोन्नतौ।
जाता रत्नशलाकेव श्रोणीवैडूर्यभूमितः ॥ ६६ ॥

बिल्हणस्य।

आनीलचूचुकशिलीमुखमुन्नतैकरोमावलीविपुलनालमिदं प्रियायाः।
उत्तुङ्गसङ्गतपयोधरपद्मयुग्मं नाभेरधः कथयतीव महानिधानम् ॥ ६७ ॥

कस्यापि।

गम्भीरनाभिह्रदसन्निवेशे रराज तन्व्या नवरोमराजिः।
मुखेन्दुभीतस्तनचक्रवाकद्वन्द्वोज्झिता शैवलमञ्जरीव ॥ ६८ ॥

लक्ष्मीधरस्य।

अमुष्मिन् लावण्यामृतसरसि नूनं मृगदृशः
स्मरश्शर्वप्लुष्टः पृथुजघनभागे निपतितः ।
यदङ्गाङ्गाराणां प्रशमपिशुना नाभिकुहरे
शिखा धूमस्येयं परिणमति रोमावलिवपुः ॥ ६९ ॥

रामस्य ।

नाभिः—

मन्ये समाप्ते लावण्यसारसर्गे मृगीदृशः ।
अपूरयित्वेव गतो नाभिरन्ध्रं चतुर्मुखः ॥ ७० ॥

बिल्हणस्य ।

कुचकुम्भौ समालम्ब्य तरन्ती कान्तिनिम्नगाम् ।
प्रमादतस्ततो भ्रष्टा दृष्टिर्नाभौ निमज्जति ॥ ७१ ॥

नायं हारस्य मध्ये तरलमरकतो नाभिदेशे कृशाङ्ग्याः
नैषाऽप्यत्र त्रियामारमणशुचिरुचिः पद्धतिर्मौक्तिकानाम् ।
नाभीलावण्यवाप्यामयमसमशरस्त्र्यक्षकोपाग्निदग्धो
मग्नस्तस्यापि झम्पापतनसमुदिता शीकरश्रेणिरेषा ॥ ७२ ॥

नितंबः—

तन्नितम्बस्य निन्दन्ति वृद्धिं परिजनाङ्गनाः ।
काञ्चीनवनवग्रन्थिग्रथनेन कदर्थिताः ॥ ७३ ॥

स कथं न स्पृहणीयो विषयरतैस्तन्नितम्बविन्यासः ।
शान्तात्मनाऽपि विहितं विश्वसृजा गौरवं यत्र ॥ ७४ ॥

कस्यापि ।

अमृतमधुरैः काञ्चीनादैः कृताभयडिंडिमे
त्रिवलिलहरीलावण्याम्भःकणोत्करकर्बुरे ।
विषमनयनज्वालाजालावलीढपराक्रमो
लुठति मदनस्तन्वङ्गीनां नितंबशिलातले ॥ ७५ ॥

भट्टसोमेश्वरस्य ।

१ मिषात्. शार्ङ्गधरपद्धतौ २ गर्भे. क. ख. च.

जघनम्—

वपुरनुपमं नाभेरूर्ध्वं विधाय मृगीदृशो
ललितललितैरङ्गन्यासैः पुरा रभसादिव।
तदनु सहसा खिन्नेनेव प्रजापतिना भृशं
पृथुलपृथुला स्थूलस्थूला कृता जघनस्थली ॥ ७६ ॥

जघनस्थलीघटकस्य।

तस्याः पद्मपलाशाक्ष्याः स्नान्त्यास्तज्जघनं घनम्।
दृष्टं सखीभिर्याभिरताः पुंभावं मनसा ययुः ॥ ७७ ॥

वाल्मीकेः।

मुक्तेरपि प्रियतमाजघनोपभोगः श्रेयान्न मृग्यमिह वस्तुनि नः प्रमाणम्।
यत्पश्यतायतदृशो रशनाकलापे मुक्ता अपि स्वयमहो पुनरेव बद्धाः ॥ ७८ ॥

उत्प्रेक्षावल्लभस्य।

ऊरू—

मन्ये तदूरू संभाव्य हस्तसर्वस्वहारिणौ।
वहन्त्यस्पृश्यताहेतोर्मातङ्गत्वं मतङ्गजाः ॥ ७९ ॥

बिल्हणस्य।

पश्यन्हतो मन्मथबाणपातैः शक्तो विधातुं न निमील्य चक्षुः।
ऊरू विधात्रा नु कथं कृतौ ताविल्यास तस्यास्सुमतेर्वितर्कः ॥ ८० ॥

कुमारदासस्य।

जंघे—

हेममञ्जीरमालाभ्यां भाति जङ्घालताद्वयम्[1]।
लावण्याय[2] कृतं स्थानं कुङ्कुमेनेव सुभ्रुवः ॥ ८१ ॥

बिल्हणस्य।

लीलागतिस्तत्र निसर्गसिद्धा मत्तो न दन्ती मुषितो न हंसः।
इतीव जङ्घायुगलं यदीयं चक्रे तुलाकोट्यधिरोहणानि ॥ ८२ ॥

कस्यापि।

१ तिका, क. ख. च. २ लावण्यशाखिनःस्थानं सुभा. भाण्डागारम्।

तदीयजङ्घे सन्तापं यज्जनस्यातिरागिणः ।
जनयाञ्चक्रतुस्तीव्रं तत्र हेतुर्विलोमता ॥ ८३ ॥

शाकवृद्धेः ।

चरणयुगलम्—

अमूल्यस्य मम स्वर्णतुलाकोटिद्वयं कियत् ।
इति रोषादिवाताम्रं पादयुग्मं मृगीदृशः ॥ ८४ ॥

जाग्रतः कमलाल्लक्ष्मीं यज्जग्राह तदद्भुतम् ।
पादद्वयस्य मत्तेभगतिस्तेये तु का स्तुतिः ॥ ८५ ॥

यस्याः पादनखश्रेणी शोभते लटहभ्रुवः ।
रत्नावलीव लावण्यरत्नाकरसमुद्धृता ॥ ८६ ॥

बिल्हणस्यैते ।

प्रसीद मैवं परिभूदखण्डं ताराधिपं ते वदनामृतांशुः ।
इतीन्दुमुख्याः पतितेव पादे ताराततिर्दीप्तनखच्छलेन ॥ ८७ ॥

कुमारदासस्य ।

गतम्—

सलीलमियमायान्ती कामिनी गजगामिनी ।
उन्नताङ्घ्रिनखज्योतिःपुष्पैर्भुवामिवार्चति ॥ ८८ ॥

कस्यापि ।

दूरयन्त्या[1] जनं सर्वं निरागसमवज्ञया ।
मातङ्गानां[2] गतिर्यादृक् तादृगासीदसंशयम् ॥ ८९ ॥

शाकवृद्धेः ।

कान्तिः—

अवयवेषु परस्परबिंबितेष्वतुलनिर्मलकान्तिषु तत्तनोः ।
अयमयं प्रविभाग इति स्फुटं जगति निश्चिनुते चतुरोऽपि कः ॥ ९० ॥

श्रीभीमसिंहपण्डितस्य ।

१ मारय, क. ख. च. २, कामिनी, क, ख, च,

तदा तदङ्गस्य बिभर्ति विभ्रमं विलेपनामोदमुचः स्फुरद्रुचः ।
दरस्फुटत्काञ्चनकेतकीदलात्सुवर्णमभ्यस्यति सौरभं यदि ॥ ९१ ॥

श्रीहर्षपण्डितस्य

आकारस्सुमनोहरस्स महिमा तद्वैभवं तद्वयः
सा कान्तिस्स च विश्वविस्मयकरस्सौभाग्यभाग्योदयः ।
एकैकस्य विशेषवर्णनविधौ तस्यास्स एव क्षमो
यस्यास्मिन्नुरगप्रभोरिव भवेज्जिह्वासहस्रद्वयम् ॥ ९२ ॥

त्रिविक्रमभट्टस्य ।

इति अवयववर्णनम् ।

सामान्यतः स्त्रीस्वरूपवर्णनम् ।

पदे वाक्ये प्रमाणे च परां काष्ठामुपागता ।
अतो विद्वज्जनस्यापि स्पृहणीया मृगेक्षणा ॥ ९३ ॥

गुरुणा स्तनभारेण मुखचन्द्रेण भास्वता ।
शनैश्चराभ्यां पादाभ्यां रेजे ग्रहमयीव सा ॥ ९४ ॥

प्राणानां च प्रियायाश्च मूढास्सादृश्यकारिणः ।
प्रिया कण्ठगता रत्यै प्राणा मरणहेतवः ॥ ९५ ॥

स्तनतटमतीव तुङ्गं मध्यो निम्नः समुन्नतं जघनम् ।
विषमे मृगशावाक्ष्या वपुषि नवे क इव न स्खलति ॥ ९६ ॥

केषामप्येते ।

मुखेन चन्द्रकान्तेन महानीलैश्शिरोरुहैः ।
पादाभ्यां पद्मरागाभ्यां रेजे रत्नमयीव सा ॥ ९७ ॥

गतिर्वेणी च नागेन वपुरूरू च रंभया ।
पाणी प्रवालैरोष्ठौ च तस्यास्तुल्यत्वमाययुः ॥ ९८ ॥

शकवृद्धेरेतौ ।

१. स्तं मुखे. क, ख, च,

स्वभ्यस्तरूपाऽपि नवैव नित्यं विनाऽपि हासं हसतीव कान्त्या।
मदाहृतेऽपि स्खलतीव भावैर्वाचं विना व्याहरतीव दृष्ट्या ॥ ९९ ॥

भगवतो व्यासस्य।

तद्वक्त्रं यदि मुद्रिता शशिकथा तच्चेत्स्मितं का सुधा
तच्चक्षुर्यदि हारितं कुवलयैस्ताश्चेद्गिरो धिङ्मधु।
धिक्कन्दर्पधनुर्भ्रुवौ यदि च ते किं वा बहु ब्रूमहे
यत्सत्यं पुनरुक्तवस्तुविषयस्सर्गक्रमो वेधसः ॥ १०० ॥

राजशेखरस्य।

तद्वक्त्रस्य कलङ्क एव तुलना पीयूषधाम्नाऽपि यत्
कन्दर्पस्य धनुर्निदर्शनमिदं निन्दास्पदं तद्भ्रुवोः।
सा तल्लोचनयोस्त्रपा कुवलयैस्साधर्म्यचिन्ताऽपि या
तस्यास्तत्प्रतिबिम्बमेव नियतं मात्राविसंवादिनी ॥ १०१ ॥

गोत्रानन्दनस्य।

सौरभ्यं मृगलाञ्छने यदि भवेदिन्दीवरे वक्रता
माधुर्यं यदि विद्रुमे तरलता कंदर्पचापे यदि।
रम्भायां यदि विप्रतीपवलनं प्राप्तोपमानं तदा
तद्वक्त्रं तदुदीक्षणं तदधरस्तद्भ्रूस्तदूरुद्वयम् ॥ १०२ ॥

कस्यापि।

कमलशरधिरंभासैकतानुक्रमाढ्यं कनककलशभाराक्रान्तसौदामिनीकम्।
किसलयितमृणालं हारगर्भप्रवालं कुवलयितशशाङ्कं कौशलं सा विधातुः १०३

सूक्तिसहस्रात्।

यतो यतोऽङ्गादपयाति कञ्चुकस्ततस्ततस्स्वर्णमरीचिवीचयः।
यतो यतोऽस्या निपतन्ति दृष्टयस्ततस्ततः श्यामसरोजवृष्टयः ॥ १०४ ॥

॥ इति सामान्यतःस्त्रीस्वरूपवर्णनम् ॥

इति श्रीभगदत्तजल्हणविरचितायां सूक्तिमुक्तावल्यां अखिलाङ्गवर्णनपद्धतिः ॥

---

१ विरसः, शार्ङ्गधरीयपद्धतिः २ पि, क, ख, च.

# नायकातिथ्यम् ( ५४ )



स्फुरसि बाहुलते किमनर्थकं त्वमपि लोचन वाम भव स्थिरम्।
तमहमागतमप्यपराधिनं न परिरब्धुमलं न च वीक्षितुम् ॥ १ ॥

कस्यापि।

श्रुत्वा गर्जितमम्बरे जलमुचः सद्यो भयादुन्मुखी
यावन्मुञ्चति नाश्रु मुञ्चति तथा यावन्न मेघो जलम्।
तावद्वाहनपांसुसूचितपतिप्रत्यागतिस्स्वां तनुं
रोमोद्भेदवतीं निषिञ्चति वधूरानन्दबाष्पोर्मिभिः ॥ २ ॥

सूक्तिसहस्रात्।

बाला वैन्दनमालिकाकिसलयग्रन्थीनधः कुर्वती[2]
श्रुत्वा शब्दमभीष्टवाहनविभोर्दाशेरकस्याङ्गणे[3]।
आक्रन्दात्सुहृदो वनाद्गुरुजनं नासाग्रसङ्गादसून्
कान्तं स्त्रीवधपातकात्स्मरमसत्कीर्त्तेः परावर्तयत् ॥ ३ ॥

कस्यापि।

आयाते दयिते मरुस्थलभुवामुत्प्रेक्ष्य दुर्लङ्घ्यतां
गेहिन्या परितोषबाष्पतरलामासज्य दृष्टिं मुखे।
दत्वा पीलुशमीकरीरकवलान् स्वेनाञ्चलेनादरा-
दुन्मृष्टं करभस्य केसरसटाभारावलग्नं रजः ॥ ४ ॥

अद्भुतपुण्यस्य।

आगच्छन् सूचितो येन येनानीतो गृहं प्रति।
प्रथमं सखि कः पूज्यः किं काकः किं क्रमेलकः ॥ ५ ॥

सोमकवेः।

दीर्घा वन्दनमालिका विरचिता दृष्ट्यैव नेन्दीवरैः
पुष्पाणां प्रकरः स्मितेन रचितो नो कुन्दजात्यादिभिः।
दत्तं स्वेदमुचा पयोधरभरेणार्घ्यं न कुम्भाम्भसा
स्वैरेवावयवैः प्रियस्य विशतस्तन्व्या कृतं मङ्गलम् ॥ ६ ॥

अमरुकस्य।

१. चन्दन. ग. २. कुर्वतः क. ख. च. ३. वल्लभवाहनस्य रचितं. शार्ङ्गधरपद्धतौ.

किञ्चित्कम्पितपाणिकङ्कणरवैः पृष्टं ननु स्वागतं
व्रीडानम्रमुखाब्जया चरणयोर्न्यस्ते च नेत्रोत्पले।
द्वारस्थस्तनयुग्ममङ्गलघटे दत्तः प्रवेशो हृदि
स्वामिन् किं न तवातिथेस्समुचितं सख्याऽनयाऽनुष्ठितम्॥ ७॥

त्रिविक्रमभट्टस्य।

येनैव सूचितनवाभ्युदयप्रसङ्गा मीनाहतिस्फुरिततामरसोपमेन।
अन्यं निमील्य नयनं मुदितेव सुभ्रूर्वामेन तेन नयनेन ददर्श कान्तम्॥८॥

उत्प्रेक्षावल्लभस्य।

आनन्दोद्गतबाष्पपूरपिहितं चक्षुः क्षमं नेक्षितुं
बाहू स्वेदितयैव कंपविधुरौ शक्तौ न कण्ठग्रहे।
वाणी साध्वसगद्गदाक्षरपदा संक्षोभलोलं मनः
सत्यं यत्प्रियसङ्गमोऽपि सुचिराज्जातो वियोगायते॥ ९॥

कस्यापि।

केयूरीकृतकङ्कणावलिरसौ कर्णावतंसीकृत-
व्यालोलालकपद्धतिः पथि पुरो बद्धाञ्जलिः पृच्छति।
यावत्कश्चिदुदन्तमात्मकमितुस्तावत्स एवेत्यथ
व्रीडावक्रितकण्ठकाण्डमबला भिन्ना न कैः कै रसैः॥ १०॥

राजशेखरस्य।

॥ इति श्रीभगदत्तजल्हणविरचितायां सूक्तिमुक्तावल्यां विप्रलंभे नायकातिथ्यप्रकरणम्॥



१. ब्र क. ख. च. २. सेदत एव. क. सेदतयेव. ख. स्वेदतयेव. च

# माने मानिन्यवस्थापद्धतिः ( ५५ )

स्फुटतु हृदयं कामः कामं करोतु तनुं तनुं
न सखि चटुलप्रेम्णा कार्यं पुनर्दयितेन मे ।
इति सरभसं मानावेशादुदीर्य वचस्तया
रमणपदवी सारङ्गाक्ष्या निरन्तरमीक्षिता ॥ १ ॥

चलतु तरला दृष्टिर्भ्रष्टा खला सखि मेखला
स्खलतु कुचयोरुत्कम्पान्मे विदीर्यतु कञ्चुकम् ।
तदपि न मया संभाव्योऽसौ पुनर्दयितः शठः
स्फुटति हृदयं मौनेनान्तर्न मे यदि तत्क्षणात् ॥ २ ॥

दूरादुत्सुकमागते विवलितं संभाषिणि स्फारितं
संश्लिष्यत्यरुणं गृहीतवसने कोपाञ्चितभ्रूलतम् ।
मानिन्याश्चरणानतिव्यतिकरे बाष्पाम्बुपूर्णं क्षणा-
च्चक्षुर्जातमहो प्रपञ्चचतुरं जातागसि प्रेयसि ॥ ३ ॥

भ्रूभेदो गुणितश्चिरं नयनयोरभ्यस्तमामीलितं
रोद्धुं शिक्षितमादरेण हसितं मौनेऽभियोगः कृतः ।
धैर्यं कर्तुमपि स्थिरीकृतमिदं चेतः कथंचिन्मया
बद्धो मानपरिग्रहे परिकरस्सिद्धिस्तु दैवे स्थिता ॥ ४ ॥

तद्वक्त्राभिमुखं मुखं विनमितं दृष्टिः कृता पादयो-
स्तत्सल्लापकुतूहलाकुलतरे श्रोत्रे निरुद्धे मया ।
पाणिभ्यां च तिरस्कृतस्सपुलकः स्वेदोद्गमो गण्डयोः
सख्यः किं करवाणि यान्ति शतधा मत्कञ्चुकीसन्धयः ॥ ५ ॥

अमरुकस्य ।

एकत्रासनसङ्गतिः परिहृता प्रत्युद्गमाद्दूरत-
स्ताम्बूलानयनच्छलेन रभसाश्लेषोऽपि संविघ्नितः ।
आलापोऽपि न मिश्रितः परिजनं व्यापारयन्त्यान्तिके
कान्तं प्रत्युपचारतश्चतुरया कोपः कृतार्थीकृतः ॥ ६ ॥

[1]अमरानन्दस्य ।

१ पुलिन्दस्य. ग.

भ्रूभङ्गे सहसोद्गतेऽपि वदनं नीतं पराङ्नम्रता-
मीषत्त्वं प्रति भेदकारि हसितं नोक्तं वचो निष्ठुरम् ।
अन्तर्बाष्पजडीकृतं प्रभुतया चक्षुर्न विष्फारितं
कोपश्च प्रकटीकृतो दयिततया मुक्तश्च न प्रश्रयः ॥ ७ ॥

श्रीहर्षस्य ।

भ्रूभङ्गे रचितेऽपि दृष्टिरधिकं सोत्कण्ठमुद्वीक्षते
रुद्धायामपि वाचि सस्मितमिदं दग्धाननं जायते ।
कार्कश्यं गमितेऽपि चेतसि तनू रोमाञ्चमालम्बते
दृष्टे निर्वहणं भविष्यति कथं मानस्य तस्मिन् जने ॥ ८ ॥

भदन्तारोग्यस्य ।

किञ्चिद्बाष्पजलावलिप्तललिते नेत्रे मनाक्कुञ्चिते
रागो विस्फुरणानुबन्धरुचिरः सन्दर्शितो गण्डयोः ।
कम्पश्चाधरपल्लवे विरचितः कामं कुरङ्गीदृशा
नो जाने किमयं प्रियं प्रति कृतः कोपोऽभिलाषोऽथवा ॥ ९ ॥

यावन्नो सखि गोचरं नयनयोरायाति तावद्ध्रुवं
गत्वा ब्रूहि यथाऽद्य ते दयितया मानस्समालम्बितः ।
दृष्टे धूर्तविचेष्टिते तु दयिते तस्मिन्नवश्यं मम
स्वेदांभःप्लुतरोधनिर्भरतनोः स्मेरं मुखं जायते ॥ १० ॥

वर्धकस्य ।

आशङ्क्य प्रणतिं पटान्तपिहितौ पादौ करोत्यादरा-
द्व्याजेनागतमावृणोति हसितं न स्पष्टमुद्वीक्षते ।
मय्यालापवति प्रतीपवचना सख्या समं भाषते
तस्यास्तिष्ठतु निर्भरप्रणयिता मानोऽपि रम्योदयः ॥ ११ ॥

भीमस्य ।

॥ इति श्रीभगदत्तजल्हणविरचितायां सूक्तिमुक्तावल्यां मानिन्यवस्थापद्धतिः ॥

# सख्यनुनयपद्धतिः ( ५६ )



यत्पादे प्रणतः प्रियः परुषया वाचा स निर्झाटितो
यत्स [ ख्यान्न[1] ] कृतं वचो जडतया यन्मन्युरेको धृतः ।
पापस्यास्य फलं तदेतदधुना यच्चन्दनेन्दुद्युति-
प्रालेयाम्बुसमीरपङ्कजबिसैर्गात्रं मुहुर्दह्यते ॥ १ ॥

रुद्रस्य ।

स्मितज्योत्स्नाभिस्ते धवलयति विश्वं मुखशशी
दृशस्ते पीयूषद्रुतमिव[2] विमुञ्चन्ति परितः ।
वपुस्ते लावण्यं किरति मधुरं दिक्षु तदिदं
कुतस्ते पारुष्यं सुतनु हृदयेनाद्य गुणितम् ॥ २ ॥

पादानते प्रणयपेशलवाचि कान्ते त्यक्तस्त्वया यदतिकोपनया न मन्युः ।
तीव्रानुतापगलितः स्वयमेव मन्ये निर्याति ते तदयमश्रुजलच्छलेन ॥ ३ ॥

कयोरप्येतौ ।

विमुञ्चामुं मानं सफलय वचस्साधु सुहृदां
मुधा सन्तापेन ग्लपयसि किमङ्गं स्मरभुवा ।
प्रियं पादप्रान्तप्रणतमधुना मानय भृशं
न मुग्धे प्रत्येतुं प्रभवति गतः कालहरिणः ॥ ४ ॥

रुद्रस्य ।

लिखन्नास्ते भूमिं बहिरवनतः प्राणदयितो
निराहारास्सख्यस्सततरुदितोच्छूननयनाः ।
परित्यक्तं सर्वं हसितपठितं पञ्जरशुकै-
स्तवावस्था चेयं विसृज कठिने मानमधुना ॥ ५ ॥

सन्त्येवात्र गृहे गृहे युवतयस्ताः पृच्छ गत्वाऽधुना
प्रेयांसः प्रणमन्ति किं तव पुनर्दासो यथा वर्तते ।
आत्मद्रोहिणि दुर्जनैः प्रलपितं कर्णे वृथा[3] मा कृथाः
छिन्नस्नेहरसा भवन्ति पुरुषा दुःखानुवृत्त्या पुनः ॥ ६ ॥

१ ख्या न. क. ख. ग. च २ द्रव. क. पाठभेदः ३ विषं. क. ख. च.

अङ्गुल्यग्रनखेन बाष्पसलिलं विक्षिप्य विक्षिप्य किं
तूष्णीं रोदिषि कोपने बहुतरं फूत्कृत्य रोदिष्यासि ।
यस्यास्ते पिशुनोपदेशवचनैर्मानेऽतिभूमिं गते
निर्विण्णोऽनुनयं प्रति प्रियतमो मध्यस्थतामेष्यति ॥ ७ ॥

पादासक्ते सुचिरमिह ते वामता कैव मुग्धे
मन्दारम्भे प्रणयिनि जने को[1]ऽपराधोपरोधः ।
इत्थं तस्याः परिजनकथा[2]कोमलालापवेगे
बाष्पोद्भेदस्तदनु सहसा न स्थितो न प्रवृत्तः ॥ ८ ॥

अमरुकस्य ।

अनालोच्य प्रेम्णः परिणतिमनादृत्य सुहृद-
स्त्वया कान्ते मानः किमिति सरले संप्रति कृतः ।
समाकृष्टा एव प्रलयदहनोद्भासुरशिखाः
स्वहस्तेनाङ्गारास्तदलमधुनाऽरण्यरुदितैः ॥ ९ ॥

वाकूटस्य[3] ।

असद्वृत्तो नायं न च खलु गुणैरेष रहितः
प्रियो मुक्ताहारस्तव चरणमूले निपतितः ।
गृहाणैनं मुग्धे व्रजतु तव कण्ठप्रणयिता-
मुपायो नास्त्यन्यस्तव हृदयसन्तापशमने ॥ १० ॥

पुरश्चक्षूरागस्तदनु मनसोऽनन्यपरता
तनोर्म्लानिर्यस्य त्वयि समभवद्यत्र च तव ।
युवा सोऽयं प्रेयानिह सुवदने मुञ्च जडतां
विधातुर्वैदग्ध्यं विलसतु सकामोऽस्तु मदनः ॥ ११ ॥

भवभूतेः ।

प्रकारो मानस्य प्रियसखि यदीदृक् क्वचिदपि
श्रुतो वा दृष्टो वा कथयतु तदाऽयं परिजनः ।
प्रियं पादप्रान्तप्रणतमवधूय त्वमधुना
वृतिच्छिद्रैः पश्यन्त्यपसर हसिष्यन्त्यसुहृदः ॥ १२ ॥

॥ इति श्रीभगदत्तजल्हणविरचितसूक्तिमुक्तावल्यां सख्यनुनयः ॥

---

१. कोपने कोऽपराधः, २. गिरा कोपवेगे प्रशान्ते. क, पाठभेदः ३. वंकूटस्य. क, पाठभेदः वाग्भटस्य, Bhandarkar's Report.

# नायिकानायकयोरुक्तिप्रत्युक्तिवर्णनपद्धतिः ( ५७ )

बाले नाथ विमुञ्च मानिनि रुषं कोपान्मया किं कृतं
खेदोऽस्मासु न मेऽपराध्यति भवान् सर्वेऽपराधा मयि।
तत्किं रोदिषि गद्गदेन वचसा कस्याग्रतो रुद्यते
नन्वेतन्मम का तवास्मि दयिता नास्मीत्यतो रुद्यते॥ १॥

श्रीकुमारदासस्य।

नयननिपातेऽङ्कुरितः पल्लवितो वचसि पुष्पितो हसिते।
फलतु कृशाङ्गि तवाङ्गस्पर्शेन मनोर[1]थोऽस्माकम्॥ २॥

यद्वाचः प्रचुरोपचारचतुराः यत्साग्रहं दूरतः
प्रत्युत्थानमिदं स्वहस्तनिहितं यद्भिन्नमध्यासनम्।
उत्पश्यामि यदेवमेव च मुहुर्दृष्टिस्सखीसंमुखं
तच्छङ्के तव पङ्कजाक्षि बलवान् कौ[2]पप्रसादोद[3]यः॥ ३॥

रुद्रस्य।

त[4]थाऽभूदस्माकं प्रथममविभ[5]क्ता तनुरियं
ततो नु त्वं प्रेयान् वयमपि हताशाः प्रियतमाः।
इदानीं नाथस्त्वं वयमपि कलत्रं किमपरं
म[6]याप्तं प्राणानां कुलिशकठिनानां फलमिदम्॥ ४॥

अमरुकस्य।

येन श्रोत्ररसायनं मम हठाद्वाचस्तवामीलिताः
भग्नं येन तव भ्रुवोर्विलसितं नेत्रोत्सवारम्भि मे।
मच्चेतोनिलयश्च यस्त्वदधरः श्वासानिलैर्बाध्यते
प्रत्यर्थी स मम प्रिये कथमयं मानस्त्वया स्वीकृतः॥ ५॥

गोत्रानन्दनस्य।

१. रथद्रुमो. क. पाठभेदः २. कोप्य. ग. ३. मयि. ग. ४. पुरा. ५. भिन्ना. ६. हतानां. क. पाठभेदाः

भवतु विदितं व्यर्थालापैरलं प्रिय गम्यतां
तनुरपि न ते दोषोऽस्माकं विधिस्तु पराङ्मुखः ।
तव यदि तथा रूढं प्रेम प्रपन्नमिमां दशां
प्रकृतितरले का नः पीडा गते हतजीविते ॥ ६ ॥

धर्मकीर्तेः ।

व्यावृत्तं खलु सर्वतो विषयतस्त्वय्येव लीनं मनो
नित्यं च त्वदधीनमेव नियतं मज्जीवितं मानिनि ।
मत्वैवं मयि नूनमन्यविषयाशङ्का त्वया त्यज्यतां
किं वाऽन्यत्र निशाकरोऽभिरमते त्यक्त्वा क्षणं कौमुदीम् ॥ ७ ॥

कृतं मिथ्यावादैर्विरम विदितः कामुक चिरात्
प्रियां तामेवोच्चैरभिसर यदीयैर्नखपदैः ।
विलासैश्च प्राप्तं तव हृदि पदं रागबहुलै-
र्मया किं ते कृत्यं ध्रुवमकुटिलाचारपरया ॥ ८ ॥

रुद्रस्य ।

अकरवमधिमौलि पादपद्मावपनय मानिनि मानितामकाण्डे ।
यदि पररमणीं गतस्तदाऽथ स्तनयुगलिङ्गयुगं स्पृशामि तन्वि ॥ ९ ॥

कस्यापि ।

कोपो यत्र भ्रुकुटिरचना विग्रहो यत्र मौनं
यत्रान्योन्यस्मितमनुनयो दृष्टिपातः प्रसादः ।
तस्य प्रेम्णस्तदिदमधुना वैशसं पश्य जातं
त्वं पादान्ते लुठसि न च मे मन्युमोक्षः खलायाः ॥ १० ॥

वामनस्य ।

दासे कृतागसि भवेदुचितः प्रभूणां पादप्रहार इति सुन्दरि नास्मि दूये ।
उद्यत्कठोरपुलकाङ्कुरकण्टकाग्रैर्यत्खिद्यते तव पदं ननु सा व्यथा मे ॥ ११ ॥

श्रीमुंजस्य ।

---

१ दः कुवशिवलिङ्ग ग. दस्तवकुचलिङ्ग. क. पाठभेदः

वधूनां सर्वासां चरणहरणैर्दूषितमिदं
शिरस्ते स्पर्शार्हं सकृदपि न पादस्य हि मम।
प्रहारः पादैस्त्वां रमयति स मत्तो न सुलभ-
स्तदुत्तिष्ठ स्वामिन् भवतु तव सौभाग्यमतुलम् ॥ १२ ॥

सर्वदासस्य।

आताम्रतामपनयामि विलक्ष एष
लाक्षाकृतां चरणयोस्तव तन्वि मूर्ध्ना।
कोपोपरागजनितां तु मुखेन्दुबिम्बे
हर्तुं क्षमा यदि परं करुणा मयि स्यात् ॥ १३ ॥

श्रीहर्षस्य।

किं पादान्ते पतसि विमनाः स्वामिनो हि स्वतन्त्राः
कञ्चित्कालं क्वचिदभिरतस्तेन कस्तेऽपराधः।
आगस्कारिण्यहमिह यया जीवितं त्वद्वियोगे
भर्तुः प्राणास्त्रिय इति ननु त्वं ममै(यै?)वानुमे(ने?)यः ॥ १४ ॥

कस्यापि।

कामस्यापि शराहतिर्न गणिता त्वं जीवनं संस्मृता
नो दग्धो विरहानलेन झटिति त्वत्संगमाशामृतैः।
नीतोऽयं दिवसो विचित्रलिखितैस्सङ्कल्परूपैर्मया
किञ्चान्यन्मनसि स्थिताऽस्ति भवती [तत्र] स्वयं साक्षिणी ॥ १५ ॥

राजपुत्रयशोवर्मणः।

सार्धं मनोरथशतैस्तव धूर्त कान्ता सैव स्थिता मनसि कृत्रिमभावरम्या।
अस्माकमस्ति न कथञ्चिदिहावकाशस्तस्मात्कृतं चरणपातविडम्बनाभिः॥१६॥

रुद्रस्य।

सुभ्रु त्वं कुपितेत्यपास्तमशनं त्यक्ताः कथा योषितां
दूरादेव मयोज्झितास्सुरभयः स्रग्गन्धधूपादयः।
कोपं रागिणि मुञ्च मय्यवनते दृष्टे प्रसीदाधुना
संद्यस्त्वद्विरहे भवन्ति सुभगे सर्वा ममान्धा दिशः ॥ १७ ॥

कस्यापि।

---

१. किञ्चि ख. च. २ ताऽसि. क. पाठभेक्ष. ३ वार्ता. क. पाठभेदः. ४. रागं. क. ख. च. ५. सत्यं त्व. ६. हात् ७. दयिते. क. पाठभेदाः

प्रातः प्रातरुपागतेन जनिता निर्निद्रता चक्षुषोः
मन्दाया मम गौरवव्यपनयादुत्पादितं लाघवम् ।
किन्तद्यन्न कृतं त्वया मरणभीर्मुक्ता मया गम्यतां
दुःखं तिष्ठसि यच्च पथ्यमधुना कर्ताऽस्मि तच्छ्रोष्यसि ॥ १८ ॥

अमरुकस्य ।

शीतांशुर्मुखमुत्पले तव दृशौ पद्मानुकारौ करौ
रम्भास्तम्भनिभं तदूरुयुगळं बाहू मृणालोपमौ ।
इत्याह्लादकराखिलाङ्गि रभसान्निःशङ्कमालिङ्ग मा-
मङ्गानि त्वमनङ्गतापविधुराण्येह्येहि निर्वापय ॥ १९ ॥

श्रीहर्षस्य ।

यदा त्वं चन्द्रोऽभूर्हिमकरकलापेशलवपु-
स्तदाऽहं जाता द्राक् शशधरमणीनां प्रतिकृतिः ।
इदानीमर्कस्त्वं खररुचिसमुत्सारितरसः
किरन्ती कोपाग्नीनहमपि रविग्रावघटिता ॥ २० ॥

अचलस्य ।

कठिनहृदये मुञ्च भ्रान्तिं व्यळीककथाश्रितां
पिशुनवचनैर्दुःखं नेतुं न युक्तमिमं जनम् ।
किमिदमथवा सत्यं मुग्धे त्वयाऽद्य विनिश्चितं
यदभिरुचितं तन्मे कृत्वा प्रिये सुखमास्यताम् ॥ २१ ॥

अमरुकस्य ।

त्वं तावद्बहुवल्लभो नववयाः कान्तस्सुखी निर्घृणो
नो जानासि परव्यथां शठमते नैवासि दुःखी यतः ।
किं त्वन्याः परिपृच्छ मन्मथशरैः पीडामसह्यामिमां
किं वा (त्राता) नो भव येन[2] सज्जन जनैः कापालिको नोच्यसे ॥ २२॥

कस्यापि ।

१. ह्य. क. पाठभेदः २. योन. क. पाठभेदः.

प्रसादे वर्तस्व प्रकटय मुदं[1] सन्त्यज रुषं
प्रिये शुष्यन्त्यङ्गान्यमृतमिव ते सिञ्चतु वपुः।
निधानं[2] सौख्यानां क्षणमभिमुखं स्थापय मुखं
न मुग्धे प्रत्येतुं प्रभवति गतः कालहरिणः॥ २३ ॥

चन्द्रकस्य।

कृतककृतकैर्मायाशाठ्यैस्त्वयाऽप्यतिवर्तितं
निभृतनिभृतैः कार्यालापैर्मयाऽप्युपलक्षितम्।
भवतु विदितं नेष्टा तेऽहं वृथा परिखिद्यसे
त्वहमसहना त्वं निस्नेहः समेन समं गतम्॥ २४ ॥

किं कण्ठे शिथिलीकृतो भुजलतापाशः प्रमादान्मया
निद्राच्छेदविवर्तनेष्वभिमुखं नाद्यापि संभावितम्।
अन्यस्त्रीजनसङ्कथालघुरहं स्वप्ने त्वया लक्षितो
दोषं पश्यसि किं प्रिये परिजनोपालम्भयोग्ये मयि॥ २५ ॥

निशानारायणस्य।

अर्धोक्ते भयमागतोऽसि किमिदं कण्ठश्च किं गद्गद-
श्चाटोरस्य न च क्षणोऽयमनुपक्षिप्तेयमास्तां कथा।
ब्रूहि प्रस्तुतमस्तु संप्रति महत् कर्णे सखीनां मुखै-
स्तृप्तिर्निर्भरमेभिरक्षरपदैः प्रागेव मे संभृता॥ २६ ॥

कस्यापि।

विनिश्चेतुं शक्यो न सुखमिति वा दुःखमिति वा
प्रमोदो निद्रा वा किमु विषविसर्पः किमु मदः।
तव स्पर्शे स्पर्शे मम हि परिमूढेन्द्रियगणो
विकारः कोऽप्यन्तर्जडयति च तापं च कुरुते॥ २७ ॥

भवभूतेः।

यत्रार्कायितमिन्दुना सरसिजैरङ्गारपुञ्जायितं
क्रुद्धायां मयि नाथ ते कदलिकाखण्डैरलातायितम्।
कालोऽन्यः खलु कोऽपि सोऽमृतमयो जातो विषाक्तोऽधुना
धिक्प्राणानिति निर्यदश्रुरबला मोहं वदन्ती गता॥ २८ ॥

रुद्रस्य।

१. मुखं. क. ख. च. २. दानं. क. ख. च.

दृष्टिं रुषा क्षिपसि भामिनि यद्यपीमां
स्निग्धेयमेष्यति तथापि न रूक्षभावम् ।
त्यक्त्वा त्वरां व्रज तद(व?) स्खलितैरयं तु
खेदं करिष्यति गुरुर्नियतं नितम्बः ॥ २९ ॥

यद्गम्यं गुरुगौरवस्य सुहृदो यस्मिन् लभन्तेऽन्तरं
यद्दाक्षिण्यवशाद्भयाच्च सहते मन्दोपचारानपि ।
यल्लज्जा निरुणद्धि यत्र शपथैरुत्पाद्यते प्रत्यय-
स्तत्किं प्रेम स उच्यते परिचयस्तत्राऽपि मानेन किम् ॥ ३० ॥

अमरुकस्य ।

एवं यथाह भवती मम सर्वदोषाः
कः स्वामिना कुवलयाक्षि सहानुबन्धः ।
एषोऽञ्जलिर्विरचितः कुरु निग्रहं मे
दासेऽपराधवति कोऽवसरः क्षमायाः ॥ ३१ ॥

मान निराधारस्त्वं गच्छाऽस्तु शिवस्तु पन्थास्ते ।
अमुना बद्धाञ्जलिना हृदयमशेषं निपीतं मे ॥ ३२ ॥

कयोरप्येतौ ।

सुतनु जहिहि कोपं पश्य पादानतं मां
न खलु तव कदाचित् कोप एवंविधोऽभूत् ।
इति निगदति नाथे तिर्यगामीलिताक्ष्या
नयनजलमनल्पं मुक्तमुक्तं न किञ्चित् ॥ ३३ ॥

अमरुकस्य ।

इति विप्रलंभे उक्तिप्रत्युक्तिवर्णनपद्धतिः ।



१ 'निधानाधारस्त्वं गच्छ शिवोऽस्तु' इति पाठः सम्यक् प्रतिभाति ।

# प्रसादवर्णनपद्धतिः ( ५८ )



परिम्लाने माने मुखशशिनि तस्याः करधृते
मयि क्षीणोपाये प्रणिपतनमात्रैकशरणे।
तया पक्ष्मप्रान्तध्वज[1]पटनिरुद्धेन सहसा
प्रसादो बाष्पेण स्तनतटविशीर्णेन कथितः॥ १ ॥

अमरुकस्य।

दृष्टे लोचनवन्मनाङ्मुकुलितं पार्श्वस्थिते वैक्लव[2]-
न्न्यग्भूतं बहिरासितं पुलकवत् स्पर्शे समातन्वति।
नीवीबन्धवदागतं शिथिलतां संभाषमाणे क्षणा-
न्मानेनापसृतं ह्रियेव सुदृशः पादस्पृशि प्रेयसि॥ २ ॥

कस्यापि।

सत्यं दुर्लभ एष वल्लभतमो रागो ममास्मिन्पुनः
कोपोऽस्यातिगुरुर्न चातिनिपुणास्सख्योऽपि संबोधने।
सञ्चिन्त्येति मृगीदृशा प्रियतमे दृष्टे श्लथां मेखलां
बध्नन्त्या न गतं स्थितं न च चलद्वासो न वा संवृ[3]तम्॥ ३ ॥

सत्यं भामिनि दुर्जनोऽस्मि दयिते पालयस्तथाऽपि त्वया
तद्दोषश्शतशो मृगाक्षि नियतं दीने मयि क्षम्यताम्।
इत्थं जल्पति वल्लभे मृगदृशा चक्षुर्लसत्संभृतं
रक्तत्वं विरलीकृतं च वदने दत्तं न किञ्चिद्वचः॥ ४ ॥

रुद्रस्यैतौ।

आगत्य प्रणिपातसान्त्वितसखीदत्तान्तरे सागसि
स्वैरं कुर्वति तल्पपार्श्वनिभृते धूर्तेऽङ्गसंवाहनम्।
ज्ञात्वा स्पर्शवशात्तयाँ[4] किल सखीभ्रान्त्या स्ववक्षश्शनैः
खिन्नाऽसीत्यभिधाय मीलितदृशा सानन्दमारोपितः॥ ५ ॥

कस्यापि।

---

१. व्रजपु. क. पाठभेदः २. ३. ४. वाक्यवत्, संभृतम्, तदा इति यथाक्रमं क. पाठभेदा बोध्याः।

वाचो वाग्मिनि किं तवाद्य परुषाः सुभ्रु भ्रुवोर्विभ्रमो-
ऽप्युद्भ्रान्तः कृत एष लोलनयने किं लोहिते लोचने।
नास्त्यागो मयि किं मुधैव कुपितेत्युक्ते पुरः प्रेयसा
मानिन्या जलबिन्दुदन्तुरपुटा दृष्टिस्सखीष्वाहिता ॥ ६ ॥

रुद्रस्य।

चक्षुर्लुप्तमषीकणं कवलितस्ताम्बूलरागोऽधरे
विश्रान्ता कबरी कपोलफलके ध्वस्ता च गात्रात् द्युतिः।
जाने संप्रति भामिनि प्रणयिना कैरप्युपायक्रमै-
र्भग्नो मानमहातरुस्तरुणि ते चेतस्स्थलीवर्धितः ॥ ७ ॥

कस्यापि।

सा यावन्ति पदान्यलीकवचनैरालीजनैः पाठिता
तावन्त्येव कृतागसो द्रुततरं संलप्य पत्युः पुरः।
प्रारेभे परतो यथा मनसिजस्येच्छा तथा वर्तितुं
प्रेम्णो मौग्ध्यविभूषणस्य सहजः कोऽप्येष कान्तः क्रमः ॥ ८ ॥

भट्टेन्दुराजस्य

॥ इति प्रसादवर्णनपद्धतिः ॥



१, २, ३, ४. आ, गामिना, व्याहृत्य, पु. इति यथाक्रमं क, पाठभेदाः।

# संभोगपद्धतयः। तत्र ऋतुषट्कम्।

## वसन्तवर्णनपद्धतिः ( ५९ )

तत्र ऋतुस्वभावः—

आताम्राः किरणा रवेर्नवदलत्वक्पल्लवाः पादपाः
वल्लयस्तारकतुल्यकान्तिसुमनस्सौरभ्यसंभाविताः।
वात्यस्मिन्मधुमत्तषट्पदपदव्याधूतचूतद्रुम-
प्राग्भारप्रपतत्परागपटलामोदी मरुद्दाक्षिणः॥ १॥

विष्फूर्जत्फालनेत्रानलबहलशिखासञ्चयैर्दर्शितौष्ण्यः
प्रोन्मीलन्नीलकण्ठद्युतिभिरभिनवाम्भोदलीलां दधानः।
चञ्चच्चूडाग्रजाग्रत्तुहिनकरकरोद्गीर्णशैत्यस्समन्ता-
दित्थं प्रोल्लासिकालत्रितयमयवपुः पातुवश्चन्द्रमौलिः॥ २॥

श्रीवैद्यभानुपण्डितस्यैतौ।

यत्प्रारम्भविजृम्भितो रतिपतिः शृङ्गारसञ्जीवनीं
धत्ते हृद्यविशृङ्खलां त्रिभुवनप्रक्षोभणीं प्रक्रियाम्।
उत्सर्पत्सहकारपुष्पमधुरामोदप्रपञ्चाञ्चिते
तस्मिन्सन्तु वसन्त एव सुलभस्थानाः कवीनां गिरः॥ ३॥

सूक्तिसहस्रात्।

असौ मरुच्चुंबितचारुकेसरः प्रसन्नतारापतिमण्डलाग्रणीः।
वियुक्तरामातुरदृष्टिवीक्षितो वसन्तकालो हनुमानिवागतः॥ ४॥

भट्टविज्जाकस्य।

गर्भग्रन्थिषु वीरुधां सुमनसो मध्येऽङ्कुरं पल्लवाः
वाञ्छामात्रपरिग्रहः पिकवधूकण्ठोदरे पञ्चमः।
किञ्चै त्रीणि जगन्ति जिष्णु दिवसैर्द्वित्रैर्मनोजन्मनो
देवस्यापि चिरोज्झितं यादि भवत्यभ्यासवश्यं धनुः॥ ५॥

राजशेखरस्य।

१, ग, क, ख, च, २, न्तु क, ख, छ.

माकन्देषु न यद्यपि प्रतिदिनं गर्भाङ्कुरग्रन्थयो
भिद्यन्ते न च यद्यपि प्रतनुते पुष्पाण्यशोकद्रुमः ।
धत्ते नान्यभृतस्य यद्यपि कलः कण्ठे पदं पञ्चमो
भ्रातः पश्य तथाऽप्ययं हतमधुश्चेतः करोत्युत्सुकम् ॥ ६ ॥

श्रीभोजदेवस्य ।

बाणानङ्कुरयन्ति पुष्पधनुषो वीरस्य चूतद्रुमाः
वासन्तीमुकुलानि संप्रति मुखैर्भिन्दन्ति भृङ्गाङ्गनाः ।
गण्डूषं प्रतिपालयन्ति सुदृशां पुष्पोद्गमे केसर-
स्तासां च स्तनमण्डलैः कुरवका गाढं तदालिङ्गनम् ॥ ७ ॥

नाथकुमारस्य ।

अग्रे स्त्रीनखपाटलं कुरवकं श्यामं द्वयोर्भागयो-
र्बालाशोकमुपोढरागसुभगं भेदोन्मुखं तिष्ठति ।
ईषद्बद्धरजःकणाग्रकपिशा चूते नवा मञ्जरी
मुग्धत्वस्य च यौवनस्य च सखे मध्ये मधुश्रीः स्थिता ॥ ८ ॥

कालिदासस्य ।

मन्दोऽयं मलयानिलः किसलयं चूतद्रुमाणां नवं
माद्यत्कोकिलकूजितं विचकिलामोदः पुराणं मधु ।
बाणानित्युपदीकरोति सुरभिः पञ्चैव पञ्चेषवे
यूनामिन्द्रियपञ्चकस्य युगपत्संमोहसंपादिनः ॥ ९ ॥

श्रीराजकविराजस्य ।

उद्यद्विद्रुमकान्तिभिः किसलयैस्ताम्रां त्विषं बिभ्रतो
भृङ्गालीविरुतैः कलैरविशदव्याहारलीलाभृतः ।
घूर्णन्तो मलयानिलाहतिचलैः शाखासमूहैर्मुहु-
र्भ्रांतिं प्राप्य मधुप्रसङ्गजनितां मत्ता इवामी द्रुमाः ॥ १० ॥

श्रीहर्षस्य ।

मालतीविरहाक्रान्ताः पश्य भृङ्गा मुमूर्षवः ।
आत्मानं प्रक्षिपन्तीव किंशुकप्रभवानले ॥ ११ ॥

कस्यापि ।

किंशुककलिकान्तर्गतमिन्दुकलास्पर्धि केसरं भाति।
रक्तनिचोलकपिहितं धनुरिव जतुमुद्रितं वितनोः॥ १२॥

बिज्जाकायाः।

निर्वाणङ्गारसंघैरिव मधुपकुलैः कालिमानं वहद्भि-
भस्त्रावातैरिवोद्यन्मलयगिरिगुहानिर्गतैस्तैर्मरुद्भिः।
उद्दीप्योद्दाममन्तर्विरहहुतभुजं निर्मिमीतेऽत्र पौष्पान्
बाणानक्षुण्णधारान्मधुरयमधुना लोहकारः स्मरस्य॥ १३॥

नाचिराजस्य।

स्थाने स्थाने मलयमरुतः पूरयन्त्यङ्कपालीं
पुष्पालीषु स्मरगजरजस्स्नानयोग्याः परागाः।
जातं चूते मधु मधुकरप्रेयसीजानुदघ्नं
निर्विघ्नत्वं सपदि भजते रागराज्याभिषेकः॥ १४॥

मानग्रन्थिकदर्थनाय कथितास्सर्वत्र पुंस्कोकिलाः
क्रीडाकर्मणि दाक्षिणात्यमरुतामध्यक्षभावोऽर्पितः।
पुष्पास्त्रस्य जगत्त्रयेऽपि विरहिप्रत्यूहहेवाकिनः
सन्नद्धोऽयमसाध्यसाधनविधौ साम्राज्यमन्त्री मधुः॥ १५॥

बिल्हणस्यैतौ।

कोकिलालापः—

स्तोत्रं चैत्रगुणोदयस्य विरहिप्राणप्रयाणानक-
ष्टंकारः स्मरकार्मुकस्य सुदृशां शृङ्गारदीक्षागुरुः।
डोलाकेलिकलासु मङ्गलपदं वन्दी वनान्तश्रियां
नादोऽयं कलकण्ठकण्ठकुहरप्रेंखोलितः श्रूयते॥ १६॥

श्रीपालकविराजस्य।

यः श्रोत्रामृतनिर्झरैकवसतिं निर्व्याजमारूढवान्
यस्सञ्जीवनमन्त्रितां त्रिणयनप्लुष्टस्य चेतोभुवः।
वीणावन्मसृणो ध्वनिश्चतसृणां पात्रं श्रुतीनामभू-
त्सोऽयं कोकिलकण्ठवेणुविवरव्यापारितः पञ्चमः॥ १७॥

बिल्हणस्य।

१. २. ३. ४. भङ्गैः, मारो, शिक्षा, क्रीडा इति यथाक्रमं क. पाठभेदाः।

यश्चूताङ्कुरकन्दलीकवलनात् कर्णामृतग्रामणी-
 च्छायामात्रपरिग्रहोऽपि जगृहे पञ्चेषुजैत्रेषुताम् ।
ताम्यत्तालुविटङ्कसङ्कटतटीसंचारितः पञ्चमः
 सोऽयं कोकिलकामिनीगलबिलादामूलमुन्मीलति ॥ १८ ॥

चूतः—

सृष्टा वयं यदि ततः किमियं मृगाक्षी सेयं वयं यदि ततः किमयं वसन्तः ।
सोऽप्यस्तु नाम जगतः प्रतिपक्षभूतश्चूतद्रुमः किमिति निर्मित एष धात्रा ॥१९॥

कस्यापि ।

किं द्वारि दैवहतिके सहकारकेण
 संवर्धितेन विषवृक्षक एष पापः ।
यस्मिन्मनागपि विकासविकारभाजि
 घोरा भवन्ति मदनज्वरसन्निपाताः ॥ २० ॥

विकटनितंबायाः ।

नेयं चूतलता विराजति धनुर्लेखा स्थितेयं पुरो
 नासौ गुञ्जति भृङ्गपद्धतिरियं मौर्वी टणत्कारिणी ।
नैते नूतनपल्लवाः स्मरभटस्यामी स्फुटं पत्रिणः
 शोणास्तत्क्षणभिन्नपान्थहृदयप्रस्यन्दिभिश्शोणितैः ॥ २१ ॥

श्रीपालकविराजस्य ।

बत सखि कियदेतत् पश्य वैरं स्मरस्य
 प्रियविरहकृशेऽस्मिन् रागिलोके तथाहि ।
उपवनसहकारोद्भासिभृङ्गच्छलेन
 प्रतिविशिखमनेनोदञ्चितं कालकूटम् ॥ २२ ॥

पुष्पेषोरस्त्रकोशः शुकपठनमठः स्वस्तिवासः पिकाना-
 माम्रः साम्राज्यलक्ष्मीमनुभवतुतमामत्र कान्ते वसन्ते ।
पाकप्राप्तिप्रकर्षारुणगुणगुरुणा यत्फलानां रसेन
 श्रीसौभाग्येन जिग्ये मरकतकुतुपक्रोडजाम्बूनदाम्बु ॥ २३ ॥

कयोरप्येतौ ।

मदमधुरविलासानल्पभृङ्गाभिरामा
ललितमुकुलळीलोद्भिन्नदन्ताङ्कुरश्रीः।
मलयपवनवेल्लत्पर्णकर्णाग्रभागा
लसति बत वसन्ते मञ्जरी कुञ्जरीव ॥ २४ ॥

वामननागस्य।

वसन्तवायवः—

कृतप्रकोपाः पवनाशनानां निवासदानादिव पन्नगानाम्।
विनिर्ययुश्चन्दनशैलकुञ्जादाशामुदीचीं प्रति गन्धवाहाः ॥ २५ ॥

मलयगिरिसमीराः सिंहलद्वीपकान्ता-
मुखपरिचयलब्धस्फारकर्पूरवासाः।
द्रविडयुवतिदोलाकेलिलोलन्नितम्ब-
स्थलशिथिलितवेगास्सेव्यतामाप्नुवन्ति ॥ २६ ॥

पानीयं नालिकेरीफलकुहरकुहूकारि कल्लोलयन्तः
कावेरीतीरतालद्रुमचरितसुराभाण्डभाङ्कारचण्डाः।
एते तन्वन्ति वेलावनललितलताताण्डवं द्राविडस्त्री-
कर्पूरापाण्डुगण्डस्थललुलितरया वायवो दाक्षिणात्याः ॥ २७ ॥

तन्वानश्शीतलत्वं जलधितटवनोत्तालतालासवानां
दोलाव्यालोलचोलीगुरुरमण( चरण ? )भरोत्फालहेलासहायः।
वायुर्वात्येष दन्तव्रणमधरदले लालयन् केरलीना-
मुन्मीलल्लक्ष्यशिक्षाश्रमकुसुमधनुर्दक्षिणो दाक्षिणात्यः ॥ २८ ॥

बिल्हणस्यैते।

ये दोलाकेलिकाराः किमपि मृगदृशां मानतन्तुच्छिदो ये
सद्यःशृङ्गारदीक्षाव्यतिकरगुरवो ये च लोकत्रयेऽपि।
ते कण्ठे लोलयन्तः परभृतवयसां पञ्चमं रागराजं
वान्ति स्वैरं समीराः स्मरविजयमहासाक्षिणो दाक्षिणात्याः ॥ २९ ॥

सुरतभरखिन्नपन्नगविलासिनीपानकेलिजर्जरितः।
पुनरिह विरहश्वासैर्मलयमरुन्मांसलीक्रियते ॥ ३० ॥

राजशेखरस्यैतौ ।

सललितमलकानां वल्लरीर्नर्तयन्तो
मधुसुरभिमुखाब्जोच्छ्वासगन्धानुबन्धाः ।
उपरिसुरतभाजां योषितां स्वेदबिन्दून्
सतृष इव पिबन्तो वान्ति मन्दं समीराः ॥ ३१ ॥

स्मेराम्भोरुहपत्तने परिमलस्तेयी वसन्तानिल-
स्तत्रत्यैरपि यामिकैर्मधुकरैराबद्धकोलाहलः ।
निर्यातस्त्वरया व्रजन्निपतितः श्रीखण्डपङ्कद्रवै-
र्लिप्ते पिच्छिलकेरलीकुचतटे खञ्जन् शनैर्गच्छति ॥ ३२ ॥

कयोरप्येतौ ।

कावेरीवारिवेल्लल्लहरिपरिकरक्रीडन[क्रान्त]शीताः
स्फीतश्रीखण्डषण्डभ्रमणभरभवद्भूरिसौरभ्यगर्भाः ।
चोलस्त्रीलोलचेलाञ्चलचलनकलाक्रान्तकान्तास्तनान्ता
वान्ति प्रेयोवियोगातुरतररमणीवैरिणोऽमी समीराः ॥ ३३ ॥

कृष्णपिल्लस्य ।

वसन्तपथिकाः—

लतानामेतासामुदितकुसुमानां मरुदयं
मतं लास्यं दत्वा श्रयति भृशमामोदमसमम् ।
लतास्त्वध्वन्यानामहह दृशमादाय सहसा
ददत्याधिव्याधिभ्रमिरुदितमोहव्यतिकरम् ॥ ३४ ॥

कस्यापि ।

सा व्याधेः कृशता क्षतस्य रुधिरं दष्टस्य लालास्रुतिः
सर्वं नैतदिहास्ति तत्कथमसौ पान्थस्तपस्वी मृतः ।
आः ज्ञातं मधुलम्पटैर्मधुकरैरारब्धकोलाहले
नूनं साहसिकेन चूतमुकुले दृष्टिस्समारोपिता ॥ ३५ ॥

रामिलसोमिलयोः ।

१ भिन्न क. ख. च. २ रत, क. ख. च. ३ क्रीड. क. ख. च.

अमी हेलोन्मेषव्यसनिषु पलाशेषु परितः
पिबन्ति स्वच्छन्दं मधु मधुलिहो माद्यति जनः।
अयं च प्रत्यग्रं दशति सहकारं परभृतो
यदीदं मर्मान्तर्विदलति क एष व्यतिकरः॥ ३६॥

कटुकादित्यस्य।

अध्वन्यस्य वधूर्वियोगविधुरा भर्तुस्स्मरन्ती यदि
प्राणानुज्झति तस्य तत्खलु महत्सञ्जायते पातकम्।
यावन्नो कृतमध्वगेन हृदये तावत्तरोर्मूर्द्धनि
प्रोद्धुष्टं परपुष्टया तव तवेत्युच्चैर्वचोऽनेकशः॥ ३७॥

अस्थिक्षोदवतीव कुन्दमुकुलैः फुल्लैः पलाशद्रुमैः
साङ्गारप्रकरेव धूमकलुषेवोत्पातिभिः षट्पदैः।
रक्ताक्षद्युतिभिस्सशेषदहनालातेव पुंस्कोकिलै-
र्दृष्टा प्राणसमाचितेव पथिकैराराद्वनान्तस्थली॥ ३८॥

कयोरप्येतौ।

बधिरितचतुराशा प्रीति (त) हारीतनादै-
र्बहलबकुलपुष्पैरन्धपुष्पन्धयाऽसौ।
नि[2]धुवनविधि[3]र्मोहो[4]न्मूककोका वनश्रीः
कथमिव पथिकानां नैव [वैक]ल्यहेतुः॥ ३९॥

श्रीपालकविराजस्य।

अध्वन्यैर्मकरन्दशीकरसुरामत्तक्वणत्कोकिले
मार्गे मार्गनिरोधिनी परिहृता शङ्केऽशुभाशङ्कया।
पान्थस्त्रीवधपातकादुपगतं चण्डालिचिह्नं मधो-
रेषा किङ्किणिकेव षट्पदमयी झङ्कारिणी संहतिः॥ ४०॥

कस्यापि।

॥ इति भगदत्तजल्हणविरचितायां सूक्तिमुक्तावल्यां वसन्तवर्णनपद्धतिः॥

---

१ ऐष. क. ख. ग. घ. च २. विधु. ३ विधु. ४ न्मूक. ५. कोपा. क. ख. च. ६. कोल. क. ख. ग. घ. च.

# ग्रीष्मपद्धतिः ( ६० )

तत्र ऋतुस्वभावः—

वर्षत्यग्निकणानिवोष्णकिरणः काष्ठास्तु दावानल-
ज्वालाजालजटालभूधरमिलद्धूम्यान्धकाराविलाः ।
वृक्षा जीर्णविशीर्णपर्णपटलाः शुष्यल्लतालिङ्गिता
नद्यस्तप्तकरीन्द्रकेलिकलुषा ग्रीष्मे मरुन्नैर्ऋतः ॥ १ ॥

वैद्यभानुपण्डितस्य ।

ततः प्राविरभूद्ग्रीष्मस्तपन्वसुमतीमिमाम् ।
सपिण्डः कालकूटस्य सप्तजिह्वस्य सोदरः ॥ २ ॥

तपनं बिभ्रदाकाशो जगत्क्राथविशृङ्खलम् ।
स्फुरल्ललाटनयनं हरं नाटयति स्फुटम् ॥ ३ ॥

क्वापि क्वापि दिगन्ते कृशधवलः कोऽपि कोऽपि घनलेशः ।
तिग्मद्युतिदग्धानां ताराणां भस्मवद्भाति ॥ ४ ॥

सूक्तिरत्नाकरादेते ।

प्रतिगतमर्थिजनानां विच्छिन्नाशं समूहमवलोक्य ।
स्फुटितमपयशस्तापादिव हृदयतलं तडागस्य ॥ ५ ॥

कस्यापि ।

रवेस्समस्तक्षितिमध्यगं रसं निपीय पीनत्वमतीव बिभ्रतः ।
भरेण वाजिष्विव मन्दगामिषु क्रमेण दैर्घ्यं दिवसाः प्रपेदिरे ॥ ६ ॥

बिह्लणस्य ।

भ्रमन्त्यः परितश्छायाः पततां भ्राम्यतां दिवि ।
विभान्ति घर्मतप्तोर्वीस्पर्शजातव्यथा इव ॥ ७ ॥

सूक्तिसहस्रात् ।

तप्ता मही विरहिणामिव चित्तवृत्ति-
स्तृष्णाऽध्वगेषु कृपणेष्विव वृद्धिमेति।
सूर्यः करैर्दहति दुर्वचनैः खलो नु
छाया सतीव न विमुञ्चति पादमूलम् ॥ ८ ॥

कस्यापि।

पच्यन्ते स्थलचारिणः क्षितिरजस्यङ्गारभूयंगते
क्वथ्यन्ते जलजन्तवः प्रतिनदं तापोल्बणैर्वारिभिः।
भर्ज्यन्ते शि(खच)राः खरातपशिखापुञ्जे तदेभिर्दिनै-
र्मांसा(स्पा)कः (?) क्रियते दिनेऽथ नियमाद्वैवस्वताय ध्रुवम् ॥ ९ ॥

श्रीपालकविराजस्य।

अङ्गारैः खचितेव भूर्वियदपि ज्वालाकरालं[लैः]करै-
स्तिग्मांशोः किरतीव तीव्रमभितो वायुः कुकालानलम्[1]।
अप्यम्भांसि नखम्पचानि सरितामाशा ज्वलन्तीव च
ग्रीष्मेऽस्मिन्नववह्निदीपितमिवाशेषं जगद्वर्तते ॥ १० ॥

श्रीभोजदेवस्य।

निजां कायच्छायां श्रयति महिषः कर्दमधिया
च्युतं गुञ्जापुञ्जं रुधिरमिति काकः कलयति।
समुत्सर्पन् सर्पः सुषिरविवरं तापविवशः
ससीत्काराधूतं प्रविशति करं कुञ्जरपतेः ॥ ११ ॥

क्षेमेन्द्रस्य।

विशुष्यत्तोयान्तश्शयितमहिषघ्राणकुहरं
प्रतिश्यायक्लिन्नं विशति शफरस्तापविवशः।
अनिच्छन्तो घर्मक्वथनपरुषं वारि सरितां
लिहन्ति स्वाङ्गानि श्रमजलकणार्द्राणि हरिणाः ॥ १२ ॥

तापावसन्नशयितं सरणौ तरक्षुमुल्लङ्घ्य धावति मृगे मृगतृष्णिकायै।
तत्कोपितो मुखमुदञ्चितमेष घर्मप्लोषात्त्रसन्नवनमय्य तथैव शेते ॥ १३ ॥

सर्वदासस्यैतौ।

१. कुकूलेति शार्ङ्गधरीय पाठः।

कानि स्थानानि दग्धान्यतिशयगहनास्सन्ति वा के प्रदेशाः
किं वा शेषं वनस्य स्थितमिति पवनासङ्गविस्पष्टतेजाः ।
चण्डज्वालावलीढस्फुटिततरुलताग्रन्थिमुक्ताट्टहासो
दावाग्निश्शुष्कवृक्षे शिखरिणि गहनेऽधिष्ठितः पश्यतीव ॥ १४ ॥

भीमस्य ।

उद्धूय धूलीर्धवला रसातला-
द्वात्या लगन्ती गगने व्यवर्तत ।
फूत्कारयन्त्येव भुवोद्धृता भुजा
निदाघतापाकुलया तपात्ययें[1] ॥ १५ ॥

कविकेलेः ।

अपि तरुवनान्यूष्मायन्ते तपत्यपि यामिनी
दहति सरसीवातोऽप्येष ज्वलन्ति जलान्यपि ।
इति समधिकं ग्रीष्मे भीष्मे न पुण्यवतां भयं
मलयजरसैर्दिग्धं लब्ध्वा वधूस्तनमण्डलम् ॥ १६ ॥

श्रीपालकविराजस्य ।

अत्यच्छं सितमंशुकं शुचि मधु प्रच्छायमच्छं रजः
कर्पूरं विधृतार्द्रचन्दनकुचद्वन्द्वाः कुरङ्गीदृशः ।
धारावेश्म सपाटलं विचकिलस्रग्दाम चन्द्रत्विषो
धातस्सृष्टिरियं वृथैव तव न ग्रीष्मोऽभविष्यद्यदि ॥ १७ ॥

मध्याह्नः—

दुस्सहसन्तापभयात्संप्रति मध्ये स्थिते दिवसनाथे ।
छायामिव वाञ्छन्ती छायापि गता तरुतलानि ॥ १८ ॥

श्रीमदवन्तिवर्मणः ।

आदौ मानपरिग्रहेण गुरुणा दूरं समुत्सारितां
पश्चात्तापभरेण तामतिकृशां नीतां परं लाघवम् ।
उत्सङ्गान्तरवर्तिनीमनुगतां संपीडिताङ्गीमिमां
सर्वाङ्गप्रणयप्रियामिव तरुश्छायां समालम्बते ॥ १९ ॥

[ अनङ्गहर्षस्य ]

१ व्ययम् क. ख. त्ययम् च. त्यये क. पाठभेदः

उद्दामद्युमणिद्युतिव्यतिकरप्रक्रीडदर्कोपल-
ज्वालाजालजटालजाङ्गलतटीनिष्कूजकोयष्टयः ।
भीमोष्मप्लवमानसूरकिरणक्रूरप्रकारां दृशो-
रायुःकर्म समापयन्ति धिगमूर्मध्याह्नशून्या दिशः ॥ २० ॥

श्रीमुरारेः ।

धत्ते पङ्कजिनीदलेच्छुरुपरि स्वं कर्णतालं द्विपः
शष्पस्तम्बधिया नियच्छति शिखी मध्येशिखण्डं शिरः ।
मिथ्या लेढि मृणालकोटिकुटिलं दंष्ट्राङ्कुरं सूकरो
मध्याह्ने महिषश्च वाञ्छति निजच्छायामहाकर्दमम् ॥ २१ ॥

राजशेखरस्य ।

सौहित्यस्तिमितैरुदश्चदलसग्रीवाभिरामं मुहु-
र्मध्याह्ने स्फुरदर्ककर्कशरुचि प्रान्तस्थलीवर्तिभिः ।
दत्ताः सिन्धुषु माहिषैः क्रमकृशस्रोतस्सु पङ्कोदरे
निद्रामीलितपक्ष्मपद्धतिपरिव्यक्तारुणा दृष्टयः ॥ २२ ॥

सर्पद्वारिणि वारिशीतलतले विन्यस्तपुष्पोत्करे
नीरन्ध्रे कदलीवने गुरुदलच्छायाहतार्कत्विषि ।
कर्पूरागरुपङ्कपिच्छिलघनोत्तुङ्गस्तनालिङ्गिभिः
कान्ताकेलिरतैरहो सुकृतिभिर्मध्यन्दिनं नीयते ॥ २३ ॥

कयोरप्येतौ ।

ग्रीष्मवायवः—

कारञ्जीः कूजयन्तो निजजठररवव्यञ्जिता बीजकोशी-
रुत्पाकान्कृष्णलानां पृथुसुषिरगतान् शिम्बिकान् पाटयन्तः ।
झिल्लीकाझल्लरीणां बधिरितभुवनं झंकृतं खे क्षिपन्तः
शिञ्जानाश्वत्थपत्रप्रकरझणझणारावि़णो वान्ति वाताः ॥ २४ ॥

भट्टबाणस्य ।

१ रसारि. ग. घ. २ शिखर. ग. घ.

आध्मातोद्धतदाववह्निसुहृदः कीर्णोष्णरेणूत्कराः
सन्तप्ताध्वगमुक्तखेदविषमश्वासोष्मसंवादिनः ।
तृष्णार्ताजगरायतास्यकुहरक्षिप्रप्रवेशोत्कटाः
भ्रूभङ्गैरिव तर्जयन्ति पवनाः प्लुष्टस्थलीकज्जलैः ॥ २५ ॥

क्षेमेन्द्रस्य ।

ग्रीष्मपथिकः—

सर्वाशारुधि दग्धवीरुधि सदा सारङ्गबद्धक्रुधि
क्षामक्ष्मारुहि मन्दमुन्मधुलिहि स्वच्छन्दकुन्दद्रुहि ।
शुष्यत्स्रोतसि तप्तभूरिरजसि ज्वालायमानार्णसि
ग्रीष्मे[1] मासि ततार्कतेजसि कथं पान्थ व्रजन् जीवसि ॥ २६ ॥

ग्रीष्मोष्मप्लोषशुष्यत्पयसि बकभयभ्रा[2]न्तपाठीनभाजि
प्रायः पङ्कैकशे[3]षं गतवति सरसि स्वल्पतोये लुठित्वा ।
कृत्वा कृत्वा जलार्द्रीकृतमु[4]परि जरत्कर्पटार्धं प्रपायां
तोयं पीत्वाऽपि पान्थः पथि वहति हहाहेति कुर्वन् पिपासुः ॥ २७ ॥

भ्राम्यच्चीत्कारिचक्रभ्रमभरितघटीयंत्रचक्रप्रमुक्त-
स्रोतःपूर्णप्रणालीपथसरणिसिरासारिसीत्कारि (?) वारि ।
कौपं पान्थाः प्रकामं सितमणिमुसलाकारविस्फारिधारं
विक्षिप्तक्षुण्णमुक्ताकणनिकरनिभासारपातं पिबन्ति ॥ २८ ॥

भट्टबाणस्यैते ।

वाताकीर्णविशीर्णवीरणतृणश्रेणीझणत्कारिणि
ग्रीष्मे सोष्मणि चण्डसूर्यकिरणप्रक्वाथ्यमानार्णसि ।
चित्तारोपितकामिनीमुखशशिज्योत्स्नाहृतक्लान्तयो
मध्याह्नेऽपि सुखं प्रयान्ति पथिकाः स्वं देशमुत्कण्ठिताः ॥ २९ ॥

कस्यापि ।

---

१. ज्येष्ठे इति शार्ङ्गधरीयः पाठः २. क्रान्त. क. त्रान्त. ख. ३. मात्रं. क. ख. च. ४. मुरसि. ग. पाठभेदः ५. न परं. क. ख. च.

प्रपापालिका—

अङ्गुल्यग्रवि(नि)रोधतस्तनुतरां धारामियं कुर्वती
कर्कर्या [ सुचिरं ] पयो निपुणिका दातुं प्रपापालिका ।
विश्लिष्टाङ्गुलिना करेण दशनापीडं शनैः पान्थ हे
निष्पन्दोर्ध्वविलोचनस्त्वमपि तज्जानासि पातुं पयः ॥ ३० ॥

कस्यापि ।

पिबन्नम्भः प्रपापालीमनुरक्तां विलोकयन् ।
अगस्त्यं चिन्तयामास चतुरस्सोऽपि सागरान् ॥ ३१ ॥

कस्यापि ।

दृशं प्रपापालिकया प्रकाशिते
निवेशयन् कुम्भधिया कुचद्वये ।
विवेद पान्थः कलशात्परिच्युतां
न वारिधारां मुखसङ्गिनीमपि ॥ ३२ ॥

बिल्हणस्य ।

दूरादेव धृतोऽञ्जलिर्न तु पुनः पानीयपानोचितो
रूपालोकनकौतुकात्प्रचलितो मूर्धा न शान्त्या तृषः ।
रोमाञ्चोऽपि निरन्तरं प्रकटितः प्रीत्या न शैत्यादपा-
मक्षुण्णो विधिरध्वगेन विहितो वीक्ष्य प्रपापालिकाम् ॥ ३३ ॥

कस्यापि ।

॥ इति भगदत्तजल्हणविरचितायां सूक्तिमुक्तावल्यां संभोगशृंगारे ग्रीष्मवर्णनपद्धतिः ॥



१. कृतो.

# वर्षापद्धतिः ( ६१ )



विद्युत्पङ्कजषण्डपङ्कपटली व्योमस्थलीशाद्वलः
केदारः कलमाङ्कुरप्रतिभुवां धारातलानामयम् ।
शैवालावलिरद्रिमूर्ध्नि सरितां सूर्येन्दुकारागृहं
कन्दर्पोत्सववैजयन्ति भवतु प्रीत्यै तवाम्भोधरः ॥ १ ॥

बिल्हणस्य ।

व्याप्तं भिन्नेन्द्रनीलद्युतिभिरिव घनैर्मेघजालैर्विशालै-
रुद्यद्विद्युद्विलासैः सुरधनुरनुगैर्व्योम वेल्लद्बलाकैः ।
उर्वी गुर्वी शिलीन्द्रार्जुनकुटजतृणैर्भाति सस्यैः प्रशस्यैः
कादम्बामोदवाही जलधरसमये वारुणो वाति वातः ॥ २ ॥

श्रीवैद्यभानुपण्डितस्य ।

अथ मनसिजदिग्जयाभिशंसी जलधरदुन्दुभिराततान शब्दम् ।
तदनु तदनुजीविभिः कदम्बैः क्वचितप्रुन्मदषट्पदच्छलेन ॥ ३ ॥

शीतलादिव संत्रस्तं प्रावृषेण्यान्नभस्वतः ।
नभो बभार नीरन्ध्रं जीमूतकुलकम्बलम् ॥ ४ ॥

अर्धेन जलदश्याममर्धेनातपपिङ्गलम् ।
अर्धनारीश्वराकारं न को मन्येत वासरम् ॥ ५ ॥

सर्वदासस्यैतौ ।

कशाभिरिव हैमीभिर्विद्युद्भिरिव ताडितम् ।
अन्तस्तनितनिर्घोषं सवेदनमिवाम्बरम् ॥ ६ ॥

मेघकृष्णाजिनधरा धारायज्ञोपवीतिनः ।
मारुतापूरितगुहाः प्राधीता इव पर्वताः ॥ ७ ॥

श्रीवाल्मीकेरेतौ ।

दिङ्नारीकबरीभरभ्रमकराः प्रावृड्वधूटीनटी-
नीलीरक्तपटाः प्रसूनधनुषः कार्ष्णायसाः कंकटाः।
व्योमोत्तालतमालमांसलदलश्यामायमाना घनाः
प्रोन्मीलन्ति सतैलकज्जलमषीजम्बालजालत्विषः॥ ८॥

कस्यापि।

वज्रेण त्रिजगत्पतेर्बलरिपोरच्छिन्नपक्षाः पुरो(रा)
ये भीता निममज्जुरब्धिजठरे ते लूनपक्षान् गिरीन्।
आश्वास्य व्रणदुःखजां शमयितुं तेषामुदन्यां जलै-
रुत्तस्थुर्जलदच्छलेन जलधेरूढाम्भसः पर्वताः॥ ९॥

सूक्तिसहस्रात्।

पञ्चेषोर्जयघोषणागुणनिधिस्त्रैलोक्यचिन्ता(त्ता?)तिथि-
स्तूर्यं ताण्डवसंविधासु शिखिनां हंसप्रवासानकः।
सूतिस्वस्त्ययनं विडूरवसुधारत्नाङ्कुराणामयं
गंभीरैस्तनितध्वनिर्जलमुचां रोदोगृहं गाहते॥ १०॥

गन्धिकभुल्लकस्य।

गम्भीरोद्गर्जितेन त्रिभुवनविवरं व्याप्य भूकम्पदेन
प्राचीमाक्रम्य विश्वं परिपिबति पयोमेदुरे कालमेघे।
दृष्टा धाराकदम्बस्तबकधवलिताः प्रोषितैरुन्मयूरा
मूर्च्छाश्यामायमाना यममहिषकुलाकृष्यमाणा इवाशाः॥ ११॥

भट्टबाणस्य।

स्फुरद्भीमाभोगस्तरुणमहिषस्कन्धमलिनो
ललद्विद्युज्जिह्वः कृतकटकटध्वाननिनदः।
दिशन्नुद्यच्चापभ्रुकुटिघटनाभिः प्रतिभयं
घनर्तुः प्रारंभे ग्रसितुमिव विश्वं व्यवसितः॥ १२॥

श्रीभोजदेवस्य।

---

१. मुदग्रव्यथाम् इति शार्ङ्गधरीयः पाठः २. रक्ता. ख. ३. रःपटह. ग. ४. भूल्लक. ग ५. कटुकटुक. ६. क्रतुकरक. ख. कृतकरक. च. कृतककटक. क. पाठभेदः।

मन्दं मुद्रितपांसवः परिपतज्झंकारिझंझामरु-
द्वेगध्वस्तकुटीरकाग्रनिपतच्छिद्रेषु लब्धान्तराः ।
कर्मव्यग्रकुटुम्बिनीकुचभरस्वेदच्छिदः प्रावृषः
प्रारम्भे मदयन्ति कन्दलदलोल्लासाः पयोबिन्दवः ॥ १३ ॥

अमरुकस्य ।

किञ्चिन्मुद्रितपांसवः शिखिकुलैरुत्पक्ष्ममालोकिता
जीर्णावासरुदद्दरिद्र[गृहिणी]श्वासानि[1]लैर्जर्जराः ।
एते ते निपतन्ति नूतनघनाः प्रावृट्समारम्भिणो
विच्छायीकृतविप्रयुक्तवनितावक्त्रेन्दवो बिन्दवः ॥ १४ ॥

कस्यापि ।

आकर्ण्य स्मरयौवराज्यपटहं जीमूतनूत्नध्वनिं
नृत्यत्केकिकुटुम्बकस्य ददतं मन्द्रां मृदङ्गक्रियाम् ।
उन्मीलन्नवनीलकन्दलदलव्याजेन रोमाञ्चिता
हर्षेणेव समुच्छ्रितान्वसुमती दध्रे शिलीन्ध्रध्वजान् ॥ १५ ॥

त्रिविक्रमभट्टस्य ।

दिग्भस्त्रामुखमुच्यमानपवनप्रेङ्खोलनावर्तित-
ज्वालाजालजटालवैद्युतशिखिप्रद्योतमानात्मभिः ।
नीरन्ध्रं रसगर्भितैरकलुषव्योमार्कचन्द्रान्मुहुः
कालोऽयं धमतीव तोयदमहामूषासहस्रैर्दिवि ॥ १६ ॥

श्रीपालकविराजस्य ।

अस्थिरमनेकरागं गुणरहितं नित्यवक्रदुष्प्रापम् ।
प्रावृषि सुरेन्द्रचापं विभाव्यते युवतिचित्तमिव ॥ १७ ॥

कस्यापि ।

क्षपाः क्षामीकृत्य प्रसभमपहृत्याम्बु सरितां
प्रताप्योर्वीं कृत्स्नां तरुगहनमुच्छोष्य सकलम् ।
क्व संप्रत्युष्णांशुर्गत इति तदालोकनपरा-
स्तडिद्दीपालोका दिशि दिशि चरन्तीव जलदाः ॥ १८ ॥

पाणिनेः ।

१. शापावि. क. ख. च. २. धीर. शार्ङ्गधरीयः पाठः

जलधिवारि निपीतवतो भृशं वनमुचो रुधिरस्रवलोहिताः ।
अतिभरस्फुटितोदरनिर्गता विबभुरन्त्रलता इव विद्युतः ॥ १९ ॥

जलधरस्य तटे तडितो बभु-
र्ग्रहगणग्रसनानि वितन्वतः ।
उदरमाशु विभिद्य विनिर्गता
रविकरा इव काञ्चनरोचिषः ॥ २० ॥

कुमारदासस्यैतौ ।

देवे कुर्वति दुर्दिनव्यतिकरं नास्त्येव तन्मन्दिरं
यत्राहारगवेषणाय बहुशो नासीद्गता वायसी ।
किन्तु प्राप न किञ्चन क्वचिदपि प्रस्वापहेतोस्तथा-
ऽप्युद्भिन्नार्भकचञ्चुषु भ्रमयति स्वं रिक्तचञ्चूपुटम् ॥ २१ ॥

देवे वर्षत्यशनपचनव्यापृता वह्निहेतो-
र्गेहाद्गेहं फलकनिचितैस्सेतुभिः पङ्कभीताः ।
नीध्रप्रान्तानविरलजलान् पाणिभिस्ताडयित्वा
शूर्पच्छत्रस्थगितशिरसो योषितस्सञ्चरन्ति ॥ २२ ॥

कयोरप्येतौ ।

यो गात्रापरमध्यमं निविशते मेघाम्बुधाराभया-
त्रातुं पोतमचञ्चलैव करिणी तं वत्सला श्राम्यति ।
तत्कुम्भस्थलपातिनं परिहरन्नासारमम्भोजिनी-
पत्रच्छत्रमुदस्य गर्जति मुहुः कुप्यन् घनेभ्यो गजः ॥ २३ ॥

अम्भोदस्तनितं निशम्य करिणां बृंहेति रंहोयुत-
स्सद्यस्त्यक्तमहीध्रकन्दरगृहः कौतूहली निर्गतः ।
एतस्मिन् क्षण एव चण्डमशनेराकर्ण्य शब्दं क्रुधा
तं प्रत्युत्पतति स्वगर्जितजितं धीरो मृगाणां पतिः ॥ २४ ॥

1. विस क. ख. च.

अन्योन्यवारिघटितौ घनवारिपाता-
द्भीतौ भृशं मृगवधूर्मृगयूथपश्च ।
वित्रस्तया घटनया कृतसौख्यमोहौ
नैवा[म्बु]वाहजलशीकरपातपीडाम् ॥ २५ ॥

स्कन्धं तरोर्घनदलस्थगितोर्ध्वभाग-
मध्यास्य गाढकलितशिशुवल्लभाभ्याम् ।
अम्भो यतः पतति मूर्ध्नि निजे कपिस्त-
त्पत्रं विलोकयति हुंकृतिपूर्वलौल्यः ॥ २६ ॥

सूक्तिसहस्राद्धत

प्रसरदलकाकीर्णे कर्णे न केकिरुतं श्रुतं
श्वसितविजितो वातो घ्रातो नवा कुटजोत्कटः ।
न च परिचिता शंपासम्पत्स्नुताश्रुणि लोचने
तदपि किमपि प्रावृट् पापा दुनोति वियोगिनीम् ॥ २७ ॥

कस्यापि ।

सोत्साहा नववारिभारिगुरवो मुञ्चन्तु नादं घना
वाता वान्तु कदम्बरेणुशबला नृत्यन्त्वमी बर्हिणः ।
मग्नां कान्तवियोगदुःखजलधौ दीनां विलोक्याङ्गनां
विद्युत्प्रस्फुरसि त्वमप्यकरुणा स्त्रीत्वेऽपि तुल्ये सति ॥ २८ ॥

बिज्जाकायाः ।

वर्षावायवः—

धाराधौतं[१] धुवानाश्शशधरधवलं केसरं केतकीनां
कैलासे किन्नरीणां चलदलकलतालास्यलीलां दधानाः ।
आमूलं मानिनीनां मनसि विनिहितं मानमुन्मूलयन्तो
वान्त्येते वारिवाहव्यतिकरशिशिराः प्राक्षेण्याः समीराः ॥ २९ ॥

कस्यापि ।

१. सा वा. शार्ङ्गधरीयः पाठः २. श्यामा. शार्ङ्ग पाठः ३. धुना. क. पाठभेदः ।

एते केतकसूचिसौरभजुषः पौरप्रगल्भाङ्गना-
व्यालोलालकवल्लरीविलुलनव्याजोपभुक्ताननाः।
किञ्चोन्निद्रकदम्बकुड्मलकुटीधूलीलुठत्षट्पद-
व्यूहव्याहृतिहारिणो विरहिणः कर्षन्ति वर्षानिलाः॥ ३० ॥

योगेश्वरस्य।

आमोदेन कदम्बकन्दलभुवा लिम्पन्नशेषं नभः
प्रीतिस्फीतमयूरबृन्दनटनप्रस्तावनापण्डितः।
अम्भोदप्रथमोदबिन्दुरचनानिर्मृष्टघर्मश्रमै-
र्वायुर्वाति भयङ्करः प्रवसतां मेघङ्कराडम्बरः॥ ३१ ॥

कस्यापि।

एते ते दुरतिक्रमक्रममिलद्धर्मोर्मिमर्मच्छिदः
कादम्बेन रजोभरेण ककुभो रुन्धन्ति जंझानिलाः॥
गाढारम्भनिरुद्धनीरदघटासंघट्टनीलीभव-
द्व्योमक्रोडकटाहपातुकपयोवेणीकणग्राहिणः॥ ३२ ॥

कृष्णपिल्लस्य।

प्रावृट्पथिकः—

उपरि घनं घनपटलं तिर्यग्गिरयोऽपि नर्तितमयूराः।
क्षितिरपि कन्दलधवला दृष्टिं पथिकः क्व पातयतु॥ ३३ ॥

भर्तृहरेः।

उपरि पयोधरमाला दूरे दयिता किमेतदापतितम्।
हिमवति दिव्यौषधयः कोपाविष्टः फणी शिरसि॥ ३४ ॥

श्रीभोजदेवस्य।

निशीथे लीनानां झटिति तडितां वीक्ष्य विषयं
घनानामाभोगं रसिकपथिकेनोन्मुखदृशा।
न गीतं सोत्कण्ठं न च रुदितमुत्कम्पतरलं
न निश्वासा मुक्ताः स्फुटदनुमतं किन्तु हृदयम्॥ ३५ ॥

का तारैर्मम गर्जितैरुपरता धाराम्बुभिः का हता
का मोहं गमिता वियोगविधुरा का वा कदम्बानिलैः ।
नीता का च विलोलतां मदकलैः केकारवैर्बर्हिणा-
मित्थं पान्थगृहेषु पश्यति घनो विद्युत्प्रदीपैरिव ॥ ३६ ॥

कयोरप्येतौ ।

वाता वान्तु जलस्पृशो नवघनो विद्युद्भिरुद्योततां
बाष्पं मार्जय पान्थ हे त्वरयतां द्रष्टाऽसि लम्बालकाम् ।
बालां गर्भगृहोषितां परिजनप्रारब्धकर्णद्वय-
च्छिद्रामुद्रणकर्मणः श्लथतया गर्जां न चेच्छ्रोष्यति ॥ ३७ ॥

श्रीरुद्रस्य ।

रात्रौ वारिभरालसाम्बुदरवोद्विग्नेन जाताश्रुणा
पान्थेनात्मवियोगदुःखपिशुनं गीतं तथोत्कण्ठया ।
आस्तां जीवितहारिणः प्रवसनालापस्य संकीर्तनं
मानस्यापि जलाञ्जलिस्सरभसं लोकेन दत्तो यथा ॥ ३८ ॥

अमरुकस्य ।

यथा रन्ध्रं व्योम्नश्चलजलदधूमः स्थगयति
स्फुलिङ्गानां रूपं दधति च यथा कीटमणयः ।
यथा विद्युज्जालोल्लसनपरिपिङ्गाश्च ककुभ-
स्तथा मन्ये लग्नः पथिकतरुषण्डे स्मरदवः ॥ ३९ ॥

उद्यद्बर्हिषि दर्दुरारवपुषि प्रक्षीणपान्थायुषि
श्च्योतद्विप्रुषि चन्द्ररुग्मुषि सखे हंसद्विषि प्रावृषि ।
मा मुञ्चोच्चकुचाग्रसन्ततपतद्बाष्पाकुलां बालिकां
काले कालकरालनीलजलदव्यालुप्तभास्वत्त्विषि ॥ ४० ॥

भट्टबाणस्य ।

तडिदुल्कामुखा मेघाश्चर्वितानां वियोगिनाम् ।
उद्वमन्त्यस्थिखण्डानि करकाश्मच्छलादमी ॥ ४१ ॥

मदनस्य ।

इति वर्षावर्णनपद्धतिः ।

# शरद्वर्णनपद्धतिः ( ६२ )



ऋतुस्वभावः—

शुभ्राभ्रं व्योम सोमः स्फुरदमलकलः पिङ्गलस्तिग्मरोचि-
र्मेघव्यूहव्यपायाल्लसदसिसदृशः सावकाशा इवाशाः ।
कासाराः स्वच्छनीराः कमलवनमिलद्भृङ्गबद्धान्धकारा:
मेघान्ते वान्ति सप्तच्छदकुसुमरजोवाहिनो गन्धवाहाः ॥ १ ॥

श्रीवैद्यभानुपण्डितस्य ।

आसादितप्रकटनिर्मलचन्द्रहासः
प्राप्तश्शरत्समय एष विशुद्धकान्तिः ।
उत्खाय गाढतमसं घनकालमुग्रं
रामो दशास्यमिव संभृतबन्धुजीवः ॥ २ ॥

तीव्रं रविस्तपति नीच इवाचिराढ्यः
पिञ्छं शिखी त्यजति मित्रमिवाकृतज्ञः ।
तोयं प्रसीदति मुनेरिव चित्तवृत्तिः
कामी दरिद्र इव शोषमुपैति पङ्कः ॥ ३ ॥

अतिश्लथालम्बिपयोधरेयं शुभ्रीभवत्काशविकासिकेशा ।
अतीतलावण्यजलप्रवाहा प्रावृट् जरां प्राप शरच्छलेन ॥ ४ ॥

कयोरप्येतौ ।

अथोपगूढे शरदा शशाङ्के प्रावृड्ययौ शान्ततडित्कटाक्षा ।
कासां न सौभाग्यगुणोऽङ्गनानां नष्टः परिभ्रष्टपयोधराणाम् ॥ ५ ॥

बिल्हणस्य ।

कदा नु कन्यागमनप्रवादं प्रक्षालयेयं जगति प्ररूढम् ।
इतीव भास्वान् परिवृद्धतापस्तुलां विशुद्ध्यर्थमिवारुरोह ॥ ६ ॥

भास्करस्य ।

१ भास. ख.

जीमूतेषु महत्सु लोकमपरं यातेषु तद्बान्धवाः
केचिद्वारिमुचः कृशाः प्रबलतस्तन्नाशशोकादिव ।
मौनस्था इव शान्तगर्जिततया भस्मानुलिप्ता इव
श्वेताः प्राप्य तपोमयीमिव दशामाशान्तभाजोऽभवन् ॥ ७ ॥

सूक्तिसहस्रात् ।

अपामुद्वृत्तानां निजमुपदिशन्त्या स्थितिपदं
ददत्या शालीनामवनतिमुदारे सति फले ।
मयूराणामुग्रं विषमिव हरन्त्या म[दम][1]हो
कृतः कृत्स्नस्यायं विनय इव लोकस्य शरदा ॥ ८ ॥

विशाखदेवस्य ।

चेतः कर्षन्ति सप्तच्छदकुसुमरसासारसौरभ्यलुभ्य-
द्भृङ्गीसङ्गीतभङ्गीश्रुतिसुभगदिशो वासराः शारदीनाः ।
किञ्च व्याकोचपङ्केरुहमधुरमुखीं संचरच्चञ्चरीक-
श्रेणीवेणीसनाथां रमयति तरुणः पद्मिनीमंशुमाली ॥ ९ ॥

श्रुतधरराजस्य ।

यशसो वर्धमानस्य जयतामिव भूभुजाम् ।
अवकाशाय वैपुल्यं प्रापुर्वीतघना दिशः ॥ १० ॥

शोणैः परिवृतः पद्मैर्हंसो हव्यवहैरिव ।
चरन्निव तपो भाति लब्धुं वरवधूगतिम् ॥ ११ ॥

व्योम्नि विश्रान्तजीमूते तारकाः प्रचकाशिरे ।
प्रणिधानहृतध्वान्ते चेतसीव शशि(चिति ?)प्रभा ॥ १२ ॥

सूक्तिसहस्राद्देते ।

विद्युद्वह्निशिखावलीविलसितं निर्वाप्य सर्वात्मना
भित्वा कज्जलकालिकाप्रणयिनीमम्भोदमूषामपि ।
उन्मीलन्नवचन्द्रमण्डल [ मिषां[2] ]त्संक्रान्तरागोज्वल-
श्रीभाजं रसपिण्डमेष सहसा वर्षात्ययः कर्षति ॥ १३ ॥

१, हद, क, ख, च, २, निमा, क, ख, च,

दूरं तोयधरान्धकारकरिणां यूथेषु नष्टेष्वितो
निष्क्रामन्नुदयाद्रिकन्दरभुवः कृत्वैकमङ्के मृगम्।
तत्क्षोदक्षतजैरिवारुणकरप्राप्तप्रकृष्टोदयः
पश्यायं शरदिन्दुरद्य कुरुते शार्दूलविक्रीडितम् ॥ १४ ॥

सिद्धचक्रवर्तिनो जयसिंहदेवस्यैतौ।

क्षुण्णमौक्तिकपरागपाण्डुरः शोभते स्म दिवि चन्द्रिकाभरः।
मेघबन्धनविमुक्तमीक्षितुं क्षीरनीरधिरिवेन्दुमागतः ॥ १५ ॥

इतश्चन्द्रस्सान्द्रः स्मरमयवयस्सन्धिमधुरः
स्फुरन्मुग्धाकेलिस्मितमिव मयूखैः सुखयति।
चकोराणां चक्रं कुमुदसमुदायोऽपि च शर-
न्निशारम्भेऽमुष्मिन् समसमयमन्तर्विकसति ॥ १६ ॥

मयूखैरेकद्वैः कलभदशनच्छेदविशदै-
र्लिखद्भिर्मेघान्ते तिमिरमुरसा प्रेर्यमधुना।
हरिन्माहेन्द्रीयं नवनिकषनिर्यूहरजत-
स्फुरद्वर्तीवर्णैः कथयति निशाभर्तुरुदयम् ॥ १७ ॥

समं पान्थैः कान्तैर्घनसमयसङ्केतघटितै-
श्चिरोत्कण्ठापीनःपुनिकरतनिर्व्यूढमनसाम्।
करैः पीयूषार्द्रैश्शरदि शरदण्डद्युतिहरै-
र्मृगाक्षीणां क्षीणां तनुमुपचरत्योषधिपतिः ॥ १८ ॥

मदनस्यैते।

नीलनीरदनिचोलकोज्झिते व्योमदर्पणतले शरद्वधूः।
चन्द्रमाननमिव व्यलोकयत्तत्क्षणोन्मिषितकैरवेक्षणा ॥ १९ ॥

बिल्हणस्य।

नद्यो वहन्ति कुटिलक्रमयुक्तिशुक्तिरेखाङ्कवालपुलिनोदरसुप्तकूर्माः।
एतास्तरङ्गितनुतोयपलायमानमीनानुसारिबकदत्तकरालफालाः ॥ २० ॥

कस्यापि।

---

१. वलितो. क. ख. च.

पूर्वं वारिधरप्रसङ्गसमयेनापूरितैः कुक्षिभि-
र्या गर्भिण्य इवातिभारगुरवो निस्सेव्यतामागताः।
एतास्संप्रति ता विभान्त्यकलुषाः क्षामाभिरामाङ्गिकाः
कूजत्सारसपोतपीतपयसो नद्यः प्रसूता इव ॥ २१ ॥

श्रीभोगवर्मणः।

क्वापि क्वापि तिरोहितं भुवि भयादम्भोमुचामागते-
[ ज्यो[2] ] त्स्नासञ्चयमिन्दुना गतघनास्कन्दाय तस्मै [ पुनः[3] ]
पृथ्वी सर्वमदीदृशत्त [ तं[4] ] मिव प्रक्षीयमाणाम्भसा
सिन्धूनां पुलिनच्छलेन कुमुदप्रस्ताररूपेण च ॥ २२ ॥

कस्यापि।

द्वयमिदमत्यन्तसमं नीचप्रभविष्णुता शरच्चेयम्।
क्षेत्रेभ्योऽपास्य फलं खलेषु विक्षिप्यते यस्याम् ॥ २३ ॥

जयगुप्तस्य।

केदार एव कलमाः परिणामनम्राः
प्राचीनमामलकमर्घ ( मृध्य ? )ति बालनीलम्।
उर्वारुकं स्फुटति निर्गतगर्भगन्ध-
मम्लीभवन्ति च जरत्त्रपुसीफलानि ॥ २४ ॥

कस्यापि।

चञ्चत्कादम्बपक्षप्रचलितकुमुदस्तोमसौरभ्यलुभ्य-
द्भ्राम्यद्भृङ्गप्रसङ्गप्रकटितयुगपत्कौमुदीध्वान्तपूरे।
कासारे क्षालिताङ्गः शुचिसिचयहिमोशीरकर्पूरमुक्ता-
मालाशाली प्रदोषे शरदि शशिकरानाश्रयत् सौधपृष्ठे ॥ २५ ॥

वैद्यभानुपण्डितस्य।

---

२. ज्यो. क. ख. च. ३. नम. क. ख. च. ४. ट. क. ख. च.

शरद्वायुः—

हसितकमलगन्धाकर्षिणो वासरेषु स्फुटितकुमुदगर्भामोदवन्तः क्षपासु।
जगदभिरमयन्तः शारदा वान्ति सद्यस्त्रुटितयुवतिमानग्रन्थयो गन्धवाहाः ॥२६॥

गतो यो वर्षासु क्रकचनिशितां केतकवनी-
मिदानीं खञ्जत्वं दधदिव समालम्ब्य निभृतम्।
करान् पीयूषांशोः किमपि पवनः शारदनिशा-
मुखेऽमुष्मिन् सप्तच्छदमृदुलमार्गे विलसति ॥ २७ ॥

मदनस्य।

कुर्वाणाः कैरवाणां मधुकणहरणं कूजितं रञ्जयन्तो
हंसालीकण्ठनालीष्वविकलकलमामोदमैत्रीपवित्राः।
शेफालीफुल्लपालीपरिमलमिलनाच्चुम्बिताश्चञ्चरीकैः
कल्हाराह्लादकाराः कुवलयसुहृदश्शारदा वान्ति वाताः ॥ २८ ॥

राजशेखरस्य।

शरत्पथिकः—

पङ्कानुषङ्गं भुवि विस्मरन्त्यां कथावशेषे च पयोदवृन्दे।
मार्गेषु चन्द्रातपपिच्छिलेषु पदे पदे चस्खलुरध्वनीनाः ॥ २९ ॥

शरच्छालिगोप्यः—

इह निचुलनिकुञ्जे वंशसंभारभाजि
स्वपिमि यदि मुहूर्तं पश्यसि क्षेत्रमेतत्।
इति पथिकमकस्मान्मार्ग एवोपविष्टं
वदति तरुणकान्तं गोपिका साङ्गभङ्गम् ॥ ३० ॥

विगतसस्यजिघत्समघट्टयत्कलमगोपवधूर्न मृगव्रजम्।
श्रुतनदीरितकोमलगीतकध्वनिमिषेऽनिमिषेक्षणमग्रतः ॥ ३१ ॥

माघस्य।

कलमखण्डिनी —

विलासमसृणोल्लसन्मुसललोलदोःकन्दली—
परस्परपरिस्खलद्वलयनिस्वनोद्बन्धुराः ।
लसन्ति कलहुंकृतिप्रसभकम्पितोरस्थल—
त्रुटद्गमकसङ्कुलाः कलमखण्डिनीगीतयः ॥ ३२ ॥

बिज्जाकायाः ।

गीतं पान्थमनोहरं बत शरत्काले वितन्वत्यलं
सोत्कण्ठस्तनभारबन्धुरगलत्त्रुट्यद्यतिव्याहृतिः ।
शालिं ग्रामवधू[र्नन्रूत्तुंस]मपि व्यालोकयन्ती दृशा
सद्यः कोकनदच्छदच्छविजुषा नोत्कण्डनं मुञ्चति ॥ ३३ ॥

कस्यापि ।

इति जल्हणदेवविरचितायां सूक्तिमुक्तावल्यां (सं)भोगशृंगारे शरद्वर्णनपद्धतिः ।



१. र. क. ख. च २. रकुर्कुर. क. कुन्कुर ख. रकुकस ग. घ.

# हेमन्तपद्धतिः ( ६३ )

ऋतुस्वभावः—

प्रांशुः प्रालेयपूरः प्रसरति गगने प्रावृताशार्कचन्द्र-
स्तोयाधाराः सबाष्पास्तुहिनघनघटालीनमीनाद्रिजौघाः।
दृप्तास्सप्तीभकोलच्छगलबलिभुजः कुन्दपुन्नागलोध्राः
प्रोत्फुल्लाः शीतकाले हिमकणगणभृद्वात्युदीच्यस्समीरः॥ १॥

श्रीवैद्यभानुपण्डितस्य।

शरत्कालातपक्रान्तकान्तावक्त्रेन्दुवल्लभः।
आजगामाथ हेमन्तः सामन्तस्मरभूभुजः॥ २॥

बिल्हणस्य।

अव्युत्पन्नस्वभावानां नारीणामिव सांप्रतम्।
सीत्काराचार्यकं कर्तुमयं प्राप्तो हिमागमः॥ ३॥

महामनुष्यस्य।

द्वित्रिमुचुकुन्दमुकुलस्त्रिचतुरकुसुमक्रमेण लवलीषु।
पञ्चषफलिनीकलिको ऽजयति हिमर्तुर्नवावतरः॥ ४॥

अभिनववधूरोषस्वादुः करीषतनूनपा-
दसरलजनाश्लेषक्रूरस्तुषारसमीरणः।
गलितविभवस्याज्ञेवाद्य द्युतिर्मसृणा रवेः
र्विरहिवनितावक्त्रक्लैब्यं बिभर्ति निशाकरः॥ ५॥

कस्यापि।

हिमधवलदन्तकेशी मन्दद्युतितारका बृहत्तिमिरा।
द्विगुणीभूता रजनी वृद्धेव शनैश्शनैर्याति॥ ६॥

भट्टबीजकस्य।

जडात्माऽपि स्वकालोत्थः क्लिश्नाति बलिनोऽप्यरीन्।
आक्रामति सहस्रांशुं हिमो हेमन्तजृंभितः॥ ७॥

१. पांसु. ख. ग. घ. २. घनघना वीन. क. ख. च.

समक्षमपि सूर्यस्य पर्यभूयत पद्मिनी ।
तेजस्विनोऽपि कुर्वन्ति किं कालवशमागताः ॥ ८ ॥

मद्वैरिणः कठोरांशोरियं प्रणयभूरिति ।
रोषादिव तुषारेण पर्यभूयत पद्मिनी ॥ ९ ॥

बिल्हणस्यैते ।

आसत्यलोकादाभूमेः स्वैरचारकृतश्रमाः ।
तेनुरिन्दुकराः स्वेदं द्रुतनीहारभूमिकम् ॥ १० ॥

अहो कथमसीमेदं हिमनाम विजृम्भते ।
चरत्येव सहस्रांशौ धवलं तिमिरान्तरम् ॥ ११ ॥

गिरन्ति ननु कल्पान्ते जलानां निधयो जगत् ।
कल्पमध्ये गिरत्येष कथमन्यो महार्णवः ॥ १२ ॥

सूक्तिसहस्रादेते ।

न प्रस्तावस्तपनमहसां ना[नि]लस्यावकाशो
नैव क्षेमं किमपि च घनैः कंबलैः कञ्चुकैर्वा ।
नैवान्योन्यं प्रभवति जनो वीक्षितुं वीतसीमा
हैमः पूरो हरति भुवनव्यक्तिमा[ः] किन्नु कुर्मः ॥ १३ ॥

सर्वदासस्य ।

अभवन्नद्भुतोष्माणः शीतव्याप्ते जगत्त्रये ।
स्तनोत्संगा मृगाक्षीणां स्थानं मन्मथतेजसः ॥ १४ ॥

बिल्हणस्य ।

लघुनि तृणकुटीरे क्षेत्रकोणे यवानां
नवकलमपलालप्रस्तरे सोपधाने ।
परिहरति सुषुप्तं हालिकद्वन्द्वमारात्-
कुचकलशमहोष्माबद्धरेकस्तुषारः ॥ १५ ॥

कमलायुधस्य ।

---

१. गलं. क. ख. गला च.

अन्ये हि दुःखमृतवः प्रथयन्त्यहोभिः
सूर्यांशुलुप्ततिमिरैरभिसारिकाणाम्।
हेमन्त एष हिमरुद्धसहस्रधामा
कामं करोति दिवसेष्वपि शर्म तासाम्॥ १६॥

सर्वदासस्य।

कम्पन्ते कपयो भृशं कृतजडं गोजालकं म्लायति
श्वा चुल्लीकुहरोदरं क्षणमपि प्राप्तोऽपि नैवोज्झति।
शीतार्तिव्यसनातुरः पुनरयं दीनो जनः कूर्मव-
त्स्वान्यङ्गानि शरीर एव हि निजे निह्नोतुमाकांक्षति॥ १७॥

लक्ष्मीधरस्य।

हेमन्तवायुः—

हूणीसीमन्तमुद्रां सपदि तरलयन् केरकान्ताकुचान्त-
स्वच्छन्दस्रस्तवस्त्राञ्चलचपलतया लोलयन् हारवल्लीम्।
प्रालेयावासपृथ्वीधरशिखरचलच्चारुवारिप्रवाह-
प्रक्षोभप्रातिभश्रीः प्रसरति परितो हैमनो गन्धवाहः॥ १८॥

कलिंगस्य।

अन्तर्गृहं नयति वर्धितरोमहर्षं
स्पर्शेन सीत्करणगर्भमुखीः करोति।
किञ्चाधरव्रणवतीः कुरुते पुरन्ध्रीः
किं वल्लभः किमुत हैमन एष वातः॥ १९॥

सूक्तिसहस्रात्।

आग्नेयीमेति शीतादिव दिशमरुणो वासरास्संकुचन्ती-
वासंस्तर्षेऽपि तोयाद्दहति तनुशिखी शीतपीडां प्रमार्ष्टि (?)।
तल्पेऽनल्पप्रकोपप्रविदलितदृढालिङ्गनग्रन्थिबन्धे
लब्ध्वा सन्धानरन्ध्रं निबिडयति जडो दम्पती मातरिश्वा॥ २०॥

नीत्वोच्चैर्निक्षिपन्तः कृततुहिनकलासारशङ्कान् परागान्
कौन्दानां नन्दितालीनतिभरसुरभीन् भूरिशो दिङ्मुखेषु।
एते ते कुङ्कुमाङ्कस्तनकलशतटास्फालनादुच्चलन्तः
पीत्वा सीत्कारि वक्रं हरिणशिशुदृशां हैमना वान्ति वाताः ॥ २१ ॥

अमरुकस्य।

गौरीविभ्रमधूपधूमपटलश्यामायमानोदराः
कण्ठक्षोदभयान्न ये कवलिताः श्रीकण्ठकण्ठोरगैः।
स्फारोन्मीलितशारदागृहबृहद्द्वाराग्रघण्टारवा-
स्ते श्लाघामलभन्त संततममी कैलासशैलानिलाः ॥ २२ ॥

बिल्हणस्य।

हेमन्तपथिकः—

आहूतोऽपि सहायैरेमीत्युक्त्वा विमुक्तनिद्रोऽपि।
आगन्तुकोऽपि पथिकः शैथिल्यं नैव विजहाति ॥ २३ ॥

भर्त्तोः।

शीतार्तिप्रसरश्लथाकुलपदन्यासैस्समुत्कम्पिभिः
पान्थैर्निर्यदतुच्छगोधननदद्घण्टारवैस्सूचिताः।
प्राप्यन्ते हिमपिण्डितातिनिभृतप्रोद्गाढधूम्याघन-
स्तोकालक्ष्यकुटीरकाः कथमपि प्रातर्गिरिग्रामकाः ॥ २४ ॥

भोजदेवस्य।

अन्योन्याहतदन्तनादमुखरप्रह्वं मुखं कुर्वता
नेत्रे साश्रुकणे निमील्य पुलकव्यासङ्गि कण्डूयता।
हाहेति स्खलितां गिरं विदधता बाहू प्रसार्य क्षणं
पुण्याग्निः पथिकेन पीयत इव ज्वालाहतश्मश्रुणा ॥ २५ ॥

बाणस्य।

इति श्रीमदारोहकभगदत्तजल्हणदेवविरचितायां सूक्तिमुक्तावल्यां हेमन्तवर्णनपद्धतिः।

---

१ रोमि. २ पि. ३ गन्तुमना अपि. क. पाठभेदाः ४ सं. घृ. क. ख.

# शिशिरवर्णनपद्धतिः ( ६४ )



ऋतुस्वभावः ।

वह्नेश्शक्तिर्जलमिव गता दर्शनाद्दाहवृत्तेः
नित्योद्गन्धे नवमरुवके वर्तते पुष्पकार्यम् ।
शीतत्रासं दधदिव रविर्याति पार्श्वं कृशानोः
नीहारार्ता इव च दिवसाः सांप्रतं सङ्कुचन्ति ॥ १ ॥

राजशेखरस्य ।

शिशिरमासमपास्य गुणोऽस्य नः क इव शीतहरस्य कुचोष्मणः ।
इति धियाऽस्तरुषः परिरेभिरे घनमतो नमतोऽनुमतान् प्रियाः ॥ २ ॥

माघस्य ।

अङ्गारहासिषु विलासगृहोदरेषु तल्पेषु तूलपटकल्पितवेष्टनेषु ।
उष्णेषु च प्रणयिनीकुचमण्डलेषु शान्तिं जगाम शिशिरस्य तुषारवर्गः ॥३॥

बिल्हणस्य ।

कारणोत्पन्नकोपोऽपि सांप्रतं प्रमदाजनः ।
निशि शीतापदेशेन गाढमालिङ्गति प्रियम् ॥ ४ ॥

महामनुष्यस्य ।

धूपितेषु पुरन्ध्रीणामलकेषु कृतास्पदाः ।
यान्ति शीतालवः स्मेरमपि कुन्दं न षट्पदाः ॥ ५ ॥

विरतसुकृतपाका चान्दनी हन्त चर्चा
भवति वरतनूनां दूर एव स्तनेभ्यः ।
उपनतफलपुण्यस्तेषु लब्धप्रतिष्ठो
मदयति युवलोकं कुङ्कुमालेप एव ॥ ६ ॥

सूक्तिसहस्रादेतौ ।

१ भासि. क. पाठभेदः ।

खट्वा नितान्तलघुका शिथिलप्रताना
द्वेष्यः पतिस्स च निरन्तरचाटुकारी ।
तत्रापि दैवहतिकाः खलु माघरात्र्यो
हा सह्यतां कथमयं व्यसनप्रपञ्चः ॥ ७ ॥

कस्यापि ।

शिशिरवायवः—

केशानाकुलयन् दृशो मुकुलयन् वासो बलादाक्षिपन्
[व्या] तन्वन् पुलकोद्गमं प्रकटयन्नङ्गे मुहुर्वेपथुम् ।
वारंवारमुदारसीत्कृतरवैर्दन्तच्छदं पीडयन्
प्रायश्शैशिर एष संप्रति मरुत् कान्तासु कान्तायते ॥ ८ ॥

चुम्बन्तो गण्डभित्तीरलकवति मुखे सीत्कृतान्यादधाना
धुन्वन्तः कञ्चुकानि स्तनभरपुलकोद्भेदमापादयन्तः ।
ऊरूनाकम्पयन्तः पृथुजघनतटात्स्रंसयन्तोंऽशुकांश्च-
व्यक्तं कान्ताजनानां विटचरितभृतश्शैशिरा वान्ति वाताः ॥ ९ ॥

बंकलावर्तकस्यैतौ ।

स्पृष्टाः स्तोकं वितस्तातटतुहिनकणैः पिण्डयन्तः पयोष्णीं
चञ्चन्तश्चन्द्रभागालहरिषु यमुनावीचिमैत्रीपवित्राः ।
धून्वानास्सिद्धसिन्धोरुभयतटगतां देवदारुद्रुमालिं
लोकप्रीत्यै बभूवुस्तुहिनगिरित [ टी ] केलिकारास्समीराः ॥ १० ॥

बिल्हणस्य ।

शिशिरपथिकः—

पृष्ठारोपितकर्पटस्य विसरद्बाष्पाम्बुसिक्तात्मनः
कुब्जीभूततनोर्निविष्टवदनस्याभ्यन्तरे जानुनोः ।
निस्सङ्गं भुजयुग्मपीडनवशाच्छ्वसत्कवोष्णो रसः
पान्थस्योद्गतवह्निराशिनिचये याति क्षपा शैशिरी ॥ ११ ॥

कस्यापि ।

---

१. पीडयन्तः, क पाठभेदः

पुण्याग्नौ पूर्णवाञ्छः प्रथममगणितप्लोषदोषः प्रदोषे
पान्थस्सुप्त्वा यथेष्टं तदनु तनुतृणे धामनि ग्रामदेव्याः ।
उत्कंपी कर्पटार्धे जरति परिजडे छिद्रिणि छिन्ननिद्रो
वाते वाति प्रकामं हिमकणिनि रणन् कोणतः कोणमेति ॥ १२ ॥

बाणस्य ।

सांविष्टो ग्रामदेव्याः कटघटितकुटीकुड्यकोणैकदेशे
शीते संवाति वायौ हिमकणिनि[र]णद्दन्तपङ्क्तिद्वयाग्रः ।
पान्थः कन्थां निशीथे परिकुथितजरत्तन्तुसन्तानगुर्वीं
ग्रीवापादाग्रजानुग्रहणचटचटत्कर्पटं प्रावृणोति ॥ १३ ॥

कस्यापि ।

॥ इति श्रीमदारोहकभगदत्तजल्हणदेवविरचितायां सूक्तिमुक्तावल्यां शिशिरवर्णनपद्धतिः ॥

इति संभोगश्रृंगारे षड्ऋतुवर्णनम् ॥



## कुसुमापचयादिपद्धतिः ( ९५ )

उच्चैरत्यं प्रथममधः स्थितं मृगाक्षी पुष्पौघं श्रितविटपं ग्रहीतुकामा ।
आरोढुं चरणमदादशोकयष्टेरामूलं पुनरपि तेन पुष्पितोऽसौ ॥ १ ॥

जयमाधवस्य ।

आस्कन्दितो भुजलताचलिताग्रशाखमालिङ्गितो युवतिभिः कलिकार्थिनीभिः ।
धन्योऽसि चम्पकतरो कुसुमानुरूपैरासां घनस्तनफलैः फलितोऽसि यच्च ॥ २ ॥

सन्तु द्रुमाः किसलयोत्तरपुष्पभाराः प्राप्ते वसन्तसमये कथमित्थमेतत् ।
न्यासैर्नखद्युतिमतोः पदयोस्तदेयं भूः पुष्पिता तदनु पल्लविता च भाति ॥ ३ ॥

एषा जिगीषति पृथुस्तबका लता त्वां
पर्याप्तपीननिबिडस्तनभारखिन्नाम् ।
अस्याः प्रिये विचिनुमः स्तबकांस्तथाऽन्याः
कर्तुं यथा न हि तथा( कदा )ऽपि लताः स्मरेयुः ॥ ४ ॥

आरादसौ तरुवरस्तव कुन्तलानामाकल्पमात्मकुसुमैरभियाचमानः ।
भूयस्समाह्वयति या कलकण्ठनादैरारोहभारमृदुगामिनि तत्र यामः ॥ ५ ॥

सूक्तिसहस्रादेते ।

अताडयत्पल्लवपाणिनैकां पुष्पोच्चये राजवधूमशोकः ।
तच्छेदहेतोरलिपङ्क्तिभङ्ग्या व्याकृष्यतेवासिलता स्मरेण ॥ ६ ॥

असङ्ख्यपुष्पोऽपि मनोभवस्य पञ्चैव बाणार्थमयं ददाति ।
एवं कदर्यत्वमिवावधार्य सर्वस्वमग्राहि मधोर्वधूभिः ॥ ७ ॥

बिल्हणस्यैतौ ।

चलापाङ्गां दृष्टिं स्पृशसि बहुशो वेपथुमतीं
रहस्याख्यायीव स्वनसि मृदु कर्णान्तिकचरः ।
करौ व्याधून्वन्त्याः पिबसि रतिसर्वस्वमधरं
वयं तत्त्वान्वेषान्मधुकर हतास्त्वं खलु कृती ॥ ८ ॥

अक्लिष्टबालतरुपल्लवलोभनीयं
पीतं मया सदयमेव रतोत्सवेषु।
बिम्बाधरं दशसि चेद्भ्रमर प्रियायाः
त्वां कारयामि कमलोदरबन्धनस्थम् ॥ ९ ॥

कालिदासस्यैतौ।

पाणौ पद्मधिया मधूककुसुमभ्रान्त्या तथा गण्डयो-
र्नीलेन्दीवरशङ्कया नयनयोर्बन्धूकबुध्याऽधरे।
लीयन्ते कबरीषु बान्धवजनव्यामोहजातस्पृहा
दुर्वारा मधुपाः कियन्ति सुतनु स्थानानि रक्षिष्यसि ॥ १० ॥

कस्यापि।

कर्णोत्पलान्नयनमाप गतिच्युतात्ते
तन्मीलने मुखमयं न जहाति भृङ्गः।
येनैवमद्य[1] विनिवारयसि प्रमत्ते
तस्मिन्करेऽपि न किमम्बुजसाम्यदोषः ॥ ११ ॥

पूर्वं द्विरेफपरिभूतिभयाद्भवत्या
यत्केशपुष्पभरणं हरिणाक्षि मुक्तम्।
व्यर्थं तदद्य पुनरप्यलकेषु भृङ्गाः
पुञ्जीभवन्निजकुलभ्रमतः पतन्ति ॥ १२ ॥

उत्प्रेक्षावल्लभस्यैतौ।

यतो यतः षट्चरणो विवर्तते ततस्ततः प्रेरितलोललोचना।
विवर्तितभ्रूरियमद्य शिक्षते बलादकामाऽपि हि दृष्टिविभ्रमम् ॥ १३ ॥

लोलां दृष्टिमितस्ततो [वितनुते] सभ्रूलताविभ्रमा-
मासुग्रेन विवर्तते वलिमता मध्येन कम्प्रस्तनी।
हस्ताग्रं विधुनोति पल्लवनिभं सीत्कारधूताधरा
जातेयं भ्रमरालिलङ्घनभयाद्वाद्यैर्विना नर्तकी ॥ १४ ॥

कालिदासस्यैतौ।

१. नेम. क. पाठभेदः

आकर्षन्ति न केषामन्तःकरणं प्रवालशालिन्यः।
ललना इवात्र लतिकाः कुसुमेषु शिलीमुखैर्निचिताः ॥ १५ ॥

अत्रास्मिन् सुतनु लतागृहेऽस्ति रम्यं
मालत्याः कुसुममनुच्चितं परेण।
इत्युक्त्वा मृदुकरपल्लवं गृहीत्वा
मुग्धाक्षीं रहसि निनाय कोऽपि धूर्तः ॥ १६ ॥

भूतिमाधवस्य।

अपचितकुसुमा विहाय वल्लीर्युवतिषु कोमलमाल्यभारिणीषु।
पदमुपदधिरे कुलान्यलीनां न परिचयो मलिनात्मनां प्रधानम् ॥ १७ ॥

मुहुरुपहसितामिवालिनादैर्वितरसि नः कलिकां किमर्थमेताम्।
वसतिमुपगते न धाम्नि तस्याः शठ कलिरेष महांस्त्वयाऽद्य दत्तः ॥१८॥

माघस्यैतौ।

सुभ्रु त्वन्मुखपङ्कजेन शशिनश्शोभातिरस्कारिणा
पश्याब्जानि विनिर्जितानि सहसा गच्छन्ति विच्छायताम्।
श्रुत्वा ते परिवारवारवनितागीतानि भृङ्गाङ्गना
लीयन्ते मुकुलान्तरेषु शनकैः सञ्जातलज्जा इव ॥ १९ ॥

श्रीहर्षस्य।

॥ इति कुसुमापचयः ॥

मदनपूजा—

प्रत्यग्रमज्जनविशेषविविक्तकान्तिः कौसुम्भरागरुचिरस्फुरदंशुकान्ता।
विभ्राजते मकरकेतनमर्चयन्ती बाला प्रवालविटपिप्रभवा लतेव ॥ २० ॥

कुसुमसुकुमारमूर्तिर्दधती नियमेन तनुतरं मध्यम्।
आभाति मकरकेतोः पार्श्वस्था चापयष्टिरिव ॥ २१ ॥

स्पृष्टस्त्वयैव दयिते स्मरपूजाव्यापृतेन हस्तेन।
उद्भिन्नापरमृदुतरकिसलय इव लक्ष्यतेऽशोकः ॥ २२ ॥

१. धन्यः क. पाठभेदः

अनङ्गोऽयमनङ्गत्वमद्य निन्दिष्यति ध्रुवम् ।
यदनेन न संप्राप्तः पाणिस्पर्शोत्सवस्तव ॥ २३ ॥

श्रीहर्षस्यैतौ ।

विचलितमणिहारं किञ्चिदुन्न(दान)म्रमध्यं
क्वणितवलयमीषद्दृष्टसीमन्तरेखम् ।
अलसनयनमर्धस्रस्तकर्णावतंसं
युगपदुरसि बद्धं मन्मनश्चाञ्जलिश्च ॥ २४ ॥

श्रीहर्षस्य ।

इति मदनपूजा ।

डोलाकेलिः—

चलत्कुचतटांशुकश्रवणपत्रहारा गुणाः
पतत्कुसुमसुत्क्रमभ्रमरपङ्क्तिलोलालकाः ।
उदीर्णमणिमेखलारणितमिश्रगीताः कथं
हरन्ति हरिणीदृशो न हृदयानि डोलाजुषः ॥ २५ ॥

प्रत्यासन्नसखीकराम्बुजयुगप्रेङ्खोलितां प्रेङ्खिका-
मारुह्येयमुदस्तहारलतिका व्याविद्धतुङ्गस्तनी ।
दृष्टादृष्टमुखी गतागतवशादालोलमानालका
तन्वङ्गी परितः करोति गगने शातह्रदं विभ्रमम् ॥ २६ ॥

नाथकुमारस्य ।

सौन्दर्यमिन्दीवरलोचनानां डोलासु डोलासु यदुल्ललास ।
यदि प्रमादाल्लभते कवित्वं जानाति तद्वर्णयितुं मनोभूः ॥ २७ ॥

प्रसार्य पादौ विहितस्थितीनां डोलासु लोलांशुकपल्लवानाम् ।
मनोरथानामपि यन्न गम्यं तद्द्रष्टुमापुस्सुदृशां युवानः ॥ २८ ॥

उन्नम्य दूरं मुहुरानमन्त्यः कान्ताः श्लथीभूतनितम्बजाड्याः ।
डोलाविलासेन जितश्रमत्वात्प्रकर्षमापुः पुरुषायितेषु ॥ २९ ॥

बिल्हणस्यैते ।

॥ इति श्रीमदारोहकभगदत्तजल्हणदेवविरचितायां सूक्तिमुक्तावल्यां कुसुमापचयादिपद्धतिः॥

---

# कन्दुकक्रीडापद्धतिः ( ६६ )



प्रेङ्खत्कुण्डलभारशीर्णकुसुमोद्भ्रान्तद्विरेफः क्वण-
त्काञ्चीनूपुरपारिहार्यमुखरो भ्रातः कथं कथ्यते।
अस्याः कन्दुककेलिरेष करयोर्दृष्ट्योश्च नानाविधैः
क्षेपैर्जङ्गमपल्लवोत्पलमयीश्चक्रे दिशस्साम्बराः॥ १॥

कस्यापि।

चञ्चच्चेलाञ्चलानि प्रतिसरणि रयव्यग्रवेणीनि बाहो-
र्विक्षेपाद्दक्षिणस्य प्रचलितवलयास्फालकोलाहलानि।
श्वासत्रुट्यद्वचांसि द्रुतमितरकरोत्क्षिप्तलोलालकानि
स्रस्तस्रञ्जि प्रमोदं दधति मृगदृशां कन्दुकक्रीडितानि॥ २॥

राजशेखरस्य।

संश्लेषे कुचयोर्मुखोपगमने कर्णान्तिकाभ्यागमे
स्पर्शे कुण्डलमण्डलस्य परतो याने च तन्व्याः करः।
निघ्नं कन्दुकमाशु हन्ति किमु वा तस्मात्करादन्यतः
साध्यं तस्य तदेकसङ्गफलिते प्राचीनपुण्यद्रुमे॥ ३॥

किं वात्याचलिता लता मणिमयी लौल्यं निजं गृह्ण(बिभ्र)ती
बिभ्रत्यक्षणनश्वरीमपि दशां विद्युत्किमुर्वीं गता।
नैवं नाम नतोन्नतांसचलिता पर्यन्तपश्चात्पुर-
श्चारीवारिविशृङ्खला वरतनू रोहत्यसौ कन्दुकम्॥ ४॥

सूक्तिसहस्रादेते-।

पयोधराकारधरो हि कन्दुकः करेण रोषादपहन्यते मुहुः।
इतीव नेत्राकृतिभीतमुत्पलं तस्याः प्रसादाय पपात पादयोः॥ ५॥

कालिदासस्य।

---

१ त्कुन्त. क पाठभेदः १. र य व्यस्त. ग. चक्रव्यस्तेति शार्ङ्गधरीये। २ ग.

अमन्दमणिनूपुरक्वणनचारुचारक्रमं
झणज्झणितमेखलं स्खलिततारहारच्छटम् ।
इदं तरलकङ्कणावलिविशेषवाचालितं
मनो हरति सुभ्रुवः किमपि कन्दुकक्रीडितम् ॥ ६ ॥

कस्यापि ।

वनिताकरतामरसाभिहतः पतितः पतितः पुनरुत्पतसि ।
ध्रुवमस्ति हि कन्दुक ते हृदयं प्रमदाधरसङ्गमलुब्धमिव ॥ ७ ॥

दण्डिनः ।

एकोऽपि त्रय इव भाति कन्दुकोऽसौ कान्तायाः करतलरागरक्तरक्तः ।
भूमौ तच्चरणनखांशुगौरगौरः स्वस्त्र(स्वस्थ ?)स्तन्नयनमरीचिनीलनीलः॥ ८ ॥

भारवेः ।

भ्रमरक्रीडा—

चेलाञ्चलेन चलहारलताप्रकाण्डैर्वेणीगुणेन च बलाद्वलयीकृतेन ।
हेलाहितभ्रमरकभ्रममण्डलीभिः छत्रैत्रयं रचयतीव चिरं नतभ्रूः ॥ ९ ॥

राजशेखरस्य ।

निमीलनक्रीडा—

न पाणिप्रच्छाद्यं नयनयुगमत्यायतमिदं
नितम्बस्यौदार्यात्त्वरितगतियोगोऽप्यसुलभः ।
अपि स्वल्पौ पाणी स्तनभरनिरोधान्न मिलितौ
निमीलक्रीडायां कलुषयसि मुग्धे किमिति नः ॥ १० ॥

इति श्रीमदारोहकभगदत्तजल्हणदेवविरचितायां सूक्तिमुक्तावल्यां कन्दुकभ्रमरनिमीलनक्रीडापद्धतिः ।

---

१ विदितं ननु क पाठभेदः २ चित्र. क, ख,

# जलक्रीडापद्धतिः ( ६७ )



प्रथममनुसरन्तीष्वम्भसि प्राणनाथं
　प्रतियुवतिषु सेर्ष्यावृत्तयस्सुभ्रुवोऽपि ।
सललितमवतेरुस्सङ्क्रमन्यासभीत-
　स्खलितचरणगुञ्जन्नूपुराः कौतुकेन ॥ १ ॥

अथ कृतकविहङ्गैः पार्थिवोद्धूलयन्त्रै (द्धूतयन्त्रैः) (१)
　स्तुमुलमुपरिपातादम्बुवर्षात्त्रसन्त्यः ।
अविगलितसपत्नीगात्रसम्मर्ददुःखाः
　प्रणयिनमभि[पे]तुर्हानिनादेन देव्यः ॥ २ ॥

प्रणयिनि सति सिञ्चत्यम्बुभिः काचिद[न्यां-]
　मुखशशिनमसूयासाचि वक्रं निवर्त्य ।
निकटकमलगन्धाघ्राणनिघ्ना किलोच्चैः
　श्वसिततरलिताङ्गी तत्स्रबाष्पैस्सिषेच ॥ ३ ॥

ललितमभिहतैका तेन राजीवपत्रैः
　प्रतिहननविहारं नैव यावत्करोति ।
अकरुणमभिजघ्नुस्तावदेवापरास्तं
　कुटिलगतिभिरुद्यत्कोपरागैः कटाक्षैः ॥ ४ ॥

सूक्तिसहस्रादेते ।

विशन्तीनां स्नातुं जघनपरिणाहैर्मृगदृशां
　यदम्भस्संप्राप्तुं प्रमदवनवाप्यास्तटभुवम् ।
गभीरे तन्नाभीकुहरपरिणाहाध्वानि सरत्कुहूकारः
　स्फारं रमयति च नादश्च कुरुते ॥ ५ ॥

राजशेखरस्य ।

अन्तर्जलावारितमूर्ति यातो बालापरिष्वङ्गसुखाय पत्युः ।
विज्ञाय वैमल्यमपां बभूव व्यर्थः [ [३]प्रसादोऽ ] पि जडाशयानाम् ॥ ६ ॥

कुमारदासस्य ।

---

१. कृतिषु च. क. ख. च. २. न्यां. क. ख. च. ३ प्रयासोऽ क. ख ग घ च

लीलातामरसाहतोऽन्यवनितानिश्शङ्कदष्टाधरः
कश्चित्केसरदूषितेक्षण इव व्यामील्य नेत्रे स्थितः ।
मुग्धा कुड्मलिताननेन दधती वाष्पं स्थिता तस्य सा
भ्रान्त्या धूर्ततयाऽथवा नतिमृते तेनानिशं चुंबिता ॥ ७ ॥

अमरुकस्य ।

तथा न पूर्वं कृतभूषणाधरः प्रियानुरागेण विलासिनीजनः ।
यथा जलार्द्रो नखमण्डनश्रिया ददाह दृष्टीः प्रतिपक्षयोषिताम् ॥ ८ ॥

प्रियेण संग्रन्थ्य विपक्षसन्निधावुपाहितां वक्षसि पीवरस्तने ।
स्रजं न काचिद्विजहौ जलाविलां वसन्ति हि प्रेम्णि गुणाय वस्तुनि ॥९॥

करौ धुनाना नवपल्लवाकृती पयस्यगाधे किल जातसंभ्रमा ।
सखीषु निर्वाच्यमधार्ष्ट्यदूषितं प्रियाङ्गसंश्लेषमवाप मानिनी ॥ १० ॥

भारवेरेते ।

आत्तमात्तमधिकान्तमुक्षितुं कातरा शफरशङ्किनी जहौ ।
अञ्जलौ जलमधीरलोचना लोचनप्रतिशरीरलाञ्छितम् ॥ ११ ॥

कलशस्य ।

अविरतमिदमम्भः स्वेच्छयोच्चालयन्त्या
विकचकमलकान्तोत्तानपाणिद्वयेन ।
परिकलित इवार्घ्यः कामबाणातिथिभ्यः
सलिलमिव वितीर्णं वाललीलासुखानाम् ॥ १२ ॥

त्रिविक्रमभट्टस्य ।

निजनयनप्रतिबिम्बैरम्बुनि बहुशः प्रतारिता काऽपि ।
सत्योत्पलेऽपि विमृशति करमर्पयितुं पुरः पत्युः ॥ १३ ॥

गोयिधोयिकविराजयोः ।

ललितमुरसा तरन्ती तरलतरङ्गौघचालितनितम्बा ।
विपरीतरतासक्तेव दृश्यते सरसि सा सख्या ॥ १४ ॥

अमरुकस्य ।

१ ल. क.

एतस्याः [ क ] रिकुम्भसन्निभकुचप्राग्भारपृष्ठे लुठद्-
गुञ्जागर्भगजेन्द्रमौक्तिकसरश्रेणीमनोहारिणि ।
दूरादेत्य तरङ्ग एष पतितो वेगाद्विलीनः कथं
को वाऽन्योऽपि विलीयते न सरसः सीमन्तिनीसङ्गमे ॥ १५ ॥

निम्ननाभिकुहरेषु यदम्भः प्लावितं चलदृशां लहरीभिः ।
तद्भवैः कुहरुतैर्नतमध्या [ : ] स्मारिता [ : ] सुरतकण्ठरुतानाम् ॥ १६ ॥

प्रच्योतद्भिः परिमलमयैः केशपाशाग्रपाथो-
लेशव्याजैरमृतपृषतैः सुभ्रुवः स्नानसीम्नि ।
शंभोः कोपज्वलनशिखया दीप्तया भस्मशेषां
नीतं काष्ठां कुसुमविशिखं जीवयन्त्यो जयन्ति ॥ १७ ॥

केषामप्येते ।

जलनिबिडितवस्त्रव्यक्तनिम्नोन्नताभिः
परिगततटभूमिः[1] स्नातमात्रो[त्थि]ताभिः ।
रुचिरकनककुम्भश्रीमदाभोगतुङ्ग-
स्तनविनिहितहस्तस्वस्तिकाभिर्वधूभिः ॥ १८ ॥

भवभूतेः ।

मन्दायते दिनमिदं मदनोऽपि सज्जस्तत् किं न गच्छत गृहानिति पद्मिनीभिः ।
मीलत्सरोजगतभृङ्गरवैरिवोक्ताः स्नात्वा शनैरनुसरन्ति पुरं तरुण्यः ॥१९॥

इति श्रीमद्दारोहकभगदत्तजल्हणदेवविरचितायां सूक्तिमुक्तावल्यां जलक्रीडापद्धतिः ।



१. समकलीति शार्ङ्गधरीयः पाठः. २. कुलैः क. ख. च.

# सूर्यास्तमयवर्णनम् ( ६८ )

यातास्मि पद्मनयने समयो ममैष
सुप्ता मयैव भवती प्रतिबोधनीया।
प्रत्यायनामयमितीव सरोरुहिण्याः
सूर्योऽस्तमस्तकनिविष्टकरः करोति ॥ १ ॥

श्रीहर्षस्य।

सैरन्ध्रीकरकुष्टपत्रकसरत्तारध्वनिः सञ्चर-
दूतीसूत्रितसन्धिविग्रहविधिः सोल्लासलीलाभरः।
वारस्त्रीजनसज्जमानशयनः सन्नद्धपुष्पायुधः
श्रीखण्डद्रवधौतसौधशिखरो रम्यक्षणो वर्तते ॥ २ ॥

राजशेखरस्य।

अनुरागवन्तमपि लोचनयोर्दधतं वपुस्सुखमतापकरम्।
निरकासयद्रविमपेतवसुं वियदालयादपरादिग्गणिका ॥ ३ ॥

माघस्य।

शुचिरिति परितः प्रसिद्धिभाजि प्रकटिततेजसि दुर्जये कृशानौ।
निजवसुनिकुरुम्बमस्तवेलाव्यतिकरवान्निदधे सरोजबन्धुः ॥ ४ ॥

बिल्हणस्य।

पूर्वाऽहं विहितोदयाऽहमसकृत्तन्मां विहायाधुना
यस्यामस्तमुपैति तां कथमसौ रागी जघन्यामगात्।
इत्येवं श्लथितांशुके दिनपतौ याते दिशं पश्चिमा-
मीर्ष्यारोषविषादिनीव तमसा प्राची ककुब्लक्ष्यते ॥ ५ ॥

श्रीत्रिविक्रमभट्टस्य।

पृथुगगनकबन्धस्कन्धचक्रं किमेतत्
किमु रुधिरकपालं कालकापालिकस्य।
कललभरितमन्तः किं नु ताक्ष्यण्डिखण्डं
प्रजनयति वितर्कं सान्ध्यमर्कस्य बिम्बम् ॥ ६ ॥

द्वावप्येतावभिनवजपापुष्पभासो निवासौ
तिष्ठत्येतद्द्वयमपि वियन्मण्डलस्योपसन्ध्यम् ।
अस्तं को यात्युदयति च कः को रविः कः शशाङ्कः
का च प्राची तदिह न वयं का प्रतीचीति विद्मः ॥ ७ ॥

कयोरप्येतौ ।

अस्तावलम्बिरविबिम्बतयोदयाद्रि-
चूडोन्मिषत्सकलचन्द्रतया च सायम् ।
सन्ध्याप्रनृत्तहरहस्तगृहीतकांस्य-
तालद्वयेव समलक्ष्यत नाकलक्ष्मीः ॥ ८ ॥

रत्नाकरस्य ।

विश्लेषाकुलचक्रवाकमिथुनैरुत्पक्ष्माक्रन्दितैः
कारुण्यादिव मीलितासु नलिनीष्वस्तं च मित्रे गते ।
शोकेनेव दिगङ्गनाभिरभितः श्यामायमानैर्मुखै-
र्निःश्वासानलधूमवर्तय इवोद्गीर्णास्तमोराजयः ॥ ९ ॥

त्रिविक्रमभट्टस्य ।

पचेलिमं दाडिममर्कबिम्बमुत्तार्य[1] सन्ध्या त्वगिवोज्झिताऽस्य ।
तारावलिर्बीजभुजाऽदसीयं कालेन निष्ठ्यूतमिवास्ति[2] यूथम् ॥ १० ॥
दिनावसाने तरणेरकस्मान्निमज्जनाद्विश्वविलोचनानि ।
अस्य प्रसादादुडुपस्य नूनं तमोमयद्वीपवतीं तरन्ति ॥ ११ ॥

श्रीहर्षपण्डितस्यैतौ ।

एकेनाक्ष्णा प्रविततरुषा पाटलेनास्तसंस्थं
पश्यत्यर्कं सजलललितेनापरेण स्वकान्तम् ।
अह्नश्छेदे दयितविरहाशङ्किनी चक्रवाकी
द्वौ सङ्कीर्णौ रचयति रसौ नर्तकीव प्रगल्भा ॥ १२ ॥

चन्द्रकस्य ।

१. स्थि, क. ख. २. मन्ये. क. पाठभेदः ।

आपृष्टाऽसि व्यथयति मनो दुर्बला वासरश्री-
रेह्यालिङ्ग क्षपय रजनीमेकिका चक्रवाकि।
नान्यासक्तो न खलु कुपितो नानुरागच्युतो वा
दैवाधीनस्तदिह भवतीमस्वतन्त्रस्त्यजामि॥ १३॥

कस्यापि।

मित्रे क्वापि गते सरोरुहवने बद्धानने[१] ताम्यति
क्रन्दत्सु भ्रमरेषु वीक्ष्य दयिताश्लिष्टां पुरस्सारसीम्।
चक्राङ्गेन वियोगिना बिसलता नास्वादिता नोज्झिता
वक्त्रे केवलमर्गलेव निहिता जीवस्य निर्गच्छतः॥ १४॥

भट्टवामनस्य।

उद्गाढप्रणये[२] रुचां परिवृढे विस्रंसमाना(ने?)म्बरे[३]-
श्रीचूडामणिभूमिकामधिगते चक्षुःपथं मुञ्चति।
मीलत्तामरसप्रविष्टमधुपव्याजेन हालाहल-
ग्रन्थीनम्बुजिनी विधाय कवलान्मूर्छामिवागच्छति॥ १५॥

गोत्रानन्दस्य।

दिनभर्तुरस्तमयतः स्यन्दनतुरगेषु घनतमोमहिषः।
घातावसरमिवेच्छन् पृष्ठे निभृतं परिभ्रमति॥ १६॥

मदनस्य।

सान्ध्यरागरुचिरारुणमाराान्निष्पपात रविमण्डलमब्धौ।
क्रूरकालकरवालविलूनं वासरस्य सहसैव शिरो नु॥ १७॥

भट्टोपमन्योः।

प्रतिकूलतामुपगते हि विधौ विफलत्वमेति बहुसाधनता।
अवलम्बनाय दिनभर्तुरभून्न पतिष्यतः करसहस्रमपि॥ १८॥

माघस्य।

---

१ व. क. ख. च. २ च. क. ख. च. ३. रा. क. ख. च.

चूडारत्नैः स्फुरद्भिर्विषधरविवराण्युज्ज्वलानुज्ज्वलानि
प्रेक्ष्यन्ते चक्रवाकीमनसि निविशते सूर्यकान्तात्कृशानुः।
किंचामी शल्ययन्तस्तिमिरमुभयतो निर्भराहस्तमिस्रा-
संघट्टोत्पिष्टसन्ध्याकणनिकरपरिस्पर्धिनो भान्ति दीपाः ॥ १९ ॥

श्रीमुरारेः।

नो रविर्न च तमो नतमीशो न द्युतिर्ग्रहगणो न च सन्ध्या।
यादृशं प्रथमतः किल सृष्टं तादृगेव भुवनं श्रियमूहे ॥ २० ॥

कस्यापि।

निःशेषपीते शर्वर्या सन्ध्यारागासवे शनैः।
नभःपात्रतलालक्ष्यनक्षत्रकुसुमं बभौ ॥ २१ ॥

क्षेमेन्द्रस्य।

इति श्रीमद्वारोहकभगदत्तजल्हणदेवरचितायां सूक्तिमुक्तावल्यां

सूर्यास्तमयवर्णनपद्धतिः ॥



# अन्धकारवर्णनम् ( ६९ )

अविज्ञातविशेषस्य सर्वतेजोऽपहारिणः ।
स्वामिनो निर्विशेषस्य तमसश्च किमन्तरम् ॥ १ ॥

श्रीमदवन्तिवर्मणः ।

शुद्धमाविलमवस्थितं चलं वक्रमार्जवगुणान्वितं च यत् ।
सर्वमेव तमसा समीकृतं धिङ्महत्त्वमसतां हतान्तरम् ॥ २ ॥

कालिदासस्य ।

लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः ।
असत्पुरुषसेवेव दृष्टिर्निष्फलतां गता ॥ ३ ॥

विक्रमादित्यस्य ।

नीताः क्वाप्यभिसारिका इव दिशोऽप्युद्गाढरागोदया
येनोत्प्लावितमन्मथेन तदिदं निःशङ्कमुज्जृम्भते ।
संभोगान्तशयालुशैलतनयादोःपाशनिर्भर्त्सितो-
न्मीलन्नीलिमनीलकन्धरगलस्पर्धावलिप्तं तमः ॥ ४ ॥

मदनस्य ।

उन्मुक्ताभिर्दिवसमधुना सर्वतस्ताभिरेव
स्वच्छायाभिर्निचुलितमिव प्रेक्ष्यते विश्वमेतत् ।
पर्यन्तेषु ज्वलति जलधौ रत्नसानौ च मध्ये
चित्राङ्गीयं रमयति तमःस्तोमनीला धरित्री ॥ ५ ॥

मुरारेः ।

इदं नभसि भीषणभ्रमदुलूककोलाहले
निशाचरविलासिनीनिवहदत्तनेत्रोत्सवे ।
परिस्फुरति निर्भरप्रचुरपङ्कमग्नोल्लस-
द्वराहकुलमांसलं प्रबलबन्धमन्धं तमः ॥ ६ ॥

सर्वज्ञवासुदेवस्य ।

चिन्वच्चोरचिकीर्षितानि घटयद्वेतालगोष्ठीसुखं
तन्वानं शवसाधनोत्सवरसं निर्व्याजधीरात्मनाम् ।
कुर्वत्कामकृशानुतप्तमनसां गुप्ताङ्गनासङ्गमं
शर्वर्यास्तिमिरं परोपकृतये बद्धक्रमं धावति ॥ ७ ॥

किं भूमौ परितः स्फुरन्ति करिणः कस्तूरिकाया रसैः
सिक्ताः किं निखिला दिशः किमखिलं लिप्तं मषीभिर्नभः ।
किं व्याप्तं भुवनं समस्तमपि च श्रीकण्ठकण्ठत्विषा
कालिन्दीजलकान्तिभाजि निबिडे जातेऽन्धकारेऽधुना ॥ ८ ॥

कयोरप्येतौ ।

यच्चेदम्बुधिमामनन्ति कवयस्तद्बिन्दुतां बिभ्रते
वैकुण्ठान्तककालकायजलदश्रीकण्ठकण्ठादयः ।
लुप्तालोकमुलूकदृष्टितिमिरप्रध्वंसिसिद्धाञ्जनं
तद्गण्डूषितभूदिगन्तरमिदं नैशं तमो जृम्भते ॥ ९ ॥

भवति हरिरगूढः कौस्तुभीयैर्मयूखैः
पतिमपि च पशूनां शेखरेन्दुर्व्यनक्ति ।
इति मनसि न कश्चिन्निश्चयो यत्तदन्य-
ज्जगदिह तमसैव ग्रस्तमव्यक्तमास्ते ॥ १० ॥

सूक्तिसहस्रादेतौ ।

नाकाशं न दिशो न भूधरकुलं नाम्भोधयो न क्षितिः
न द्यौर्नाम्बुधरा न तीव्रकिरणो नेन्दुर्न तारागणः ।
एतैः षट्पदकायकान्तिपटलीपाण्डित्यवैतण्डिकैः
कल्लोलैस्तमसामसाम्प्रतमयं विश्वव्ययः कल्प्यते ॥ ११ ॥

वेदव्यासस्य ।

सद्यस्सान्द्रमषीविलिप्तककुभः स्निग्धेन्द्रनीलद्रव-
व्यामीलन्नभसो निरन्तरमिलन्नीलीरसच्योतिनः ।
एते कोकिलकायकालिमभृतो लुम्पन्ति वृत्तिं दृशो-
रुन्निद्राञ्जनपुञ्जमेचकरुचो भीमास्तमःप्रक्रमाः ॥ १२ ॥

सर्वज्ञवासुदेवस्य ।

घनतरतिमिरघुणोत्करजग्धानामिव पतन्ति काष्ठानाम् ।
छिद्रैरमीभिरुडुभिः किरणव्याजेन चूर्णानि ॥ १३ ॥

श्रीमुरारेः ।

आभाति धूसरतरं तिमिरं पुरस्ता-
दन्तःस्फुरद्विरलतारकभारमेतत् ।
दग्धुं वियोगिविपिनं सितरश्मिवह्ने-
र्धूमो ज्वलिष्यत इवानुगतस्फुलिङ्गः ॥ १४ ॥

लघुवल्लभवासुदेवस्य ।

इति श्रीमदारोहकभगदत्तजल्हणदेवविरचितायां सूक्तिमुक्तावल्यां अन्धकारवर्णनपद्धतिः ।

---

## अभिसारे कामिजनप्रलापः ( ७० )

यद्यल्लोकविरोधि यच्च बहुशः क्लेशावहं सर्वथा
यच्चात्यन्तसुदुर्लभं यदपि वा पापप्रधानं सदा ।
तत्तत्कामिजनस्य वाञ्छति मनः स्वैरप्रचारोत्सुकं
युक्तायुक्तविचाररोधि तदहो वामं मनः कामिनाम् ॥ १ ॥

मधुर्मासो रम्यो विपिनमजनं त्वं च तरुणी
स्फुरत्कामावेशे वयसि वयमप्याहितभराः ।
व्रज त्वं वा मुग्धे क्षणमिह विलम्बस्व यदि वा
पुनस्तावज्जातः पिशुनवचसामेष विषयः ॥ २ ॥

बिल्हणस्य[२] ।

किमु कुवलयनेत्राः सन्ति नो नाकनार्यः
त्रिदशपतिरहल्यां तापसीं यत्सिषेवे ।
हृदयतृणकुटीरे दीप्यमाने स्मराग्ना-
वुचितमनुचितं वा वेत्ति कः पण्डितोऽपि ॥ ३ ॥

विकलयति कलाकुशलं हसति शुचिं पण्डितं विडम्बयति ।
अधरयति धीरपुरुषं क्षणेन मकरध्वजो देवः ॥ ४ ॥

---

१. र. क. ख. स्पु. च. २. ग, घ.

न गम्यो मन्त्राणां न च भवति भैषज्यविषयो
  न चापि प्रध्वंसं व्रजति विहितैः शान्तिकशतैः ।
भ्रमावेशादङ्गे कमपि विदधद्भङ्गमसमं
  स्मरापस्मारोऽयं भ्रमयति दृशं घूर्णयति च ॥ ५ ॥

पौष्पाः पञ्च शराः शरासनमपि ज्याशून्यमिक्षोर्लता
  जेतव्यं जगतां त्रयं प्रतिदिनं जेताऽप्यनङ्गः किल ।
इत्याश्चर्यपरम्पराघटनया चेतश्चमत्कारयन्
  व्यापारः सुतरां विचारपदवी[१]वन्ध्यो विधेर्व[र्धे][२]ताम् ॥ ६ ॥

त्रिविक्रमभट्टस्यैतौ ।

पङ्कः कुङ्कुमकर्दमः किसलयश्रेणी स्फुरत्कण्टकाः
  पाषाणा विषमा मृणालवलयान्यन्धं तमश्चन्द्रिका ।
भूमिर्गोखुरकर्कशा प्रवितता शय्या तथा कोमला
  सङ्केतोत्सवकामिनां पुनरहो वामा हि कामस्थितिः ॥ ७ ॥

कस्यापि ।

चेतः कातरतां जहीहि हृदय स्थैर्यं दधीथाः क्षणं
  प्राप्ता सा स्मरमार्गणव्रणगणत्राणौषधिः प्रेयसी ।
येन श्वासतरङ्गसौरभमिलद्भृङ्गावलीवारण-
  क्रीडान्दोलि[३]तबाहुकङ्कणरणत्कारो मुहुर्मूर्च्छति ॥ ८ ॥

गोत्रानन्दस्य ।

समारूढप्रीतिः प्रणयबहुमानादनुदिनं
  व्यलीकं वीक्ष्येदं कृतमकृतपूर्वं खलु मया ।
प्रिया मुञ्चत्यद्य स्फुट[मे][४]सह[नां][५] जीवितमहो
  प्रकृष्टस्य प्रेम्णः स्खलितमविषह्यं [हि][६]भवति ॥ ९ ॥

श्रीहर्षस्य ।

---

१. वीं. क. ख. च. २. न्ध्य. क. ख. च. ३ लोलित क. पाठभेदः. ४. तु. क. ख. च. ५. सा. क. ख. च. ६. वि. क. ख. च.

प्रणयविशदां[1] वक्त्रे दृष्टिं दधाति न शङ्किता
घटयति घनं कण्ठाश्लेषे[2] बलान्न पयोधरौ।
वदति बहुशो गच्छामीति प्रयत्नधृताऽप्यहो
रमयतितरां सङ्केतस्था तदा[3]ऽपि च कामिनी ॥ १० ॥

अमरुकस्य।

आयाताऽसि विमुञ्च वेपथुभरं दृष्टाऽसि किं केन चि-
न्नीलं चोलममुं वि[4]मुञ्च हरतु स्वेदं निशीथानिलः।
इत्यन्तर्भयसन्नकण्ठमसकृद्यामीति तल्पातिथि-
र्जल्पन्ती परिरभ्यते सुकृतिना स्वैरं नवस्वैरिणी ॥ ११ ॥

आकाशपोलेः।

तडिद्वा पङ्के वा तिमिरमथवा गर्जिरथवा
निशा वा वृष्टिर्वाऽभिनवसरितां श्रेणिरथवा।
यथेष्टं चेष्टन्तां यदि न दयितः प्रेमविमुखः
प्रदीपः स्नेहाढ्यो न खलु पवनाद्यैर्विरमति ॥ १२ ॥

श्रीठक्कुरस्य।

कृत्वा नूपुरमूकतां चरणयोः संयम्य नीवीमणी-
नुद्दामध्वानिपाण्डितान् परिजने किंचिच्च निद्रायिते।
कस्मात् कुप्यसि यावदस्मि चलिता तावद्विधिप्रेरितः
काश्मीरीकुचकुम्भविभ्रमधरः शुभ्रांशुरभ्युद्यतः ॥ १३ ॥

काश्मीरीबिल्हणस्य।

इति श्रीभगदत्तजल्हणविरचितायां सूक्तिमुक्तावल्यामभिसारे कामिजनप्रलापपद्धतिः।

---

१. ददा. क. पाठभेदः २. रसा. क. ख. च. ३. तथाऽपि हि. क. पाठभेदः. ४. च. मु. क. ख. च.

# अभिसारिकापद्धतिः ( ७१ )



हृदये दयितेन हृते वपुषि सवेपथुनि पथि निरालम्बे ।
अयि कथय कथमनङ्ग प्रियगृहमभिसारिकां नयसि ॥ १ ॥

मार्गे पङ्कचिते घनान्धतमसे निश्शब्दसञ्चारया
गन्तव्याऽद्य मया प्रियस्य वसतिर्मुग्धेति कृत्वा मतिम् ।
आजानूद्धृतनूपुरा करतलेनाच्छाद्य नेत्रे भृशं
कृच्छ्रेणात्तपदस्थितिः स्वभवने पन्थानमभ्यस्यति ॥ २ ॥

मूर्तिर्नीलदुकूलिनी मृगमदैः प्रत्यङ्गपत्त्रक्रिया
बाहू मेचकरत्नकङ्कणभृतौ कण्ठेऽम्बुसारावली ।
व्यालम्बालकमञ्जरीकमलिकं कान्ताभिसारोत्सवे
यत्सत्यं तमसा मृगाक्षि विहितं वेषे तवाचार्यकम् ॥ ३ ॥

जनो दुर्वङ्च्योऽयं कुलममलिनं वर्त्म विषमं
पतिश्छिद्रान्वेषी प्रणयिवचनं दुष्परिहरम् ।
अतः काचित्तन्वी रतिविहितसङ्केतगतये
गृहाद्द्वारं वारं निरसरदथ प्राविशदथ ॥ ४ ॥

छिद्रान्वेषणतत्परः प्रियसखि प्रायेण लोकोऽधुना
रात्रिश्चापि घनान्धकारबहुला गन्तुं न ते युज्यते ।
मा मैवं सखि वल्लभः प्रियतमस्तस्योत्सुका दर्शने
युक्तायुक्तविचारणा यदि भवेत् स्नेहाय दत्तं जलम् ॥ ५ ॥

तमः शान्तं शाम्यत्वयमुदित एवेन्दुरुदिया-
न्मया गम्यं तत्र प्रियसखि स यत्र प्रियतमः ।
गृहग्राहोत्सङ्गे शतमिव युगानां गतमहो
निशा चेदेवं स्यादयि कथय को मृत्युरपरः ॥ ६ ॥

निरीक्ष्य विद्युन्नयनैः पयोदो मुखं निशायामभिसारिकायाः।
धारानिपातैः सह किन्नु वान्तश्चन्द्रोऽयमित्यार्ततरं ररास ॥ ७ ॥

मन्दं निधेहि चरणौ परिधेहि वासो
नीलं पिधेहि वलयावलिमंशुकेन।
मा जल्प साहसिनि शारदचन्द्रकान्त-
दन्तांशवस्तव तमांसि समापयन्ति ॥ ८ ॥

हरिहरस्य।

अभिसरणरसः कृशाङ्ग्यष्टे-
रयमपरत्र न वीक्षितः श्रुतो वा।
अहिमपि यदियं निरासता(ना?)ङ्घ्रे-
र्निबिडितनूपुरमात्मनीनबुद्ध्या ॥ ९ ॥

कस्यापि।

नयस्व पारं पुलिनद्वयानुगां तरङ्गडोलामधिरोप्य मामितः।
प्रसीद यावन्न निशा[१] प्रदीर्यते यशांसि ते गायतु पांसुलाजनः ॥ १० ॥

बिल्हणस्य।

अग्रे धनुश्शरकरः स्वयमस्ति कामः
पश्चात्त्वरा शशधरोदयसंशयोत्था।
ध्वान्तं दिनान्तविकसद्विभवं समन्तात्
किं केवला पथि वधूर्दयिताभिसारे ॥ ११ ॥

सूक्तिरत्नाकरात्।

वातोद्धूतमुखं[२] प्रणष्टतिलका तोयार्द्रनीलांशुका
मेघानां निनदेन भीतहृदया गत्वा प्रियस्यालयम्।
द्वारं नेच्छति लज्जया प्रलपितुं देहीति वर्षाहता
पादौ नूपुरकर्दमप्रतिहतौ संशब्दयन्ती स्थिता ॥ १२ ॥

१. वि. कं. पाठभेदः २ खौ. क.

अम्भोजाक्ष्याः पुरवनलताधाम्नि संकेतभाज-
श्चेतोनाथे चिरयति भृशं मोहनिद्रां गतायाः।
स्वच्छं नाभिह्रदवलयितं कान्तरत्नांशुजालं
तोयभ्रान्त्या पिबति हरिणी विस्मयं च प्रयाति ॥ १३ ॥

ज्ञातं ज्ञातिजनैः प्रघुष्टमयशो दूरं गताऽधीरता
त्यक्ता धीः प्रतिपादितोऽप्यविनयः साध्वीपदं प्रोज्झितम्।
लुप्ता चोभयसाधुलोकपदवी दत्तः कलङ्कः कुले
भूयो दूति किमन्यदस्ति यदसावद्यापि नागच्छति ॥ १४ ॥

उत्तिष्ठ दूति यामो यामो यातस्तथाऽपि नायातः।
याऽतः परमपि तिष्ठेज्जीवितनाशो भवेत्तस्याः ॥ १५ ॥

केषामप्येते।

इति श्रीभगदत्तजल्हणविरचितायां सूक्तिमुक्तावल्यामभिसारिकापद्धतिः ॥



१. रमयति चिरं. ख. च.

# चन्द्रोदयवर्णनम्। (७२)



शेतेऽद्यापि न पद्मिनी कुमुदिनी सान्तःस्मिता वर्तते
रागात् किञ्चन किंचिदेव गणयत्येष स्पृशत्यम्बरम्।
इत्युद्भिन्नमृणालकोमलकरे शीतद्युतौ तत्क्षणा-
द्यामिन्या नवयोषितेव शमितो दीप्तस्त्विषामीश्वरः॥ १॥

[२]बिल्हणस्य।

उदयतटान्तरितमियं प्राची सूचयति दिङ्निशानाथम्।
परिपाण्डुना मुखेन प्रियमिव हृदयस्थितं रमणी॥ २॥

श्रीहर्षस्य।

क्रमादेकद्वित्रि[प्रभृति]परिपाट्या प्रकटयन्
कलाः स्वैरं स्वैरं नवनलिनकन्दाङ्कुररुचः।
पुरन्ध्रीणां प्रेयोविरहदहनोद्दीपितदृशां
कटाक्षेभ्यो बिभ्यन्निभृत इव चन्द्रोऽभ्युदयति॥ ३॥

प्रथममरुणच्छायस्तावत्ततः कनकप्रभ-
स्तदनु विरहोत्ताम्यत्तन्वीकपोलतलद्युतिः।
प्रभवति ततो ध्वान्तध्वंसक्षमः क्षणदामुखे
सरसबिसिनीकन्दच्छेदच्छविर्मृगलाञ्छनः॥ ४॥

कयोरप्येतौ।

उपोढरागेण विलोलतारकं
तथा गृहीतं शशिना निशामुखम्।
यथा समस्तं तिमिरांशुकं तया
पुरोऽपि रागाद्गलितं न लक्षितम्॥ ५॥

पाणिनेः।

---

१. दीप. ग. घ. २. र. क. पाठभेदः.

अद्यापि स्तनदुर्गशैलविषमे किं मानिनीनां हृदि
स्थातुं वाञ्छति मान एष झटिति क्रोधादिवालोहितः ।
उद्यद्दूरतरप्रसारितकरः कर्षत्यसौ तत्क्षणा-
त्फुल्लत्कैरवकोशनिस्सरदलिश्रेणीकृपाणं शशी ॥ ६ ॥

कस्यापि ।

अमुष्मिन् पञ्चेषोस्त्रिभुवनजिगीषोस्सहचरे
मुखं रात्रेरत्रेस्तनु[र्भुवि] रहश्चुम्बति सति ।
ज्वलन्तीर्ष्यारोषोदयमयतयेवोषधिलताः
पतद्भृङ्गीभङ्ग्या दधति कुमुदिन्यः कलुषताम् ॥ ७ ॥

शुचीनां हंसानां हरति मलिनानां मधुलिहां
मनो वेश्यादेश्या द्रविणमखिलं या कमलिनी ।
तमस्येवाद्रव्ये भवति विमुखी तच्छ्रियमसौ
कलावानादत्ते प्रथममनुरागप्रकटनैः ॥ ८ ॥

समुन्मीलत्पूर्वाचलशिखरदूर्वावनमृगी-
परीरम्भक्रीडारसपुलकितोत्सङ्गहरिणः ।
पुलिन्दीकन्दर्पक्लममपनयन्नंशुपटलैः
पतिर्नक्षत्राणामहह भगवानभ्युदयते ॥ ९ ॥

मदनस्यैते ।

इन्दुर्यद्युदयाद्रिमूर्ध्नि न भवत्यद्यापि तन्मास्मभू-
न्नासीरेऽपि तमःसमुच्चयममूरुन्मूलयन्ते त्विषः ।
अप्यक्ष्णोर्मुदमुद्गिरन्ति कुमुदैरामोदयन्ते दिशः
संप्रत्यूर्ध्वमसौ तु लाञ्छनमभिव्यङ्क्तुं प्रकाशिष्यते ॥ १० ॥

उन्मीलन्ति मृणालकोमलरुचो राजीवसंवर्त्तिका-
संवृत्तव्रतवृत्तयः कतिपये पीयूषभानोः कराः ।
अप्यस्तैर्धवलीभवत्सु गिरिषु क्षुब्धोऽयमुन्मज्जता
विश्वेनेव तमोमयो निधिरपामह्नाय फेनायते ॥ ११ ॥

१. हंहि. क. ख. ग. घ. च.

यत्पीयूषमयूखमालिनि तमःस्तोमावलीढायुषां
नेत्राणामपमृत्युहारिणि पुरः सूर्योढ एवातिथौ ।
अम्भोजानि पराञ्चि तन्निजमर्घं दत्त्वेव तेभ्यस्ततो
गौराङ्गीवदनोपमासुकृतमादत्ते पतिर्यज्वनाम् ॥ १२ ॥

एते मुरारेः ।

ख्याता वयं समधुपा मधुकोशवत्य-
श्चन्द्रः प्रसारितकरो द्विजराज एषः ।
अस्मत्समागमकृतोऽस्य पुनर्द्वितीयो
माभूत् कलङ्क इति सङ्कुचिता नलिन्यः ॥ १३ ॥

कस्यापि ।

तन्तुभ्रमेण रशनामणिगुम्फनाय
विद्याधरीभिरभितः क्षणगृह्यमाणैः ।
आशोभते शकवधूवदनांशुकल्पैः
प्राचीमुखं शशभृतः प्रथमैर्मयूखैः ॥ १४ ॥

सूक्तिसहस्रात् ।

सद्यःपाटितकेतकोदरदलश्रेणीश्रियं बिभ्रती
येयं मौक्तिकदामगुम्फनविधौ योग्यच्छविः प्रागभूत् ।
उन्मेया कलशीभिरञ्जलिपुटैर्ग्राह्या मृणालाङ्कुरैः
पातव्या च शशिन्यमुग्धविभवे सा चन्द्रिका वर्तते ॥ १५ ॥

कस्यापि ।

कैलासायितमद्रिभिर्विटपिभिः श्वेतातपत्रायितं
मृत्पङ्केन दधीयितं जलनिधौ दुग्धायितं वारिभिः ।
मुक्ताहारलतायितं व्रततिभिः शङ्खायितं श्रीफलैः
श्वेतद्वीपजनायितं जनपदैर्जाते शशाङ्कोदये ॥ १६ ॥

त्रिविक्रमस्य ।

कपाले मार्जारः पय इति कराँल्लेढि शशिन-
स्तरुच्छिद्रप्रोतान् बिसमिति करेणुः कलयति ।
रतान्ते तल्पस्थान्हरति वनिताऽप्यंशुकमिति
प्रभामत्तश्चन्द्रो जगदिदमहो विप्लवयति ॥ १७ ॥

भासस्य ।

जाते यौवनपीनधाम्नि शशिनि भ्राम्यन्तमारादपि
भ्रान्त्या श्वेतपतत्रिणं सहचरं कोकाङ्गना मुञ्चति ।
कुर्वन्नस्तमितोपलम्भविधुरो हंसः प्रियान्वेषणं
हर्षोत्सङ्कितमानसः पुनरिमामालोक्य सञ्जायते ॥ १८ ॥

गोत्रानन्दस्य ।

एकिकेव निजबृन्दमध्यगाऽप्युच्चुकूज सभयं सितच्छदी ।
दन्तमूलमसकृच्च संशयादाममर्श करिणः करेणुका ॥ १९ ॥
लोचनैर्न कुमुदं स्म पीयते चन्द्रिकातपतिरोहितच्छदम् ।
प्रादुरास परमुत्पिबन्नलिः सौरभं निरवलम्बमम्बुनि ॥ २० ॥

अभिनन्दस्यैतौ ।

दूरमंशुप्रभाजालं प्रसारयति चन्द्रमाः ।
रात्रौ नववयाः कामी मनोरथमिवाधनः ॥ २१ ॥
कुमुदेष्वधिकं भान्ति पतिताश्चन्द्ररश्मयः ।
अतिप्रकृष्टशीलेषु कुलेष्विव समृद्धयः ॥ २२ ॥

महामनुष्यस्यैतौ ।

पिनष्टीव तरङ्गाग्रैरुदधिः फेनचन्दनम् ।
तदादाय करैरिन्दुर्लिम्पतीव दिगङ्गनाः ॥ २३ ॥

( भगवतो ) व्यासस्य ।

१. पीयते स्म कुमुदं न लोचनैरिति रामचरिते पाठः २. त्पत. क. ख. च.

यथा ताराचक्रं चरति परितः शीकरनिभं
कलङ्कव्याजेन स्फुरति यदयं धूमनिवहः।
तथा मन्ये चण्डीपतिनयनचण्डाग्निवशग-
श्चकारास्मिन् झम्पां हिमकरतटाके मनसिजः ॥ २४ ॥

बिल्हणः।

किन्नु ध्वान्तपयोधिरेव कतकक्षोदैरिवेन्दोः करै-
रत्यच्छोऽयमधश्च पङ्कमखिलं छायापदेशादभूत्।
किं वा तत्करकर्तरीभिरभितो निस्तक्षणादुज्ज्वलं
व्योमैवेदमधश्चलन्ति पतिताश्छायाच्छलेन त्वचः ॥ २५ ॥

कमितुरभिसृत्वरीणां गौराङ्गीणामिहेन्दुधवलासु।
उड्डयमानानामिव रजनिषु परमीक्ष्यते छाया ॥ २६ ॥

मृगराजकरजभङ्गुरकिंशुककुसुमावतंसिकाः सुदृशः।
भयसङ्कुचदङ्कमृगं बहलोज्ज्वलमिन्दुमीक्षन्ते ॥ २७ ॥

एतस्य कलामेकाममृतमयूखस्य पार्वतीरमणः।
वर्णावलिमिव वहति प्रतिमासं घृष्यमानस्य ॥ २८ ॥

इन्दोरेककलाया रुद्रेणोद्धृत्य मूर्धनि धृतायाः।
स्थानमिव तुच्छमेतत् कलङ्करूपेण परिणमति ॥ २९ ॥

पीयूषाश्रयणं जगत्त्रयदृशामालातलेखालवो
विश्वोन्मादहुताशनस्य ककुभामुद्घाटिनी कुञ्चिका।
वीरेषु प्रथमा च पुष्पधनुषो रेखा मृगाक्षीमुख-
श्रीणां च प्रतिराजबीजमधिकानन्दी नवश्चन्द्रमाः ॥ ३० ॥

एते श्रीमुरारेः।

१. ग.

विद्यापीठं स्मरस्य त्रिपुरहरजटावल्लिसन्तानवान-
प्रस्थो मानद्रुमाणामुपशमपरशुः पांसुलावन्दिकारः ।
नेत्राणां बन्धुरंधुर्गगनमरुभुवः कोकलोकक्वणाद-
स्वाध्यायाध्यापकोऽयं विलसति कुलटाकालपाशो हिमांशुः ॥ ३१ ॥

कस्यापि ।

यः कालागरुपत्रभङ्गरचनावासैकसारायते
गौराङ्गीकुचकुम्भभूरिसुभगाभोगे सुधाधामनि ।
विच्छेदानलदीपितोत्कवनिताचेतोऽधिवासोद्भवं
स[न्तापं] विनिनीषुरेष विततैरङ्गैर्नता[ङ्गि] स्मरः ॥ ३२ ॥

भट्टेन्दुराजस्य ।

अवाप्य प्रागल्भ्यं परिणतरुचः शैलतनये
कलङ्को नैवायं विलसति शशाङ्कस्य वपुषि ।
अमुष्येयं मन्ये विगलदमृतस्यन्दशिशिरे
रतश्रान्ता शेते रजनिरमणी गाढमुरसि ॥ ३३ ॥

॥ इति श्रीमदारोहकभगदत्तजल्हणदेवविरचितायां सूक्तिमुक्तावल्यां चन्द्रोदयपद्धतिः ॥



१. न्तोषं. क. ख. च. २. ङ्गी. क. ख. च.

# पानगोष्ठीपद्धतिः ( ७३ )



हावहारि हसितं वचनानां कौशलं दृशि विकारविशेषाः।
चक्रिरे भृशमृजोरपि वध्वाः कामिनेव तरुणेन मदेन ॥
दत्तमिष्टतमया मधु पत्युर्गाढमाप पिबतो रसवत्ताम्।
यत्सुवर्णमकुटांशुभिरासीच्चेतनाविरहितैरपि पीतम् ॥ १ ॥

माघस्यैतौ।

न म[ द्यै ]संस्कारं कुसुममपि बाला विषहते
न निःश्वासैः सुभ्रूर्जनयति तरङ्गव्यतिकरम्।
नवोढा पश्यन्ती लिखितमिव भर्तुः प्रतिमुखं
प्ररोहद्रोमाञ्चा न पिबति न पात्रं चलयति ॥ २ ॥

पिपि प्रिय ससस्वयं मुमु मुखासवं देहि मे
ततत्यज दुदु द्रुतं भभजभाजनं काञ्चनम्।
इति स्खलितजल्पितं मदवशात्कुरङ्गीदृशः
प्रगे हसितहेतवे सहचरीभिरध्यायत ॥ ३ ॥

कयोरप्येतौ।

स्रस्तः स्रग्दामशोभां त्यजति विरचितामाकुलः केशपाशः
क्षीबाया नूपुरौ च द्विगुणतरमिवाक्रन्दतः पादलग्नौ।
व्यस्तः कम्पानुबन्धादनवरतमुरो हन्ति हारोऽयमस्याः
क्रीडन्त्याः पीडयेव स्तनभरविनमन्मध्यभागानपेक्षम् ॥ ४ ॥

श्रीहर्षस्य।

---

१. द्विः क. ख. च. २. ध्यैयत. शार्ङ्गधरीयः पाठः ३. क्तः क. ख.

कान्तानवाधररसामृततृष्णयेव
बिम्बं पपात शशिनो मधुभाजने यत् ।
निःशेषिते मधुनि लज्जितचित्तवृत्ति
तत्तन्मुखापजितकान्तितयेव नष्टम् ॥ ५ ॥

विभाकरवर्मणः ।

नियतमिह पतन्ति दन्तधारा
मदनमदोद्धतयोरितीव भीत्या ।
अधरकिसलयं विहाय यूनो-
र्मधु पिबतोर्नयनान्युपास्त रागः ॥ ६ ॥

कुमारदासस्य ।

दृश्यते पानकेलीषु कान्तावक्त्रगतं मधु ।
स्मरं सहायमासाद्य ग्रस्तो राहुरिवेन्दुना ॥ ७ ॥

क्षेमेन्द्रस्य ।

॥ इति श्रीमदारोहकभगदत्तजह्लणदेवविरचितायां सूक्तिमुक्तावल्यां पानगोष्ठीपद्धतिः ॥



# प्रियचाटुपद्धतिः ( ७४ )

यथा बहिः कण्टकितं वपुस्तव नितम्बिनि ।
तथा निष्कण्टकं राज्यं वर्ततेऽन्तर्मनोभुवः ॥ १ ॥

लघुवल्लभवासुदेवस्य ।

उद्भिन्ना कलकण्ठकण्ठकुहरात् कर्णामृतस्यन्दिनी
हृद्या यद्यपि मार्दवैकवसतिः सा काकलीहुंकृतिः ।
अन्यस्तन्वि तथाऽपि ते त्रिणयनप्लुष्टस्य जीवार्पणः
पञ्चेषोरुचितमपाञ्चितरसः पाकाञ्चितः पञ्चमः ॥ २ ॥

लोष्टसर्वज्ञस्य ।

स्मितपुष्पोद्गमोऽयं ते दृश्यतेऽधरपल्लवे ।
फलं तु जातं मुग्धाक्षि चक्षुषोर्मम पश्यतः ॥ ३ ॥

उदयोर्वीभृत्संस्थस्त्वद्वदनापहृतकान्तिसर्वस्वः ।
फूत्कर्तुमिवोर्ध्वकरः स्थितः पुरस्तान्निशानाथः ॥ ४ ॥

किं पद्मस्य रुचिं न हन्ति नयनानन्दं विधत्ते न किं
वृद्धिं वा झषकेतनस्य कुरुते नालोकमात्रेण किम् ।
वक्त्रेन्दौ तव सत्ययं यदपरः शीतांशुरभ्युद्यतो
दर्पः स्यादमृतेन चेदिह तदप्यस्त्येव बिम्बाधरे ॥ ५ ॥

श्रीहर्षस्यैतौ ।

यत् पद्ममादित्सु तवाननीयां कुरङ्गलक्ष्मा च मृगाक्षि लक्ष्मीम् ।
एकार्थलिप्साकृत एष मन्ये शशाङ्कपङ्केरुहयोर्विरोधः ॥ ६ ॥

श्रीहर्षपण्डितस्य ।

सुधामयोऽपि क्षयरोगशान्त्यै नासाग्रमुक्ताफलकच्छलेन ।
अनङ्गसञ्जीवनदृष्टशक्ति मुखामृतं ते पिबतीव चन्द्रः ॥ ७ ॥

वैद्यनाथस्य ।

द्वेधा विधाय विधुमण्डलमानताङ्गि
　　कर्तुं विधातरि कपोलयुगं प्रवृत्ते ।
तत्खण्डयुग्मगलितामृत [ बिन्दु ]पङ्क्ति-
　　सन्दोहवत्तव विराजति हारवल्ली ॥ ८ ॥

कस्यापि ।

लावण्यपूरपरिपूरितदिङ्मुखेऽस्मिन्
　　स्मेरेऽधुना तव मुखे तरलायताक्षि ।
क्षोभं यदेति न मनागपि तेन मन्ये
　　सुव्यक्तमेव जडराशिरयं पयोधिः ॥ ९ ॥

भगवतजयवर्धनस्य ।

न तावद्बिम्बोष्ठः स्फुरति न च रागोऽयमधरे
　　न चामी ते दन्ताः सुदति जितकुन्देन्दुमहसः ।
इमां मन्ये मुद्रामतनुतरसिन्दूरसुभगा-
　　मिदं मुक्तारत्नं मदननृपतेर्मुद्रितमिव ॥ १० ॥

कस्यापि ।

अनेन रम्भोरु तवाननेन तुषारभानोस्तुलया धृतस्य ।
ऊनस्य नूनं परिपूरणाय ताराः स्फुरन्ति प्रतिमानखण्डाः ॥ ११ ॥

गोत्रे साक्षादजनि भगवानेष यत्पद्मयोनिः
　　शय्योत्थायं यदखिलमहः प्रीणयन्ति द्विरेफान् ।
एकाग्रं यद्दधति भगवत्युष्णभानौ च भक्तिं
　　तत्प्रापुस्ते सुतनु वदनौपम्यमम्भोरुहाणि ॥ १२ ॥

एतौ मुरारेः ।

उन्मेषं यो मम न सहते योऽतिवैरी निशाया-
　　मिन्दोरिन्दीवरदलदृशा तस्य सौन्दर्यदर्पः ।
नीतः शान्तिं प्रसभमनया वक्त्रकान्त्येति हर्षा-
　　ल्लग्ना मन्ये ललिततनु ते पादयोः पद्मलक्ष्मीः ॥ १३ ॥

१. दन्त. क. ख. च. २. भगवतो. क. ३. कृत. क. पाठभेदः

विसृज दयिते हासज्योत्स्नां निमीलतु पङ्कजं
विकिर नयने नष्टच्छायं भवत्वसितोत्पलम्।
वद सुवदने लज्जामूका भवन्त्वपि कोकिलाः
परपरिभवो मानस्थाने न मानिनि सह्यते ॥ १४ ॥

कयोरप्येतौ।

तरङ्गय दृशोऽङ्गणे भवतु भिन्नमिन्दीवरं
स्फुटीकुरु रदच्छदं व्रजतु विद्रुमः श्वेतताम्।
क्षणं वपुरपावृणु स्पृशतु काञ्चनं कालिका-
मुदञ्चय मुखं मनाग्भवतु च द्विचन्द्रं नभः ॥ १५ ॥

राजशेखरस्य।

तल्लोकोऽतिशयोक्तिमेव वदतु स्तोत्रं पुनर्मन्यतां
स्रष्टुं त्वां सुभगे चकार मदनो भूतानि चैतानि यत्।
पृथ्वी चम्पकपारिजातममृतं पाथो महः शारदः
प्रालेयांशुरथानिलो मलयभूर्ज्योत्स्ना१लिप्तं नभः ॥ १६ ॥

हरिहरस्य।

अन्तेनार्जुनतां दधाति नयनं मध्ये तथा कृष्णतां
द्वैरूप्यं दधताऽमुना विरचितः कर्णेन ते विग्रहः।
तत्कर्णार्जुनकृष्णविग्रहवती साक्षात्कुरुक्षेत्रतां
यातासि त्वदवाप्तिरेव तरुणि श्रेयः परं गण्यते ॥ १७ ॥

मुग्धे धानुष्कता केयमपूर्वा तव२ दृश्यते।
यया विध्यसि३ चेतांसि गुणैरेव न सायकैः ॥ १८ ॥

कयोरप्येतौ।

॥ इति श्रीमदारोहकभगदत्तजल्हणदेवविरचितायां सूक्तिमुक्तावल्यां प्रियचाटुपद्धतिः ॥

---

१. सेय. २. त्वयि. ३. विद्धानि. क. पाठभेदः.

# सुरतप्रशंसापद्धतिः ( ७५ )

यत्र न मदनविकारः सद्भावसमर्पणं च गात्राणाम् ।
तस्मिन्नुद्धृतभावे पशुकर्मणि पशव एव रज्यन्ते ॥ १ ॥

यत्र स्वेदजलैरलं विलुलितैर्व्यालुप्यते चन्दनं
सच्छेदैर्मणितैश्च यत्र रणितं निह्नूयते नौपुरम् ।
यत्रायान्त्यचिरेण सर्वविषयाः कामं तदेकाग्रतां
सख्यस्तत्सुरतं भणामि धृतये शेषा तु लोकस्थितिः ॥ २ ॥

रुद्रस्यैतौ ।

गिरो यत्राधीरा भुजयुगलमाश्लेषचतुरं
लुठद्घ्राणापीडं प्रसरति च चक्षुस्सरभसम् ।
न तन्मन्ये प्रेम प्रणयिनि चिराद्दृष्टिपथगे
क्षणं मूकोऽन्धो वा भवति न जडो यत्प्रियजनः ॥ ३ ॥

कस्यापि ।

इन्दुर्यत्र न निन्द्यते न च कलं दूतीवचः श्रूयते
नोच्छ्वासा हृदयं दहन्त्यशिशिरा नो याति कार्श्यं वपुः ।
स्वाधीनामनुकूलिनीं प्रियतमामालिङ्ग्य यत्सुप्यते
तत्किं प्रेम गृहाश्रमव्रतमहो कष्टं हि तच्चर्यते ॥ ४ ॥

आश्लेषे प्रथमं क्रमेण विजिते हृद्येऽधरस्यार्पणे
केलिद्यूतविधौ पणं प्रियतमे कान्तां पुनः पृच्छति ।
सान्तर्हासनिरुद्धसंभृतरसोद्भेदस्फुरद्गण्डया
स्वैरं सारिविसारणाय निहितः स्वेदाम्बुगर्भः करः ॥ ५ ॥

---

१ नर्म. शार्ङ्गधरीयः पाठः ।

अक्षद्यूतजिताधरग्रहविधावीशोऽसि तत्खण्डना-
दाधिक्ये वद को भवानिति मृषा कोपाञ्चितभ्रूलतम्।
स्विद्यत्खिन्नकरा[ग्रेकुड्म]लपरायत्तीकृतास्यस्य मे
मु[ग्धाक्षी] प्रतिकृत्य तत्कृतवती द्यूतेऽपि यन्नार्जितम् ॥ ६ ॥

गोपादित्यस्य।

आश्लेषचुम्बनरतोत्सवभूषणानि
क्रीडादुरोदरपणः प्रतिभूरनङ्गः।
भोगः स यद्यपि जये च पराजये च
यूनोर्मनस्तदपि वाञ्छति जेतुमेव ॥ ७ ॥

श्रीमुरारेः।

अक्षदेवनपणीकृतेऽधरे कान्तयोर्जयपराजये सति।
अत्र वक्तु यदि वेत्ति मन्मथः कस्तयोर्जयति जीयतेऽपि वा ॥ ८ ॥

भागवतजयवर्धनस्य।

गाढालिङ्गनपूर्वमेकमनया द्यूते जितं चुम्बनं
तत्किंचित्परिरभ्य दत्तममुना प्रत्यर्पितं चानया।
नैतत्तादृगिदं न तादृशमिति प्रत्यर्पणप्रक्रमै-
र्यूनोश्चुम्बनमेकमेव बहुधा रात्रिर्गता तन्वतोः ॥ ९ ॥

उड्डीयकवेः।

चक्षुःप्रीत्या प्रसक्ते मनसि परिचये चिन्त्यमानाभ्युपाये
रागे याते गुरुत्वं प्रविशति नितरां गोचरे दूतिकायाः।
आस्तां दूरेण तावत्सरभसदयितालिङ्गनानन्दलाभ-
स्तद्गेहोपान्तरथ्याभ्रमणमपि परां निर्वृतिं सन्तनोति ॥ १० ॥

कस्यापि।

॥ इति श्रीमदारोहकभगदत्तजल्हणदेवविरचितायां सूक्तिमुक्तावल्यां सुरतप्रशंसापद्धतिः ॥



१ ग्रेकुन्त. क. ख. च. २ तस्यास्यते क. ख. च. ३ ग्धाक्षि. क. ख. च. ४ प्रविसरति गिरां विस्तरे क. पाठभेदः

# नववधूसङ्गमे सखीवाक्यपद्धतिः ( ७६ )



कण्टकिततनुशरीरा लज्जामुकुलायमाननयनेयम् ।
तव कुमुदिनीव वाञ्छति नृचन्द्र बाला करस्पर्शम् ॥ १ ॥

यत्तापयन्ति शिशिरांशुरुचो यदेते
त्वां मोहयन्ति च विनिद्रसरोजवाताः ।
यत्खिद्यते तनुरियं च तदेष दोषः
सत्यं तवैव सुतनु प्रचुरत्रपायाः ॥ २ ॥

रुद्रस्य ।

बाला तन्वी कृशतनुरिति त्यज्यतामत्र शङ्का
दृष्टा काचिद्भ्रमरभरतो वल्लरी भज्यमाना ।
तस्मादेषा रहसि भवता निर्दयं पीडनीया
मन्दाक्रान्ता विसृजति रसं नेक्षुयष्टिः समग्रम् ॥ ३ ॥

विकटनितम्बायाः ।

नीरन्ध्रं परिरभ्यते प्रियतमो भूयस्तरां चुम्ब्यते
तद्गाढं क्रियते यदस्य रुचिरं चाटूत्करैः स्तूयते ।
सख्या मुग्धवधूरसौ रतिविधौ यत्नेन संशिक्षिता
निर्भ्रान्तं गुरुणा पुनः शतगुणं पुष्पेषुणा कारिता ॥ ४ ॥

रुद्रस्य ।

॥ इति श्रीमदारोहकभगदत्तजल्हणदेवविरचितायां सूक्तिमुक्तावल्यां
नववधूसङ्गमे सखीवाक्यपद्धतिः ॥



# नववधूरतपद्धतिः ( ७७ )

प्रायो नववधूः कान्तमालिङ्गति शनैः शनैः।
चित्ताङ्कुरितकन्दर्पकदलीभङ्गशङ्कया ॥ १ ॥

कस्यापि।

दृष्टा दृष्टिमधो दधाति कुरुते नालापमाभाषिता
शय्यायां परिवृत्त्य तिष्ठति बलादालिङ्गिता वेपते।
निर्यान्तीषु सखीषु वासभवनान्निर्गन्तुमेवेहते
बाला वामतया प्रियस्य सुतरां प्रीत्यै नवोढा प्रिया ॥ २ ॥

श्रीहर्षस्य।

हर्षादुत्पुलकं विकासि रभसादुन्नामितं कौतुका-
च्छृङ्गारादलसं भयात्तरलदृङ्क्म्रं च लज्जाभरात्।
आसीत्तन्नवसङ्गमे मृगदृशः कान्तार्पणायोत्सुकं
किंचित्काञ्चनगौरगण्डगलितस्वेदाम्बु रम्यं मुखम् ॥ ३ ॥

कस्यापि।

विरम नाथ विमुञ्च ममाञ्चलं शमय दीपमिमं स[मियां][1] सखीम्।
इति नवोढवधूवचसा युवा मुदमगादधिकां सुरतादपि ॥ ४ ॥

रुद्रस्य।

समाकृष्टं वासः कथमपि हठात्पश्यति तदा
क्रमादूरुद्वन्द्वं जरठशरगौरं मृगदृशः।
तया दृष्टिं दत्वा महति मणिदीपे निपुणया
निरुद्धं हस्ताभ्यां झगिति निजनेत्रोत्पलयुगम् ॥ ५ ॥

कस्यापि।

दृढनिबिडनव्याजात् काञ्चीलता शकलीकृता
प्रियनयनयोर्न्यस्तौ हस्तौ तदा तरलाङ्गुली।
जघननिहितो रुद्धः पाणिः श्लथं न निवारितः
प्रथितमुभयं लज्जारागागमौ नवयोषिता ॥ ६ ॥

भट्टेन्दुराजस्य।

१. मया. क. ख. च.

पटालग्ने पत्यौ नमयति मुखं जातविनया
हठाश्लेषं वाञ्छत्यपहरति गात्राणि निभृतम् ।
न शक्नोत्याख्यातुं स्मितमुखसखीदत्तनयना
ह्रिया ताम्यत्यन्तः प्रथमपतिभोगे नववधूः ॥ ७ ॥

अमरुकस्य ।

निर्वाणतां नयसि किं हरिणाक्षि दीप-
माविर्भवन्ननवरतत्रपया विलोला ।
ज्योत्स्नां वितन्वति सदा तव वक्त्रचन्द्रे
गौराङ्गि तर्कय कुतस्तिमिरावकाशः ॥ ८ ॥

त्रिलोचनस्य ।

अङ्गाकृष्टदुकूलया सरभसं गूढौ भुजाभ्यां स्तना-
वाकृष्टे जघनांशुके कृतमतः संसक्तमूरुद्वयम् ।
नाभीमूलनिबद्धचक्षुषि तया व्रीडानताङ्ग्या प्रिये
दीपः फूत्कृतिवातवेपितशिखः कर्णोत्पलेनाहतः ॥ ९ ॥

कर्णोत्पलस्य ।

चुम्बनेष्वधरदानवर्जितं सन्नहस्तमदयोपगूहने ।
क्लिष्टमन्मथमपि प्रियं सदा दुर्लभप्रतिकृतं वधूरतम् ॥ १० ॥

कालिदासस्य ।

काञ्च्या गाढतरावबद्धवसनप्रान्ता किमर्थं पुन-
र्मुग्धाक्षी स्वपितीति तत्परिजनं स्वैरं प्रिये पृच्छति ।
मातः सुप्तिमपीह लुम्पासि(ति ?) ममेत्यारोपितक्रोधया
पर्यस्य स्वपनच्छलेन शयने दत्तोऽवकाशस्तया ॥ ११ ॥

अमरुकस्य ।

---

१. परिहासे क. ख. च. २. रुद्धौ क. पाठभेदः. ३. चुम्बनेषु परिवर्तिताधरं हस्तरोधि रशनाविघट्टने । विघ्नितेच्छमपि तस्य सर्वतो मन्मथेन्धनमभूद्वधूरतम् ॥ इति शार्ङ्गधरीयः पाठः

प्रयच्छाहारं मे यदि तव रहोवृत्तमखिलं
मया वाच्यं नोच्चैरिति गृहशुके जल्पति शनैः।
वधूव(वं?)क्त्रं व्रीडाभरनमितमन्तर्विकसितं
हर(वह?)त्यर्धोन्मीलन्नलिनमलिना वर्जितमिव ॥ १२ ॥

कस्यापि।

॥ इति श्रीभगदत्तजल्हणविरचितायां सूक्तिमुक्तावल्यां नववधूरतपद्धतिः ॥

---

## सुरतकेलिपद्धतिः ( ७८ )



टङ्कारः स्मरकार्मुकस्य सुरतक्रीडापिकीनां रवो
झङ्कारो रतिमञ्जरीमधुलिहां केलीचकोरीस्वनः।
तन्व्याः कञ्चुलिकापसारणभुजाक्षेपस्फुरत्कङ्कण-
क्वाणः प्रेम तनोतु वो नववयोलास्याय वेणुध्वनिः ॥ १ ॥

कस्यापि।

प्रतिक्षणसमुल्लसन्नवकलाकलापान्वित-
क्षपाकरविलोकने यदि तवास्ति कौतूहलम्।
विलोकय तदा सखे सुरतसङ्गरासूत्रण-
प्रहृष्टदयितामुखं निबिडकञ्चुकोत्तारणे ॥ २ ॥

भट्टसोमेश्वरस्य।

तृषितः स्पृशति प्रेयान्यद्यदङ्गं मृगीदृशः।
तत्तत्सङ्कुचति स्वैरं मन्मथः प्रसरत्यहो ॥ ३ ॥

वसुन्धरस्य।

नान्दीपदानि रतिनाटकविघ्नशान्ता-
वाज्ञाक्षराणि परमाण्यथवा स्मरस्य।
दष्टेऽधरे प्रणयिना विधुताग्रपाणेः
सीत्कारवन्ति [ रणि ]तानि जयन्ति तन्व्याः ॥ ४ ॥

वामनस्य।

---

१. रदि, क. ख. च.

समादिष्टं शिष्टैः परममिह यन्निर्वृतिपदं
पुनर्दग्धोऽप्याशु प्रभवति यतो मन्मथतरुः ।
श्रुते यस्मिन् कामी भवति कृतकृत्यो रतिमुखं
स सीत्कारः पायादमृतविजयी सुन्दरदृशाम् ॥ ५ ॥

सीत्कारत्नस्य ।

आयाते दयिते मनोरथशतैर्नीत्वा कथंचिद्दिनं
वैदग्ध्यापगमाज्जडे परिजने दीर्घां कथां कुर्वति ।
दष्टाऽस्मीत्यभिधाय सत्वरपदं व्याधूय चीनांशुकं
तन्वङ्ग्या रतिकातरेण मनसा नीतः प्रदीपः शमम् ॥ ६ ॥

अद्भुतपुण्यस्य ।

कचग्रहमनुग्रहं दशनखण्डनं मण्डनं
दृगञ्जनमवञ्चनं मुखरसार्पणं तर्पणम् ।
नखार्दनमतर्दनं निबिडपीडनं क्रीडनं
करोति रतिसङ्गमे मकरकेतनः कामिनाम् ॥ ७ ॥

माहिलस्य ।

स्वैरं पश्यति वल्लभे सरभसं हृत्वा दुकूलं बला-
दङ्गानां रतिसङ्गरव्यतिकरे सौन्दर्यरेखाक्रमम् ।
यत्तन्व्याः परिरभ्यमाणमदनव्रीडाविलासालसै-
रङ्गैरङ्गपिधानमुत्पलदृशः कस्यापि तद्गोचरम् ॥ ८ ॥

कस्यापि ।

स्वेदजलपिच्छलाभिस्तनुभिर्यूनां च शिथिलमाश्लेषम् ।
विपुलं पुलकशलाकापटलं झटिति प्रतिकरोति ॥ ९ ॥

श्रीमुरारेः ।

सन्दष्टाधरपल्लवा सचकितं हस्ताग्रमाधून्वती
मा मा मुञ्च शठेति कोपवचनैरानर्तितभ्रूलता ।
सीत्काराञ्चितलोचना सपुलकं यैश्चुम्बिता मानिनी
प्राप्तं तैरमृतं श्रमाय मथितो मूढैस्सुरैस्सागरः ॥ १० ॥

अमरुकस्य ।

दीपितस्मरमुरस्युपपीडं वल्लभे घनमभिष्वजमाने।
वक्रतां न ययतुः कुचकुम्भौ सुभ्रुवः कठिनतातिशयेन ॥ ११ ॥

माघस्य।

नैषा वेगं मृदुतरतनुस्तावकीनं विसोढुं
शक्ता मैनां चपल सुहृदं खेदयेन्दीवराक्षीम्।
रत्यभ्यासं विदधत इति प्राणनाथस्य गत्वा
कर्णोपान्ते निभृतनिभृतं नूपुरं शंसतीव ॥ १२ ॥

धूर्तस्य।

दृशा सपदि मीलितं दशनरोचिषा निर्गतं
करेण परिवेपितं वलयकैरथाक्रन्दितम्।
प्रियैः समदयोषितां ननु विखण्ड्यमानेऽधरे
परव्यसनकातराः किमु न कुर्वते साधवः ॥ १३ ॥

शिवस्वामिनः।

पाणिः कम्पमवाप काञ्चिरपतत्[ध्वस्तां त्रपा] नूपुरै-
राक्रन्दाच्चिकुरैर्दधे विधुरता यत्रातिशीर्णोऽधरः।
एको वीरतरस्स कामसमरे वक्षोभवः सुभ्रुवां
येनात्याहतिजर्झरेण न मनाक्शैथिल्यमालम्बितम् ॥ १४ ॥

कस्यापि।

धम्मिल्लो भङ्गमेतु प्रविशतु तिलकः केशपाशान्धकारं
पत्राली गण्डपालीं त्यजतु च विवरं कर्णयोर्गन्तुकामा।
वामायाः कान्तदन्तक्षततितिसहने त्वेक एवाधरोऽसौ
वीरः कामाहवेऽस्मिन्निति वदति चलन्नूपुरक्वाणभङ्ग्या ॥ १५ ॥

पूर्णे मन्मथसङ्गरे रणाजितां सत्कारमातन्वती
वासोऽदाज्जघनस्य पीनकुचयोर्हारं श्रुतेः कुण्डलम्।
बिम्बोष्ठस्य च वीटिकां मणिमये पाण्यो रणत्कङ्कणे
पृष्ठालम्बिनि केशपाशनिचये युक्तो हि बन्धक्रमः ॥ १६ ॥

श्रीवैद्यभानुपण्डितस्य।

१. ध्वस्ता त्रसन्नू क. ख. च.

पश्यन्नर्धनिमीलिताक्षियुगलं वक्त्रारविन्दं मुहु-
र्बिम्बोष्ठामृतमापिबन्मृगदृशो जिघ्रन्मुखे सौरभम् ।
आलिङ्गन्नतिनिर्भरं स्तनतटं सीत्कारमाकर्णय-
न्नेवं पञ्चभिरिन्द्रियैर्निधुवने प्राप्नोति धन्यो मुदम् ॥ १७ ॥

कस्यापि ।

चिरविरहिणोरुत्कण्ठार्त्या श्लथीकृतगात्रयो-
र्नवमिव जगज्जातं भूयश्चिरादभिनन्दतोः ।
कथमपि दिने दीर्घे याते निशामधिरूढयोः
प्रसरति कथा बह्वी यूनोर्यथा न तथा रतिः ॥ १८ ॥

अमरुकस्य ।

अकृत्रिमविलासाङ्कमाशिक्षितकलाक्रमम् ।
अविभागाङ्गसुभगं बभूव सुरतं तयोः ॥ १९ ॥

क्षेमेन्द्रस्य ।

नखदशननिपातजर्जराङ्गी रतिकलहे परिपीडिता प्रहारैः ।
सपदि मरणमेव किं न यायाद्यदि न पिबेदधरामृतं प्रियस्य ॥ २० ॥

तस्यैव ।

किमपि किमपि मन्दं मन्दमासक्तियोगा-
दविरलितकपोलं जल्पतोरक्रमेण ।
सपुलकपरिरम्भव्यापृतैकैकदोष्णो-
रविदितगतयामा रात्रिरेव व्यरंसीत् ॥ २१ ॥

भवभूतेः ।

गाढोपगूहनरसालसलोचनाना-
मेणीदृशां पुलकदन्तुरकुड्मलेषु ।
गण्डस्थलेषु वदनानि निवेशयन्तो
धन्याः सुखेन दिवसानतिवाहयन्ति ॥ २२ ॥

नाथकुमारस्य ॥

॥ इति श्रीमदारोहकभगदत्तजल्हणदेवविरचितायां सूक्तिमुक्तावल्यां सुरतकेलिपद्धतिः ॥

## ॥ विपरीतरतपद्धतिः ॥ (७९)



विपरीतरतायासजनिताः स्वेदबिन्दवः।
पतन्तु तव गात्रेषु कामिनीवदनच्युताः ॥ १ ॥

कस्यापि।

पततु तवोरसि सततं दयिताधम्मिलमल्लिकानिकरः।
रतिरसरभसकचग्रहलुलितालकवल्लरीगलितः ॥ २ ॥

बाणस्य।

गाढाश्लेषविशीर्णचन्दनरजःपुञ्जप्रकर्षादियं
शय्या संप्रति कोमलाङ्गि परुषेत्यारोप्य मां वक्षसि।
गाढोष्ठग्रहपूर्वमाकुलतया पादाग्रसन्दंशके-
नाकृष्याम्बरमात्मनो यदुचितं धूर्तेन तत्प्रस्तुतम् ॥ ३ ॥

अमरुकस्य।

आहतं कुचतटेन रमण्याः साधु सोढममुनेति पपात।
त्रुट्यतः प्रियतमोरसि हारात्पुष्पवृष्टिरिव मौक्तिकवृष्टिः ॥ ४ ॥

माघस्य।

लीलाचामरडम्बरो रतिपतेर्नीलाम्बुवाहागमो
रागोद्गारशिखण्डिनो मुखविधूद्भूतस्तमोविभ्रमः।
तारुण्योन्मददन्तिदानविसरो रोलम्बमालाकुलो
धम्मिल्लो हरिणीदृशां विजयते स्रस्तो रतिव्यत्यये ॥ ५ ॥

वामननागस्य[3]।

मुग्धे तवास्मि दयिता पुरुषो भव त्व-
मित्युक्तया नहि नहीति शिरो विधूय।
स्वंसात् करात् प्रियकरे वलयं क्षिपन्त्या
वाचं विनाऽभ्युपगमः कथितो मृगाक्ष्या ॥ ६ ॥

---

१. तरुण्याः. क. पाठभेदः. २. होदयो. क. पाठभेदः ३. वामनस्य, ख. न.

आचम्याधरसिन्धुवारि कबरीसंभारसम्मार्जिते
स्वेदाम्भःस्नपिते कपोलविगलत्काश्मीरपङ्कोज्ज्वले ।
काञ्चीमन्त्ररुतेन निर्भरगलन्मुक्ताकलापस्रजा
धन्यस्योरसि घूर्णमाननयना पञ्चेषुमभ्यर्चति ॥ ७ ॥

चलहारलताश्रिया चिरं रमणोरःस्थलरङ्गनर्तनेन ।
मणितध्वनिडम्बरेण सा कृतवाद्येव बभूव कामिनी ॥ ८ ॥

क्वचित्ताम्बूलाक्तः क्वचिदगरुपङ्काङ्कमलिनः
क्वचिच्चूर्णोद्गारी क्वचिदपि च सालक्तकपदः ।
वलीभङ्गाभोगैरलकपतितैः कीर्णकुसुमैः
स्त्रियाः सर्वावस्थं प्रथयति रतं प्रच्छदपटः ॥ ९ ॥

केषामप्येते ।

॥ इति श्रीमदारोहकभगदत्तजल्हणदेवविरचितायां सूक्तिमुक्तावल्यां विपरीतरतपद्धतिः ॥



# सुरतनिवृत्तिः (८०)



वीतोष्ठरागाणि हृताञ्जनानि भास्वन्ति लोलैरलकैर्मुखानि।
प्रातः कृतार्थानि यथा विरेजुस्तथा न पूर्वेद्युरलङ्कृतानि ॥ १ ॥

भट्टस्वामिनः।

नैपथ्यादपि राजते किमपि सा व्यालुप्तभूषा तनुः
संभोगश्रममीलितं विजयते चक्षुः कटाक्षादपि।
गाढालिङ्गनकौतुकादपि नवं दोर्वल्लिविस्रंसनं
प्रीत्यालापरसादपि प्रियतमं मौनं कुरङ्गीदृशः ॥ २ ॥

हरिहरस्य ॥

करकिसलयै[1] धूत्वा धूत्वा विमार्गति वाससी
क्षिपति सुतनुर्मालाशेषं[2] प्रदीपशिखां प्रति।
स्थगयति मुहुः पत्युर्नेत्रे विहस्य समाकुला
सुरतविरतौ रम्यं[3] तन्व्या[4] मुहुर्मुहुरीक्षितम् ॥ ३ ॥

सुरतविरतौ व्रीडावेशश्रमश्लथहस्तया
रहसि गलितं तन्व्या प्राप्तुं न पारितमंशुकम्।
रतिरसजडैरङ्गैरङ्गं पिधातुमशक्तया
प्रियतमतनौ सर्वाङ्गीणं प्रविष्टमधृष्टया ॥ ४ ॥

अमरुकस्यैतौ ॥

आवृण्वाना झटिति जघनं सा दुकूलाञ्चलेन
प्रेङ्खत्क्रीडाकुलितकबरीबन्धनव्यग्रपाणिः।
ऊर्ध्वोच्छ्वासस्फुटनखपदैश्चिह्निताभ्यां[5] स्तनाभ्यां
दृष्टा धाष्टर्यस्मृतिनतमुखी मोहनान्ते प्रियेण ॥ ५ ॥

कस्यापि।

१. यं. २. सुमनो. क. पाठभेदः ३ रम्या तन्वी पुनः पतिमाश्रिता. शार्ङ्गधरीयः पाठः ४ तन्वी. ५. क्षते. क. पाठभेदः

स्वामिन् भङ्गुरयालकं सतिलकं फालं विलासिन् कुरु
प्राणेश त्रुटितं पयोधरतटे हारं पुनर्योजय ।
इत्युक्त्वा सुरतावसानसुखिता संपूर्णचन्द्रानना
स्पृष्टा तेन तथेति जातपुलका प्राप्ता पुनर्मोहनम् ॥ ६ ॥

रुद्रस्य ।

प्रियकृतपटस्तेयक्रीडाविडम्बनविह्वलां
किमपि कृपणालापां बालां विलोक्य ससंभ्रमः ।
अपि विचलितस्कन्धावारो गते सुरताहवे
त्रिभुवनमहाधन्वी स्थाने व्यवर्तत मन्मथः ॥ ७ ॥

कस्यापि ।

व्याधूतहारमणयः परिधूतमाल्याः
मन्दस्मितप्रसरसत्रपदृष्टिपाताः ।
तस्या जयन्ति ललितश्रमवारिलेशाः
सीत्कारमुग्धमणितध्वनयो रतान्ताः ॥ ८ ॥

सर्वज्ञवासुदेवस्य ।

लुलितकुसुमसम्पत्केशपाशस्तरुण्या
मुकुलितनयनान्तं व्रीडया नम्रमास्यम् ।
करतलपरिधानं नाभिमूलं रतान्ते
पुनरपि रतलीलां प्रेयसः सन्तनोति ॥ ९ ॥

कस्यापि ।

इति श्रीमदारोहकभगदत्तजल्हणदेवविरचितायां सूक्तिमुक्तावल्यां
सुरतनिवृत्तिपद्धतिः ।



# प्रणयकलहे नायकानुनयः ( ८१ )



क्षीणांशुः शशलाञ्छनः शशिमुखि क्षीणो न कोपस्तव
स्मेरं पद्मवनं मनागपि न ते स्मेरं मुखाम्भोरुहम् ।
पीतं श्रोत्रपुटेन षट्पदरुतं पीतं न ते जल्पितं
रक्ता शक्रदिगङ्गना रविकरैर्नाद्यापि रक्तासि किम् ॥ १ ॥

प्रहिणु रमणि मानं मौनमुन्मुच्य साची-
कृतशिरसि ममास्मिन्नर्पयस्वाङ्घ्रियुग्मम् ।
अयि सुमुखि मयूखाः पश्य पीयूषभानो-
र्वरुणनगरनारीनेत्रपात्रीभवन्ति ॥ २ ॥

गतप्राया रात्रिः कृशतनु शशी शीर्यत इव
प्रदीपोऽयं निद्रावशमुपगतो घूर्णत इव ।
प्रणामान्तो मानस्त्यजसि न तथापि क्रुधमहो
कुचप्रत्यासत्त्या हृदयमपि ते चण्डि कठिनम् ॥ ३ ॥

माणिक्यैर्दशनश्रियं घटयता बिम्बाधरं विद्रुमै-
र्मुक्ताभिः स्मितमिन्द्रनीलशकलक्षोदैश्च केशोच्चयान् ।
इत्थं रत्नमयं विधातुमखिलं दुर्मेधसा वेधसा
तेनैवावनताङ्गवल्लि विहितं वज्रेण चेतस्तव ॥ ४ ॥

अस्तं याति शशी शशाङ्कवदने मानं विमुञ्चाधुना
किं मानेन मुधा नतभ्रु गगनाद्भ्रश्यन्त्यमूस्तारकाः ।
इत्थं त्वामनुशिक्षयन् क्षितितलादुन्नम्य पादं शनैः
क्षीणां वीक्ष्य निशां निसर्गसुभगं गायत्यसौ कुक्कुटः ॥ ५ ॥

जाते केलिकलाकृते कमितरि व्यर्थानुनीतौ चिरा-
न्माने म्लायति मन्मथे विकसति क्षीणे क्षपानेहसि ।
स्वप्नव्याजमुपेत्य तन्निपुणया निद्रान्ध्यमाचेष्टितं
मानम्लानिरभून्न येन च नचा[प्या]सीद्रहःखण्डनम् ॥ ६ ॥

केषामप्येते ।

एकस्मिन् शयने विपक्षरमणीनामग्रहे मुग्धया
सद्यः कोपपराङ्मुखग्लपितया चाटूनि कुर्वन्नपि ।
आवेगादवधीरितः प्रियतमस्तूष्णीं स्थितस्तत्क्षणं[1]
माभूत् सुप्त इवेत्यमन्दवलितग्रीवं पुनर्वीक्षितः ॥ ७ ॥

एकस्मिन्नयने पराङ्मुखतया वीतोत्तरं ताम्यतो-
रन्योन्यस्य हृदि स्थितेऽप्यनुनये संरक्षतोर्गौरवम् ।
दम्पत्योः शनकैरपाङ्गवलनान्मिश्रीभवच्चक्षुषो-
र्भग्नो मानकलिः सहासरभस[2]व्यावृत्तकण्ठग्रहम् ॥ ८ ॥

अमरुकस्यैतौ ।

॥ इति श्रीभगदत्तजल्हणविरचितायां सूक्तिमुक्तावल्यां नायकानुनयपद्धतिः ॥



१ णात्. च २ रभसं कण्ठग्रहोऽनुष्ठितः इति शार्ङ्गधरीयः पाठः ।

## ॥ प्रभातवर्णनम् ॥ ( ८२ )

द्वित्रैर्व्योम्नि पुराणमौक्तिकमणिच्छायैः स्थितं तारकै-
ज्योत्स्नापानभरालसेन वपुषा सुप्ताश्चकोराङ्गनाः ।
यातोऽस्ताचलचूलमुद्वसमधुच्छत्रच्छविश्चन्द्रमाः
प्राची बालबिडाललोचनरुचां जाता च पात्रं ततः ॥ १ ॥

राजशेखरस्य ।

यः सैन्ये स्मरपार्थिवस्य विरहिप्रत्यर्थिनामग्रणीः
ज्योत्स्नानिर्झरमुज्झति स्म जगतां यस्तापनिर्वापणम् ।
सोऽयं तारकनायकः किमपरं शृङ्गारसञ्जीवनं
जातः पिष्टपरागपाण्डुरजरत्कूश्माण्डपिण्डाकृतिः ॥ २ ॥

बिल्हणस्य ।

पत्यौ पात्रे कलानां व्रजति विधिवशादस्तमिन्दौ क्रमेण
क्रन्दन्ती पत्रिनादैर्विगलिततिमिरस्तोमधम्मिल्लभारा ।
प्रभ्रश्यत्स्थूलमुक्ताफलनिकरपरिस्पर्धितारार्श्रुबिन्दुः
प्रोन्मीलत्पूर्वसन्ध्याहुतभुजि रजनी पश्य देहं जुहोति ॥ ३ ॥

कस्यापि ।

तमोभिः पीयन्ते गतवयसि पीयूषवपुषि
ज्वलिष्यन्मार्ताण्डोपलपटलधूमैरिव दिशः ।
सरोजानां कर्षन्नलिमयमयस्कान्तमणिवत्
क्षणादन्तःशल्यं तपति पतिरद्यापि न रुचाम् ॥ ४ ॥

श्रीमुरारेः ।

भिन्दानो मानिनीनां पतिषु रुषमयं हर्म्यपारावतेभ्यो
वाचालत्वं ददानः कवितृषु कविताप्रातिभं सन्दधानः ।
प्रातस्त्यस्तूर्यनादः स्थगयति गगनं मांसलः पांसुतल्पा-
दस्वल्पादुत्थितानां नरवरकरिणां शृङ्खलाशिञ्जितेन ॥ ५ ॥

राजशेखरस्य ।

ये कुण्ठीकृतवल्लभप्रणतयः शस्त्रैरनङ्गस्य ये
न प्राप्ताश्च निशीथिनीपतिकरैः शैथिल्यवीथीमपि ।
ते निश्शङ्कविटङ्कतालुतुमुलप्लोतप्लुतप्लाविते-
छिन्नाः कुक्कुटकूजितैर्मृगदृशां मानग्रहग्रन्थयः ॥ ६ ॥

बिल्हणस्य ।

उत्थायोन्नतवासयष्टिशिखरे विस्तारिताकुञ्चितं
बिभ्रत्पादमुदस्तकेसरसटः किञ्चिद्विनिद्रेक्षणः ।
दूरादञ्चितकन्धरः श्रमवशाद्वयाधूय पक्षद्वयं
मानम्लानिकरः कुरङ्गकदृशां कोकूयते कुक्कुटः ॥ ७ ॥

कस्यापि ।

चिरतररतखेदप्राप्तनिद्रासुखानां
चरममपि शयित्वा पूर्वमेव प्रबुद्धाः ।
अपरिचलितगात्राः कुर्वते न प्रियाणा-
मशिथिलभुजचक्राश्लेषभेदं तरुण्यः ॥ ८ ॥

अधिरजनिमुखे यः सान्द्रलाक्षानुरागै-
र्व्यतिकरित इवोच्चैःपाटलत्वं दधानः ।
उषसि स खलु दीपः पाननिर्धूतराग[ः]
स्फुरदधर इवायं धूसरत्वं बिभर्ति ॥ ९ ॥

माघस्य ।

आद्ये जग्मुषि ताम्रचूडरटिते श्रोत्रं प्रबुद्धा जवात्
किंचिद्भासवदिङ्मुखं प्रविकसद्दृष्ट्वा गवाक्षाध्वना ।
सन्त्रासेन समीरिता प्रियतमप्रेम्णा च रुद्धा शनै-
रुत्थानोपनिवेशनानि कुरुते तल्पे मुहुः पांसुला ॥ १० ॥

निर्यान्त्या रतिवेश्मनः परिणतप्रायां विलोक्य क्षपां
गाढालिङ्गनचुम्बनानि बहुशः कृत्वाऽप्यसन्तुष्टया ।
एकं भूमितले निधाय चरणं तल्पे प्रकल्प्यापरं
तन्वङ्ग्या परिवर्तिताङ्गलतया प्रेयांश्चिरं चुम्बितः ॥ ११ ॥

कयोरप्येतौ ।

इतः शोचिः प्राच्यां दिशि दिशति भानोररुणता-
मितो भृङ्गः कूजन्नभिकमलिनीं प्रोच्चलति च ।
इतो निर्यान्त्युच्चैर्विहितसुरतक्लान्तिशिथिल-
स्खलत्पादन्यासक्षणरणितमञ्जीरमबलाः ॥ १२ ॥

श्रीमुरारेः ।

प्रियवसतेरपयान्त्यो मिथः करम्बितकराम्बुजन्मानः ।
करजव्रणपदविरलस्तनपुलकममूः किमपि विवदन्ते ॥ १३ ॥

तत्रै (स्यै?) व ।

प्रालेयांशुरितश्चकोरविपदामार्द्रप्ररोहैर्जरत्-
काश्मीरीवदनादनाकुलतया दौर्भाग्यमभ्यस्यति ।
भासां भर्तुरितश्च कोकसुकृतैरुज्जीविकां बिभ्रति
द्वित्राः कुङ्कुमकेसरैकसुहृदो मन्दं मयूखाङ्कुराः ॥ १४ ॥

अपयान्तीनामधुना सङ्केतनिकेतनान्मृगाक्षीणाम् ।
वासस एव न केवलमभवन्मनसोऽपि परिवर्तः ॥ १५ ॥

मदनस्यैतौ ।

चन्दनं स्तनतटेऽधरबिम्बे यावकं घनतरं च सपत्न्याः ।
प्रातरीक्ष्य कुपिताऽपि कामिनी सागसि प्रियतमे परितुष्टा ॥ १६ ॥

लाक्षालक्ष्म ललाटपट्टमभितः केयूरमुद्रा गले
वक्त्रे कज्जलकालिमा नयनयोस्ताम्बूलरागोऽपरः ।
दृष्ट्वा कोपविधायि मण्डनमिदं प्रातश्चिरं प्रेयसो
लीलातामरसोदरे मृगदृशः श्वासाः समाप्तिं गताः ॥ १७ ॥

अमरुकस्य ।

स्तोकारक्तनखव्रणा स्तनतटी क्वापि स्खलच्चन्दनं
वक्षः कर्बुरिताञ्जने च नयने विश्रान्तरागोऽधरः ।
आयासोदयमन्थरं च गमनं प्रातः प्रभङ्गालसं
जीयादङ्गमनङ्गसङ्गरपरिच्छेदे कुरङ्गीदृशः ॥ १८ ॥

उमापतिधरस्य ।

प्रयातवति यामिनीरमणचन्द्रिकापाथसि
　प्रशान्तमिव भासते सरसकर्दमाभं नभः ।
प्रवेष्टुमिह शङ्कितैरिव रवेस्तुरङ्गैर्धृतः
　क्षणं त्यजति नोदयाचलविटङ्कवीथीं रथः ॥ १९ ॥

लुठत्यपरवारिधौ कमठनिर्विशेषः शशी
　प्ररूढमुदयाचले चुलकमात्रमुष्णं महः ।
क्षणं गगनवेदिकामिदमनङ्कुशं गाहते
　कलिन्दगिरिकन्यकातटतमालनीलं तमः ॥ २० ॥

बिल्हणस्यैतौ ।

व्रजत्यपरवारिधिं रजतपिण्डपाण्डुः शशी
　नमन्ति जलबुद्बुदद्युतिसपङ्क्तयस्तारकाः ।
कुरण्डकविपाण्डुरं दधति धाम दीपाङ्कुर-
　श्चकोरनयनारुणा भवति दिक् च सौत्रामणी ॥ २१ ॥

राजशेखरस्य ।

उत्फालं हेलयैव द्रुतमभिपततः पूर्वपृथ्वीधराग्रा-
　दुच्चैरर्चिश्चपेटाहतिभिरिव हरेर्ध्वान्तदन्ती विदीर्णः ।
रक्ताः कुम्भैर्विमुक्ता इव सकलदृशां विस्मयं सन्दधानाः
　सन्ध्याशोणत्विषस्ताः सपदि निपतितास्तारकास्ताः समस्ताः ॥ २२ ॥

नाचिराजस्य ।

निजांशुकावृतां प्राचीं चुम्बत्यर्केऽतिरागिणि ।
लज्जयेव ययौ क्वापि श्यामा मीलिततारका ॥ २३ ॥

कविदर्पणराघवस्य ।

आसीस्त्वं निशिराजरक्तहृदयेतीर्ष्यालुना वज्रिणा
　प्रातः शङ्कितयेव दिव्यपदवीं गत्वाऽऽत्मनः शुद्धये ।
और्वोत्तापितवार्धितापकतलादादाय मुक्तो बहिः
　प्राच्याऽसौ दिवि तप्तमाषक इव प्रद्योतनो द्योतते ॥ २४ ॥

कस्यापि ।

चरमगिरिकुरङ्गीशृङ्गकण्डूयनेन
स्वपिति सुखमिदानीमन्तरिन्दोः कुरङ्गः।
परिणतरविगर्भव्याकुला पौरुहूती
दिगपि घनकपोतीहुंकृतैः क्रन्दतीव ॥ २५ ॥

चञ्चत्काञ्चनकान्तिभिर्जलजिनीजीवेश्वरज्योतिषा-
मोघैर्माघवती ककुप् कपिलतामालम्बते संप्रति।
यामुद्वीक्ष्य गवाक्षवर्त्मनि मनाङ्मानान्तशान्तज्वराः
कामिन्यः कुचकुम्भसीम्नि दयितान् गाढग्रहं गृह्णते ॥ २६ ॥

प्रत्यग्रज्वलितैः पतङ्गमणिभिर्नीराजिता भानवः
सावित्राः कुरुविन्दकन्दलरुचः प्राचीमलङ्कुर्वते।
प्रौढध्वान्तकरालितस्य वपुषश्छायाच्छलेन क्षणा-
दप्रक्षालितनिर्मलं जगदहो निर्मोकमुन्मुञ्चति ॥ २७ ॥

पीत्वा भृशं कमलकुड्मलशुक्तिकोशात्
दोषातनीं तिमिरवृष्टिमथ स्फुटन्तः।
निर्यन्मधुव्रतकदम्बमिषाद्वमन्ति
बिभ्रन्ति कारणगुणानिव मौक्तिकानि ॥ २८ ॥

विकसितसंकुचितपुनर्विकस्वरेष्वम्बुजेषु दुर्लक्षाम्।
कलिकां कथयति नूतनविकासिनीं मधुलिहामर्घः ॥ २९ ॥

एते मुरारेः।

यद्रात्रौ रहसि व्यपेतविनयं वृत्तं रहः कामिनो-
रन्योन्यं शयनीयमीहितरसावाप्तिप्रवृत्तस्पृहम्।
तत्सानन्दमिलद्दृशोः कथमपि स्मृत्वा गुरूणां पुरो
हासोद्भेदनिरोधमन्थरमिलत्तारं कथञ्चित्स्थितम् ॥ ३० ॥

अमरुकस्य।

यद्गुप्तं गदितं रतिप्रणयतो रात्रौ विलोलभ्रुवा
तत्संस्मारयति प्रिये स्मरमयं प्रातः प्रतिच्छन्दकैः ।
लोलाक्ष्या स्मितधौतगण्डफलके पत्रावलीतूलिका-
व्यापारैर्विनिवारणाक्षरभराकारा विकीर्णा दृशः ॥ ३१ ॥

भट्टवामनस्य ।

नक्तं निरङ्कुशतया कुशसूचिभेद्यो
यः सर्वतस्त्रिभुवनेऽपि ममौ कथञ्चित् ।
भाति स्म सोऽपि दृशि घूकविहङ्गमस्य
भानोर्भयाज्झटिति सङ्कुचितोऽन्धकारः ॥ ३२ ॥

अरसिठक्कुरस्य ।

॥ इति श्रीभगदत्तजल्हणविरचितायां सूक्तिमुक्तावल्यां प्रभातवर्णनपद्धतिः ॥

# प्रभातवायवः ( ८३ )



रामाणां रमणीयवक्त्रशशिनः स्वेदोदबिन्दुप्लुत-
व्यालोलालकमञ्जरीः प्रचलयन्धून्वन्नितम्बांशुकम् ।
प्रातर्वाति नवातिकृष्टविकसद्राजीवराजीरजः-
पुञ्जामोदमनोहरो रतिरसग्लानिं हरन्मारुतः ॥ १ ॥

कस्यापि ।

विकचकमलगन्धैरन्धयन् भृङ्गमालाः कबलितमकरन्दं मन्दमावाति वायुः ।
प्रमदमदनमाद्यद्यौवनोद्दामरामारमणरभसखेदस्वेदविच्छेददक्षः ॥ २ ॥

माघस्य ।

अङ्गैरनङ्गसमरश्रमगुद्वहद्भिः संप्रार्थितोऽप्यनुसरन् सरलः समीरः ।
निन्दापदं भवति संप्रति सुन्दरीणामम्भोजगन्धकथितक्षणदावसानः ॥ ३ ॥

कृष्णपिल्लस्य ।

प्रातः सीमन्तिनीनां निधुवनलुलितान् लासयन् केशपाशा-
नुन्मीलत्पङ्कजान्तःपरिमलसुरभिः स्फारयन् कामलीलाः ।
स्वच्छावश्यायबिन्दून्दिशि दिशि विकिरन् स्थूलमुक्ताफलाभान्
धूलीभिः केतकीनां धवलितभुवनो वाति मन्दं नभस्वान् ॥ ४ ॥

मनसि निविशते स कोऽपि तापः प्रणयिनि बाहुलतान्तरस्थितेऽपि ।
सकमलमकरन्दगन्धबन्धुर्वहति यदेष शनैः शनैः समीरः ॥ ५ ॥

॥ इति श्रीभगदत्तजल्हणविरचितायां सूक्तिमुक्तावल्यां प्रभातवातवर्णनपद्धतिः ॥



# कलहान्तरिताप्रलापाः ( ८४ )



गते[1] प्रेमाबन्धे प्रणयबहुमाने विगलिते
　निवृत्ते सद्भावे जन इव जने गच्छति पुरः ।
तदुत्प्रेक्ष्योत्प्रेक्ष्य प्रियसखि गतांस्तांश्च दिवसा-
　न्न जाने को हेतुर्दलति शतधा यन्न हृदयम् ॥ १ ॥

कथमपि सखि क्रीडाकोपाद्व्रजेति मयोदिते
　कठिनहृदयस्त्यक्त्वा शय्यां बलाद्गत एव सः ।
इति सरभसध्वस्तप्रेम्णि व्यपेतघृणे स्पृहां
　पुनरपि हतव्रीडं चेतः करोति करोमि किम् ॥ २ ॥

इदं कृष्णं कृष्णं प्रियतम ननु श्वेतमथ किं
　गमिष्यामो यामो भवतु[2] भवने नाथ भवतु ।
पुरा येनैवं मे चिरमनुसृता चित्तपदवी
　स एवान्यो जातः सखि परिचिताः कस्य पुरुषाः ॥ ३ ॥

अमरुकस्यैते ।

मया तावद्गोत्रस्खलितहतकोपान्तरितया
　न रुद्धो निर्गच्छन्नयमतिविलक्षः प्रियतमः ।
अयं त्वाँकूतज्ञः[3] परिणतिपरामर्शकुशलः
　सखीलोकोऽप्यासील्लिखित इव चित्रेण किमिदम् ॥ ४ ॥

पदोपान्ते कान्ते लुठति तमनादृत्य भवना-
　न्मया निष्क्रामन्त्या सखि किमपि नालोचितमभूत् ।
अयं श्रोणीभारः स्तनयुगमिमौ निर्भरगुरू
　तदानीमेताभ्यां कथमिव विलम्बो न विहितः ॥ ५ ॥

---

१ वेद्ये, क. पाठभेदः, २ गमने. क, ख, घ. ३, चा. क. पाठभेदः ।

मानोन्नतेत्यसहनेत्यतिपण्डितेति
मय्येव धिक्कृतिरनेकमुखी सखीनाम् ।
दाक्षिण्यमात्रमसृणेन विचेष्टितेन
धूर्तस्य तस्य हि गुणानुपवर्णयन्ति ॥ ६ ॥

कोपो यत्र भ्रुकुटिरचना निग्रहो यत्र मौनं
यत्रान्योन्यस्मितमनुनयो दृष्टिपातः प्रसादः ।
तस्य प्रेम्णस्तदिदमधुना वैशसं पश्य जातं
त्वं पादान्ते लुठसि न च मे मन्युमोक्षः खलायाः ॥ ७ ॥

केषामप्येते ।

इति श्रीभगदत्तजल्हणविरचितायां सूक्तिमुक्तावल्यां कलहान्तरिता प्रलापपद्धतिः ॥

---

# नायकाशिक्षा ( ८५ )



सालक्तकेन नवपल्लवकोमलेन
　पादेन नूपुरवता मदलालसेन ।
यस्ताड्यते दयितया प्रणयार्त्तकोपा-
　न्नोपेक्षितो भगवता मकरध्वजेन ॥ १ ॥

अमरुकस्य ।

कोपात् किंचिदुपानतोऽपि रभसादाकृष्य केशेष्वलं
　नीत्वा मोहनमन्दिरं दयितया हारेण बध्वा दृढम् ।
भूयो यास्यसि तद्गृहानिति मुहुः कण्ठार्धरुद्धाक्षरं
　जल्पन्त्या श्रवणोत्पलेन सुकृती कश्चिद्गृहस्ताड्यते ॥ २ ॥

रुद्रस्य ।

कोपात् कोमललोलबाहुलतिकापाशेन बध्वा दृढं
　नीत्वा मोहनमन्दिरं दयितया स्वैरं सखीनां पुरः ।
भूयो नैवमिति स्खलन्मृदुगिरा संसूच्य दुश्चेष्टितं
　धन्यो हन्यत एव निह्नुतिपरः प्रेयान् रुदन्त्या हसन् ॥ ३ ॥

अमरुकस्य ।

सा बाढं भवतेक्षितेति निबिडं संयम्य बाह्वोः स्रजा
　भूयो द्रक्ष्यसि तां शठेति निबिडं सन्तर्ज्य सन्तर्ज्य च ।
आलीनां पुर एव निह्नुतिपरः कोपाद्रणन्नूपुरं
　मानिन्या चरणप्रहारविधिना प्रेयानशोकीकृतः ॥ ४ ॥

( रुद्रस्य ) ।

पादे मूर्धनि ताम्रतामुपगते कर्णोत्पले चूर्णिते
　छिन्ने हारलतागुणे करतले संपातजातव्रणे ।
अप्राप्तप्रियताडनव्यतिकरा हन्तुं पुरश्चेतसा
　वाञ्छन्ती मुहुरेणशावनयना पर्याकुला रोदिति ॥ ५ ॥

कस्यापि ।

१. पराधात्. २ सोऽङ्गीकृ. ३. स्कल क. पाठभेदाः

अधिरजनि जगाम धाम तस्याः
प्रियतमयेति रुषा स्रजाऽवबद्धः।
पदमपि चलितुं युवा न सेहे
किमिव न शक्तिहरं ससाध्वसानाम् ॥ ६ ॥

करजदशनचिह्नं नैशमङ्केऽन्यनारी–
जनितमिति सरोषामीर्ष्यया शङ्कमानाम्।
स्मरसि न खलु दत्तं मत्तयैतत्त्वयैव
स्त्रियमनुनयतीत्थं व्रीडमानां विलासी ॥ ७ ॥

माघस्यैतौ।

॥ इति श्रीमदारोहकभगदत्तजल्हणविरचितायां सूक्तिमुक्तावल्यां नायकशिक्षापद्धतिः ॥

# सम्भोगाविष्करणम् ( ८६ )



दर्पणेषु परिभोगदर्शिनी पृष्ठतः प्रणयिनो निषेदुषः ।
वीक्ष्य बिम्बमनुबिम्बमात्मनः कानि कानि न चकार लज्जया ॥ १ ॥

कालिदासस्य ।

ताडीदलं काचन कर्णपाशे निवेशयन्ती सुतनुः कराभ्याम् ।
रराज कर्णान्तविसर्पिदृष्टिः शाणे ददानेव कटाक्षबाणान् ॥ २ ॥

बिल्हणस्य ।

यावद्यावत्कुवलयदृशा मृज्यते दन्तपाली
तावत्तावद्द्विगुणमधरच्छायया शोणरोचिः ।
प्रत्यासन्नप्रियसहचरीदर्शितादर्शभित्तौ
दर्शं दर्शं न विरमयते पाणिमद्यापि बाला ॥ ३ ॥

कस्यापि ।

एकावलीकलितमौक्तिककैतवेन कस्याश्चिदुन्नतपयोधरयुग्मसेवाम् ।
चक्रुर्मनांसि यमिनामतिनिर्मलानि कन्दर्पमुक्तशरपातकृतान्तराणि ॥ ४ ॥

न्यस्तानि शङ्खवलयानि करे कयाचित् तानीन्दुखण्डघटितानि ममैष तर्कः ।
अस्या निसर्गमृदुपाणिसरोजमेषामामोचने झटिति यन्मुकुलीबभूव ॥ ५ ॥

हारेण च स्तनयुगं परिवृत्य पीन-
मत्यायतं च जघनं रशनागुणेन ।
मध्यस्य मण्डनविधिं न चकार काचि-
द्रिक्तः सनाभिरपि नैव हि माननीयः ॥ ६ ॥

लाक्षां विधातुमवलम्बितमात्रमेव
सख्याः करेण तरुणाम्बुजकोमलेन ।
कस्याश्चिदग्रपदमाशु बभूव रक्तं
लाक्षारसः पुनरभूत् पुनरुक्तदूष्यः ॥ ७ ॥

अर्काभिमुख्यसलिलस्थितिसाधनानि
रक्ताम्बुजस्य फलितान्यधुना तपांसि।
यद्गौरु तस्य परिभूतिकरं पदं त्वं
लाक्षारसाङ्कुरितरागमिमं करोषि ॥ ८ ॥

यानि द्रवन्ति विरहे विदलन्ति यानि
योगे हरेण सखि किं वलयैः फलं ते।
नैवास्ति यैर्विपदि सम्पदि चोपयोग-
स्तैः सङ्गमं न खलु वाञ्छति कोऽपि मर्त्यः ॥ ९ ॥

षडेते उत्प्रेक्षावल्लभस्य।

मुग्धा त्वं सुभगे न वेत्सि मदनव्यापारमध्यापितं
नूनं पद्मदलैषिणाऽयमलिना दष्टो न भर्त्राऽधरः।
सख्येदं हसितं वधूं प्रति तदा सानन्दमाविर्भव-
द्वक्त्रान्तर्घनशीधुगन्धरसिकैर्भृङ्गैर्यदा गुञ्जितम् ॥ १० ॥

कस्यापि।

अहं तेनाहूता किमपि कथयामीति विजने
समीपे चासीना सरलहृदयत्वादवहिता।
ततः कर्णोपान्ते किमपि वदताऽऽघ्राय वदनं
गृहीत्वा धम्मिल्ले मम सखि निपीतोऽधररसः ॥ ११ ॥

अमरुकस्य।

सख्यस्तानि वचांसि यानि बहुशोऽधीतानि युष्मन्मुखा-
द्वक्ष्येऽहं बहुशिक्षिता क्षणमपि ध्यात्वाऽस्मि मौनं गता।
धूर्तेनैव च मण्डलीकृतकुचं गाढं परिष्वज्य मां
पीतान्येव सहाधरेण सहसा वक्त्रस्थितान्येव मे ॥ १२ ॥

जीवनागस्य।

अयमेकोऽहमेकेति ज्ञानं तत्सङ्गमे न मे।
राग एवाधिकस्तत्र हरिद्राचूर्णयोरिव ॥ १३ ॥

१ स च सखि मया गाढमधरे क. ख. च

मा गर्वमुद्वह कपोलतले चकास्ति
कान्तस्वहस्तलिखिता मम मञ्जरीति।
अन्यापि किं न सखि भाजनमीदृशानां
वैरी न चेद्भवति वेपथुरन्तरायः॥ १४॥

कयोरप्येतौ।

धन्याऽसि या कथयसि प्रियसङ्गमेऽपि
नर्मोक्तिचाटुकशतानि रतान्तरेषु।
नीवीं प्रति प्रणिहिते तु करे प्रियेण
सख्यः शपामि यदि किञ्चिदिह स्मरामि॥ १५॥

विज्जाकायाः।

पादन्यासं कृतवति बहिः श्रोत्रयोरस्मि लीना
प्राप्ते दृष्टिप्रसरपदवीं दृष्टिरेवाहमासम्।
तल्पान्तस्थे हसितपुलकस्वेदकम्पाकुलाङ्गी
संजाताऽहं तदनु सखि मे विप्रलुप्तो विवेकः॥ १६॥

कस्यापि।

कान्ते तल्पमुपागते विगलिता नीवी स्वयं बन्धनात्
वासश्च श्लथमेखलागुणधृतं किंचिन्नितम्बे स्थितम्।
एतावत् सखि वेद्मि केवलमहं तस्याङ्गसङ्गे पुनः
कोऽसौ काऽस्मि रतं च किं कथमिति स्वल्पाऽपि मे न स्मृतिः॥१७॥

कस्यापि।

कान्ते सागसि यापिते प्रियसखीवेषं विधायागते
भ्रान्त्याऽऽलिङ्ग्य मया रहस्यमुदितं तत्सङ्गमाकाङ्क्षया।
मुग्धे दुष्करमेतदित्यतितरामुक्त्वा सहासं बला-
दालिङ्ग्य च्छलिताऽस्मि तेन कितवेनाद्य प्रदोषागमे। १८॥

सुप्तोऽयं सखि सुप्यतामिति गताः सख्यस्ततोऽनन्तरं
प्रेमावेशितया मया तरलया न्यस्तं मुखं तन्मुखे।
ज्ञातेऽलीकनिमीलने नयनयोर्धूर्तस्य रोमाञ्चतो
लज्जाऽऽसीन्मम तेन साऽप्यपहृता तत्कालयोग्यैः क्रमैः॥ १९॥

अमरुकस्यैतौ।

॥ इति श्रीभगदत्तजल्हणविरचितायां सूक्तिमुक्तावल्यां संभोगाविष्करणपद्धतिः॥

---

# कुलटापद्धतिः ( ८७ )



उच्छ्वासः खण्डखण्डस्तरलितहृदये मूकता भूषणाना-
मुक्तिप्रत्युक्तिबन्धोऽप्यभिनयविहितः पांसुला भूस्तुशय्या ।
तूष्णीमेव प्रसादानुनयनकलहाश्चुम्बनं शब्दशून्यं
यत्रैतत् स्वस्ति तस्मै निभृतनिधुवनायेति नान्दी नमोऽस्तु ॥ १ ॥

अये को जानीते निजपुरुषसङ्गे हि न तथा
यथा चेतस्त्रीणां परपुरुषसङ्गे रमयते ।
अपि स्वैरं भुक्ता दिवसमखिलं वासरकृता
करस्पर्शादिन्दोर्मुकुलयति नेत्राणि नलिनी ॥ २ ॥

देवराजस्य ।

भ्रूभेदैः कतिचिद्गिरा कुटिलया काश्चित्कियत्यः स्मितैः
स्वैरिण्यः प्रथयन्ति मन्मथशरव्यापारवश्यं मनः ।
कासांचित्पुनरङ्गकेषु मसृणच्छायेषु गर्भस्थितो
भावः काचपुटेषु पुष्करमिव प्रव्यक्तमालोक्यते ॥ ३ ॥

अभिनन्दनस्य ।

अये कोऽयं वृद्धो गृहपरिवृढः किं तव पिता
न मे भर्ता किन्तु व्यपगतदृगन्यश्च बधिरः ।
हुहुं श्रान्तोऽद्याहं शिशयिषुरिहैवापवरके
क्व यामिन्यां यामि स्वपिमि ननु निर्दंशमशके ॥ ४ ॥

श्रीभोजदेवस्य ।

शून्यं वेश्म चिराद्गतो गृहपतिर्जाताऽधुना शर्वरी
स्थातुं नोचितमत्र गच्छ निपुणं लोकैरनालोकितः ।
इत्थं लोलदृशा ह्यसावभिहितो दासीमुखेनाध्वगः
स्मित्वा किञ्चिदिव क्व यामि रजनी यातेत्युदीर्य स्थितः ॥ ५ ॥

कस्यापि ।

१. त. क. पाठभेदः ।

आकारैर्न विदन्ति व[क्र]फणितीर्बोद्धुं न मेधाविन-
　शब्दाख्येयनिजाशयं कुलवधूवर्गस्य नैतद्व्रतम् ।
ग्रामेऽस्मिन् ऋजुवाच्यवाचकहतात्मानो युवानो जडा-
　स्तत्त्वज्ञोपगताध्वगावधिरयं कामज्वरः सह्यताम् ॥ ६ ॥

हरिहरस्य।

दृष्टिं हे प्रतिवेशिनि क्षणमिहाप्यस्मद्गृहे दास्यसि
　प्रायेणास्य शिशोः पिता न विरसाः कौपीरपः पास्यति ।
एकाकिन्यपि यामि तद्वनमितः स्रोतस्तमालाकुलं
　नीरन्ध्रास्तनुमालिखन्तु जरठच्छेदा नलग्रन्थयः ॥ ७ ॥

विज्जाकायाः ।

एषां गोपवधूविलाससुहृदां राधारहस्साक्षिणां
　भद्रं भद्रकलिन्दशैलतनयातीरे लताशाखिनाम् ।
विच्छिन्ने स्मरतल्पकल्पनविधिच्छेदाय योगेऽधुना
　ते जाने जरठीभवन्ति विलसन्नीलत्विषः पल्लवैः ॥ ८ ॥

कस्यापि ।

यः कौमारहरः स एव हि वरस्ताश्चन्द्रगर्भा निशाः
　प्रोन्मीलन्नवमालतीसुरभयः प्रौढाः कदम्बानिलाः ।
सा चैवास्मि तथाऽपि चौर्यसुरतव्यापारलीलाविधौ
　रेवारोधसि वेतसीतरुतले चेतः समुत्कण्ठते ॥ ९ ॥

शिलाभट्टारिकायाः ।

व्यपेतव्याहारं गतविविधशिल्पव्यतिकरं
　करस्पर्शारम्भे विगलितदुकूलान्तवसनम् ।
मुहुर्बद्धोत्कम्पं दिशि दिशि मुहुः प्रेक्षितदृशो-
　रहल्यासुत्राम्णोः क्षणिकमिव तत्सङ्गतमभूत् ॥ १० ॥

कस्यापि ।

१, सत्वरमिति शार्ङ्गधरीयः पाठः ।

एकाकिनी यदबला तरुणी तथाऽह-
मस्मिन् गृहे गृहपतिश्च गतो विदेशम् ।
कं याचसे तदिह वासमियं वराकी
श्वश्रूर्ममान्धबधिरा ननु मूढ पान्थ ॥ ११ ॥

अम्बा शेतेऽत्र वृद्धा परिणतवयसामग्रणीरत्र तातो
निश्शेषागारकर्मश्रमशिथिलतनुः कुम्भदासी तथाऽत्र ।
अस्मिन् पापाऽहमेका कतिपयदिवसप्रोषितप्राणनाथा
पान्थायेत्थं तरुण्या कथितमवसरव्याहृतिव्याजपूर्वम् ॥ १२ ॥

रुद्रस्यैतौ ।

॥ इति श्रीभगदत्तजल्हणविरचितायां सूक्तिमुक्तावल्यां कुलटापद्धतिः ॥

# सङ्कीर्णपद्धतिः ॥ ( ८८ )



नखपदशबलेषु कामिनीनां पृथुलतरेषु नितम्बमण्डलेषु ।
पुलकितमनसां जयन्ति यूनां नयनसरोजगतागतानि तानि ॥ १ ॥

नाथकुमारस्य ।

लक्ष्मीश्चामरभासिनी परिचयस्मेरा सुहृत्सङ्कथा
रूपं पुष्पशरोपमं [रतिपतेर्लीलो]पमं यौवनम् ।
पार्श्वे जीवितजीवितं प्रियतमाः श्यामाः शशाङ्काङ्किता
गेयं श्रोत्ररसायनं सुकृतिनां सम्पूर्णपुण्योत्सवः ॥ २ ॥

कुलाभिमाने विभवो विभवेऽभिनवं वयः ।
यौवनेऽभिमता कान्ता भोगोऽयं भाग्यसम्पदाम् ॥ ३ ॥

उद्यानं कौमुदी गीतं कान्ता केलिः सुहृत्कथा ।
कृतिनां सुकृतक्रीतः स्वर्गभोगो भुवि स्थितः ॥ ४ ॥

क्षेमेन्द्रस्यैतौ ।

अस्माकं सखि वाससी न रुचिरे ग्रैवेयकं नोज्ज्वलं
नो वक्रा गतिरुद्धतं न हसितं नैवास्ति कश्चिन्मदः ।
किन्त्वन्येऽपि जना वदन्ति सुभगो ह्यस्याः पतिर्नान्यतो
दृष्टिं पातयतीति विश्वमियता मन्यामहे दुस्थितम् ॥ ५ ॥

रुद्रस्य ।

मधु च विकसितोत्पलावतंसं शशिकरपल्लवितं च हर्म्यपृष्ठम् ।
मदनजनितविभ्रमा च कान्ता फलमिदमर्थवतां विभूतयोऽन्याः ॥ ६ ॥

भर्तृमेण्ठस्य ।

प्रतिरजनि प्रतिदिवसं बहिरबहिश्चण्डि डिण्डिमं दत्वा ।
काणवधूदृग्वलितैर्विश्वं पुनराकुलीभूतम् ॥ ७ ॥

---

१. परि चितं. तीरो. क. ख. च. परि चितं लीलो. ग. घ. २. लो वसन्तः क. पाठभेदः ।

कोपं संवृणु कोपनेऽश्रुसलिलैर्धौताञ्जने किं दृशौ
किं कोपादलकावली विलुलिता स्विन्नाऽसि किं मन्युना।
कर्णोत्तंसितपद्मरागशकलप्रत्यर्पितश्शोणिमा
फालेऽस्मिन् सुभगस्य नान्यवनितापादाम्बुजालक्तकः ॥ ८ ॥

हरिहरस्यैतौ।

संसारः प्रतिभाति येन सरसः सर्वाण्यहानि क्षणा-
यन्ते जीवितयौवने सफलतां दत्तः सरूपश्रिणी।
चन्द्रोद्यानवसन्तकोकिलकुहूलापादिकानामुपा-
देयत्वं कुरुते च यद्विजयते तत् प्रेम यूनोश्चिरम् ॥ ९ ॥

श्रीभीमसिंहपण्डितस्य।

नमस्यं तत्सखीप्रेम घण्टारणितसोदरम्।
क्रमकृशिमनिःसारमारम्भगुरुडम्बरम् ॥ १० ॥

दम्पत्योः पाक्षिकात्प्रेम्णः प्रेमाभावः सुखावहः।
एककर्णस्थताटङ्कादताटङ्कं वरं मुखम् ॥ ११ ॥

कयोरप्येतौ।

अन्यमुखे दुर्वादो यः[1] प्रियवदने स एव परिहासः।
इतरेन्धनजन्मा यो धूमः सोऽगरुभवो धूपः ॥ १२ ॥

गोवर्धनाचार्यस्य।

नद्या इव प्रवाहो विषमशिलासङ्कटस्खलितः।
विघ्नितसमागमसुखो मनसिशयः शतगुणी भवति ॥ १३ ॥

कालिदासस्य।

स्वादूनां प्रथमाय रूपविभवं मिथ्या मिथस्तन्वते
प्रेम्णे स्वस्ति मनोभवैकसुहृदे यस्य प्रसादादिह।
दम्पत्योरनपेक्षितप्रियसखीचित्रप्रकारोक्तयो
जायन्ते प्रहरान्तरेऽपि शतशः कोपप्रसादादयः ॥ १४ ॥

राजशेखरस्य।

१ प्रियतम. क, पाठभेदः।

तारुण्यातिशयः स कोऽपि विकसत्सौन्दर्यमुद्राङ्कित-
श्चातुर्यं नवभङ्गिसङ्गि तदहो यस्यां समुज्जृम्भते ।
एकाऽप्यस्ति किमीदृशीन्दुवदना सोऽप्यस्ति किं यत्कृते
सास्रं शुष्यति मुह्यति प्रलपति प्रेम्णा तदप्यद्भुतम् ॥ १५ ॥

श्रीवैद्यभानुपण्डितस्य ।

यत्पराधीनयोः प्रेम दैवात् किमपि जायते ।
तत्रानुत्सृज्य लज्जां वा जीवितं वा कुतः सुखम् ॥ १६ ॥
यत्रावकाशलेशोऽस्ति नोपचारविचारयोः ।
तद्ध्यानं प्रेम चाशेषदुःखहृद्योगिभोगिनोः ॥ १७ ॥

प्रज्ञानन्दस्य ।

अवचनं वचनं प्रियसन्निधावनवलोकनमेव विलोकनम् ।
अवयवावरणं च यदंशुकव्यतिकरेण तदङ्गसमर्पणम् ॥ १८ ॥

स्त्रीमुद्रां मकरध्वजस्य परमां सर्वार्थसम्पत्करी-
मेनां ये प्रविहाय यान्ति कुधियः स्वर्गापवर्गेच्छया ।
तद्दोषैर्विनिहत्य ते द्रुततरं नग्नीकृता मुण्डिताः
केचिद्रक्तपटीकृताश्च जटिलाः कापालिकाश्चापरे ॥ १९ ॥

एको बाणः स्फुरति वलितालोकनं कामिनीनां
कामस्यान्यो मलयपवनः कामिनां मर्मभेदी ।
वीणावेणुक्वणितमपरश्चूतपुष्पं तुरीयः
सर्वोत्कण्ठप्रथमसचिवः पञ्चमः पञ्चमोऽपि ॥ २० ॥

केषामप्येते ।

इति श्रीमदारोहकभगदत्तजल्हणदेवविरचितायां सूक्तिमुक्तावल्यां सङ्कीर्णपद्धतिः ॥



# हासपद्धतिः (८९)

मातस्तातस्य मौलौ निवसति किमिदं पुत्र शीतांशुलेखा
फाले किं नेत्रमेतज्ज्वलितशिखिशिखं किं गले कालकूटः।
नाभेर्मूले किमेतत्तदिति तनयजां भारतीं भावयित्वा
तिर्यग्व्यामीलिताक्षी करपिहितमुखी पार्वती वः पुनातु ॥ १ ॥

॥ कस्यापि ॥

गत्वा द्वारवतीं नयामि दिवसानाराधयन्ती हरिं
दृष्ट्वा चाऽनशनेन जीवितमिदं मुञ्चामि भागीरथीम्।
प्रातः प्रातरितिप्रवर्तितकथा निर्वेदमातन्वती
रण्डा नक्तमनन्तनिर्भररतप्रीता सुखायास्तु वः ॥ २ ॥

ऋज्वी दृष्टिरनुल्बणं विहसितं मन्दं परिस्पन्दितं
द्वेषो नर्मणि दूरतीर्थगमने यत्नो रतिर्लिङ्गिषु।
यस्यास्त्यक्तसुखस्पृहं किल वपुः पीनाल्पलम्बस्तनी
सक्षीरा विटचेटकैकमहिषी रण्डा शिवायास्तु वः ॥ ३ ॥

॥ हरगणस्य ॥

लभ्यान्यङ्गविलेपनानि सुलभास्ताम्बूलसम्पत्तयः
कल्प्यन्ते च मृदूनि चीनवसनान्यभ्येति काऽपि द्युतिः।
किं चोच्चैर्घटते विमर्दसुलभः संभोगलीलारसो
रण्डा वित्तवतीति हन्त महतः पुण्यस्य पाकक्रमः ॥ ४ ॥

अभ्यस्तेऽपि[3] हि नाम वस्तुनि चिरादज्ञानसंभावनं
शौचाशौचविवादिता विशकलस्मृत्यक्षरावर्तनम्।
वारं वारमृणोपघातकथनं कोऽप्येष डम्भात्मनां
प्रायो दग्धदुरीशवञ्चनविधौ जागर्त्यपूर्वः क्रमः ॥ ५ ॥

१. न. २. त्यक्ष्यामि क. पाठभेदौ ३. प्यभिराम. क. पाठभेदः

भ्रातस्तर्क कदर्थितोऽसि कविते याताऽसि दीनां दशां
मीमांसे सखि वञ्चिताऽसि सुहृदो वेदाः कुतः शर्म वः ।
धूर्तैर्निःस्पृहतामिषेण भवतामाधाय मौलौ पदं
हृत्वा वित्तवतां धनानि सुचिरं साम्राज्यमातन्यते ॥ ६ ॥

पाणौ ताम्रघटी कुशाः करतले धौतोज्ज्वले वाससी
फाले मृत्तिलकः सचन्दनरसो न्यस्तैकपुष्पं शिरः ।
दूरोत्क्षिप्तपदा गतिर्दृढतरव्याश्लिष्टदन्ता गिरः
सोऽयं वञ्चयितुं जगद्भगवतो डम्भस्य देहक्रमः ॥ ७ ॥

स्नायं स्नायमनारतं धनवतामग्रे निरीहव्रताः
प्रायो मृत्तिलदर्भसंग्रहधनाः सम्मोहयन्तो जगत् ।
अम्भःकेलिकृतावतारतरुणीनीरन्ध्रवक्षोरुह-
द्वन्द्वालोकनकूणितेक्षणयुगं ध्यायन्त्यमी डाम्भिकाः ॥ ८ ॥

वैराग्यभङ्गिरचनावचनैः प्रतार्य रण्डाश्चिराय विकटस्तनसन्नताङ्गीः ।
ब्रह्मोपदेशमिषसङ्गतगण्डभित्ति निःशङ्कचुम्बनरसैः कितवा द्रवन्ति ॥ ९ ॥

करकजलपूतभूतलनिहितपदो विहितविकृतहुंकारः ।
अपि वितथमन्त्रगणनाव्यग्रसमग्राङ्गुलीपर्वा ॥ १० ॥

वेश्यावेश्मसु सीधुगन्धिललनावक्त्रासवामोदितै-
र्नीत्वा निर्भरमन्मथोत्सवरतैरुन्निद्रचन्द्राः क्षपाः ।
सर्वज्ञा इति दीक्षिता इति चिरंप्राप्ताग्निहोत्रा इति
ब्रह्मज्ञा इति तापसा इति दिवा धूर्तैर्जगद्वञ्च्यते ॥ ११ ॥

कृष्णमिश्रस्य ।

चेट्यः कदाचन कदाचन पण्यनार्यः
कन्याः कदाचन कदाचन चण्डरण्डाः ।
इत्थं चिरं विहरतोऽपि सखे परस्त्री-
वाञ्छारसे न परितृप्यति चान्तरात्मा ॥ १२ ॥

केषामप्येते ।

१. रता क. पाठभेदः । २. कृत. ख. च. ३. तुष्य. क. ख. च.

न विद्या न च वक्तृत्वं नैषा काऽपि विदग्धता।
तथाऽपि धत्ते पात्रत्वमप्रतिग्रहभावना ॥ १३ ॥

सर्वज्ञवासुदेवस्य।

स्नानं सिन्धुजले विधाय जनतासन्ने निषण्णस्तटे
काषायेण घनावकुण्ठिततनुः प्राप्तः परिव्राजकः।
सूपापूपघृतोत्तरा मधुमती भिक्षा यतो लभ्यते
यस्मिन् वा गतभर्तृका युवतयस्तत्तद्गृहं ध्यायति ॥ १४ ॥

सूक्तिसहस्रात्।

कन्थां वहसि दुर्बुद्धे गर्दभैरपि दुर्वहाम्।
शिखायज्ञोपवीताभ्यां भारः कस्ते भविष्यति ॥ १५ ॥

कस्यापि।

प्रामाण्यमाक्षिपति साधयतां शिवादीन्
देवानभीः किमपि दुर्मतिरागमानाम्।
पुत्रे शिशौ विकृतिमीषदवेक्ष्य भीतो
धावत्ययं प्रतिनिशं सबलिः श्मशानम् ॥ १६ ॥

श्रमणः श्रावकवृद्धासुरतविधौ दशति नाधरं दत्तम्।
मदिराक्षि मांसभक्षणमस्मत्समये विरुद्धमिति ॥ १७ ॥

केशोल्लुञ्छनसाम्येऽपि हन्त पश्यैतदन्तरम्।
उपस्थाः कीटमश्नन्ति घृतभक्तं दिगम्बराः ॥ १८ ॥

केषामप्येते।

वन्दे पद्मिनि धर्मलाभ भवती प्राप्ता जिनेन्द्रालयं
किं मेऽन्यत्र किमुच्यते तव मनःश्रद्धा भवन्तो विदुः।
इत्याकूतमृदुस्मितेन [वच]सा जल्पन्ति ये श्रावकीं
तन्नाभीनिपतद्दृशः करचटेतेसेवडेकेपटे (?) ॥ १९ ॥

मदनस्य।

१. दुर्भराम्, क. पाठभेदः २. काट. क. ख. च. कटि, क. पाठभेदः

अभ्यस्य पवनविजयं व्याख्याय च शैवसंहिताः सकलाः।
मरणसमये गुरूणां पर्दवदसवो विनिष्क्रान्ताः॥ २०॥

इच्छालस्य।

कृषीवलानां भुवि कालवर्षादकालवर्षाद्भिषजां प्रमोदः।
सस्यप्रवृद्धिं कुरुते हि पूर्वः प्रजासु रोगप्रचयं द्वितीयः॥ २१॥

दृष्टे रवौ सरसिजं कुमुदं हिमांशौ
नीलाम्बुवाहनिबिडे गगने शिखण्डी।
प्रायस्तथा न हि वहन्ति विकासलक्ष्मीं
व्याधौ यथा धनवतो भिषजां मुखानि॥ २२॥

धत्सेऽन्ना(ङ्गा)नि न धार्यसे च बहुभिर्वेत्सि स्वयं सङ्गतान्
पङ्क्त्यां यासि वचो ददासि शिरसः शक्नोषि संचालने।
निर्मुक्तो[1] गुरुलङ्घनव्यतिकरात्तृष्णा न चोष्णा(ष्मा)पि ते
सानन्दोऽद्य वियोगरोगरहितो दृष्टोऽसि जीवन्पुनः॥ २३॥

कार्पासकोशो[2]ज्ज्वलकेशसञ्चया पयोधरालिङ्गितमन्मथालया।
गल्लौ जरद्वल्लकसन्निभावुभौ तथापि रण्डा सुरतं न मुञ्चति॥ २४॥

मर्कटमुखि मरिचस्तनि मुरजोदरि मुष्टिमेयकटिदेशे।
मार्जारशावनयने स्मरामि कान्ते तवाङ्गानि॥ २५॥

कटिर्मुष्टिग्राह्या द्विपुरुषभुजग्राह्यमुदरं
स्तनौ घण्टालोलौ जघनमिव गन्तुं व्यवसितौ।
स्मितं भेरीनादो मुखमपि च पत्युर्भयकरं
तथाऽप्येषा रण्डा परिभवति सन्तापयति च॥ २६॥

भक्ते द्वेषो जडे प्रीतिः प्रवृत्तिर्गुरुलङ्घने।
मुखे कटुकता नित्यं धनिनां ज्वरिणामिव॥ २७॥

कोशं कुशेशय विकासय संश्रितालौ प्रीतिं कुरुष्व यदसौ दिवसस्तवास्ते।
दोषागमे निबिडराजकरप्रपातदुःस्थे समेष्यति पुनस्तव कः समीपम्॥ २८॥

---

१. तत्कस्योपरि दृश्यते च महती प्रीतिर्न चोष्माऽस्ति तत् हक्स्वास्थ्यं च (नि)वियोगरुग्विरहितो दृष्टोऽसि जीवन् सखे॥ पाठान्तरम्. क. ख. च. २. काशो. क. पाठभेदः

आलिङ्गिता परैर्यान्ति प्रस्खलन्ति समे पथि।
अव्यक्तानि च भाषन्ते धनिनो मद्यपा इव ॥ २९ ॥

अधिकाराभिषेकेषु मृदङ्गवचनं शृणु।
बद्धा दण्डहता रिक्ता भविष्यासि यथा वयम् ॥ ३० ॥

कस्यापि।

सक्वाणं लोलनेत्रं कुलयुवतिमुखं दृश्यते सानुकम्पै
रण्डानामर्धलज्जाञ्चितमधिपुलकं स्पृश्यते पीनमङ्गम्।
क्लीबानां खाद्यतेऽन्तश्चिरविहितधनं काष्ठमूलाग्नितोयैः
पूर्वं विद्याकलानां सकलसुखनिधिर्वैद्यविद्याभिवन्द्या ॥ ३१ ॥

दीपकस्य।

आपूर्यमाणपलितं सुभगत्वकामः
सार्धं प्रयाति दयिता पलिताधिकेन।
पुष्पेक्षणत्वमपि शश्वदपोह्य पा( सा ? )कं
याति प्रियो निकटमेव विलोचनेन(?) ॥ ३२ ॥

सूक्तिसहस्रात्।

यस्मिन्नास्ति कचग्रहव्यतिकरो यस्मिन्न पीनस्तन-
द्वन्द्वाश्लेषरसो न यत्र करजैरुच्चावचाः केळयः।
प्रत्यङ्गं न च यत्र चुम्बनविधिर्नो यत्र कण्ठध्वनिः
तत्पुंसः कुलगेहिनीरतमिति स्पष्टो हि विष्टिक्रमः ॥ ३३ ॥

ससंभ्रमकचग्रहव्यतिकराकुला वेपते
नखक्षतिषु निर्भरं स्फुरितबाष्पमारोदिति।
दिशः सभयमार्जवस्तिमितलोचनं वीक्षते
पशुश्च कुलगेहिनी चतसृणामनर्थान्तरम् ॥ ३४ ॥

सर्वज्ञवासुदेवस्यैतौ।

काकाल्लौल्यं यमात् क्रौर्यं स्थपतेर्दृढघातिताम्।
एकैकाक्षरमादाय कायस्थः केन निर्मितः ॥ ३५ ॥

१. नानु. ख. च. २. भेदि. क पाठभेदः

लेखनित्यतकर्णस्य कायस्थस्य न विश्वसेत् ।
येनोनिदश्चितोघेन गकारान्तररेखका ( ? ) ॥ ३६ ॥

कलमान्तनिर्गतमषीबिन्दुव्याजेन साञ्जनाश्रुकणा ।
कायस्थलुण्ठ्यमाना रोदिति खिन्नेव राजश्रीः ॥ ३७ ॥

शतवेदी[1] मे सिद्धः सहस्रवेदी[2] रसोऽपि निर्यातः ।
इति वदति धातुवादी नग्नो मलिनः कृशो रूक्षः ॥ ३८ ॥

प्रथमं स्ववित्तमखिलं कनकार्थी भस्मसात् स्वयं कुरुते ।
पश्चात्स्वधनाद[3]धिकं विनाशयति वञ्चनानिपुणः ॥ ३९ ॥

उत्तिष्ठति नमति वणिक् पृच्छति कुशलं ददाति च स्थानम् ।
निक्षेपपाणिमाप्तं दृष्ट्वा धर्म्याः कथाः कुरुते ॥ ४० ॥

क्षेमेन्द्रस्य ।

पितरि मृतेऽपि हि वेश्या रोदिति हा तात तात तातेति ।
उपभुक्तखदिरवीटिकजनिताधररङ्गभङ्गभयात् ॥ ४१ ॥

उच्छठस्य ।

तल्पे नितम्बतलमात्रनिरस्तवस्त्रां सङ्गत्य धृष्टवनितां हतकामवेगः ।
निर्वृत्यमन्ध इव मन्मथजं समग्रं लज्जानतो भवनतः सपदि व्यपैति ॥४२॥

सर्वज्ञवासुदेवस्य ।

अविदग्धः श्रमकठिनो दुर्लभयोषिद्युवा जडो विप्रः ।
अपमृत्युरुपक्रान्तः कामिव्याजेन मे रात्रौ ॥ ४३ ॥
शृणु सखि कौतुकमेकं ग्रामीणककामिना यदद्य कृतम् ।
सुरतसुखमीलिताक्षी मृतेति भीतेन मुक्ताऽस्मि ॥ ४४ ॥

दामोदरगुप्तस्यैतौ ।

दुर्दर्शैः कृपणैः पणो यदि भवेद्बाला बलाद्भुज्यते
कन्दर्पप्रतिमोऽपि हन्त तरुणो निष्कास्यते निर्धनः ।
आस्ते लोहमयार्गलेव भवनद्वारे चिरं जाग्रतो-
र्धूनोर्भाग्यविपर्ययेण जरती नाद्यापि मृत्युं गता ॥ ४५ ॥

नाथकुमारस्य ।

---

१. वेधी. के. पाठभेदः २. वे धी क. पाठभेदः ३ प्रसिकान् क. ख. चं.

कांश्चिच्चाटुवचःशतैर्निजसुताप्रेमातिरेकैः परा-
नन्यान्वक्ररवाक्रमैर्धनवतः प्रापय्य गेहं निजम् ।
प्राग्दत्तग्रहणप्रगल्भकितवव्याजादवष्टभ्य तान्
कुट्टिन्यः स्फुटमप्रगल्भचरितानेतान्निहन्तुं क्षमाः ॥ ४६ ॥

सर्वज्ञवासुदेवस्य ।

भगदत्तप्रभावाढ्या कर्णशल्योत्कटस्वना ।
सेनेव कुरुराजस्य कुट्टनी किन्तु निष्कृपा ॥ ४७ ॥

क्षेमेन्द्रस्य ।

प्रेमद्रुमोद्दलनतीक्ष्णकुठारधारा रूक्षाक्षिवीक्षणविरूक्षणचित्तवृत्तिः ।
नार्द्रीभवन्मरुधरेव महाप्रबन्धैर्वज्रं पिनष्टि कठिनं खलु कुट्टनी सा ॥ ४८ ॥

स्फुरत्कुन्दश्रेणीविशददशना धौतवसनाऽ-
मले फाले किंचित्तिलकरचना चारुवचना ।
इयं यूनां चेतःप्रहरणधरा सम्यगधरा
प(व ?)राका(की ?)रा[के]न्दुप्रतिमवदनाऽतिप्रवदना ॥ ४९ ॥

कस्यापि ।

भार्यायै पतिदेवतापरगतिं शंसत्यसत्यै पुमान्
कश्चित्तां नियमैर्नियन्तुमपटुः कोपेन संन्यस्यति ।
अन्यो गच्छति जाह्नवीमथ परो राजानमप्यावयो-
र्वंशं दूषय नेति भोः कथय मे कस्तेषु मानोन्नतः ॥ ५० ॥

सूक्तिसहस्रात् ।

नाहं स्वर्गफलोपभोगतृषिता नाभ्यर्थितस्त्वं मया
सन्तुष्टस्तृणभक्षणेन सततं साधो न युक्तं तव ।
स्वर्गं यान्ति यदि त्वया विनिहता यज्ञे यदि( ननु? )प्राणिनो
यज्ञं किं न करोषि मातृपितृभिः पुत्रैः सदा बान्धवैः ॥ ५१ ॥

कस्यापि ।

॥ इति श्रीमदारोहकभगदत्तजल्हणदेवविरचितायां सूक्तिमुक्तावल्यां हास्यरसपद्धतिः ॥

# करुणः ( १० )



आदाय मांसमखिलं स्तनवर्जमङ्गे-
मां मुञ्च वागुरिक यामि कुरु प्रसादम् ।
सीदन्ति शष्पकवलग्रहणानभिज्ञा
मन्मार्गवीक्षणपराः शिशवो मदीयाः ॥ १ ॥

नरदेववर्मणः ।

हृदयान्नापयातोऽसि दिक्षु सर्वासु दृश्यसे ।
वत्स राम गतोऽसीति सन्तापादनुमीयसे ॥ २ ॥

लक्ष्मणस्त्यक्तवान् प्राणान्मदर्थे मयि जीवति ।
अहमश्रूणि मुञ्चामि पश्यतान्तरमावयोः ॥ ३ ॥

अभिनन्दस्यैतौ (?) ।

मातस्तातः क यातः सुरपतिभवनं हा कुतः पुत्रशोकात्
कोऽसौ पुत्रश्चतुर्णां त्वमवरजतया यस्य जातः किमस्य ।
प्राप्तोऽसौ काननान्तं किमिति नृपगिरा किं तथाऽसौ बभाषे
मद्वाग्बद्धः फलं ते किमिह तव धराधीशता हा हतोऽस्मि ॥ ४ ॥

कृतककुपितैर्बाष्पाम्भोभिः सदैन्यविलोकितै-
र्वनमसि गता यस्य प्रीत्या धृताऽपि तथाऽम्बया ।
नवजलधरश्यामाः पश्यन्दिशो भवतीं विना
कठिनहृदयो जीवत्येव प्रिये स तव प्रियः ॥ ५ ॥

स्निग्धश्यामलकान्तिलिप्तवियतो वेल्लद्बलाका घना
वाताः शीकरिणः पयोदसुहृदामानन्दकेका [ रवाः ][३] ।
कामं सन्तु दृढं कठोरहृदयो रामोऽस्मि सर्वंसहो
वैदेही तु कथं भविष्यति हहा हा देवि धीरा भव ॥ ६ ॥

कयोरप्येतौ ।

१. यातो. २. न्ते. क. पाठ भेदौ ३. लकाः क. ख. च.

कोऽहं ब्रूहि सखे स एव हि भवानार्यः स को राघवः
के यूयं बत नाथ नाथ किमिदं दासोऽस्मि ते लक्ष्मणः।
कान्तारे किमिहास्महे वद वृथा देव्या गतिर्मृग्यते
का देवी जनकाधिराजतनया हा जानकि क्वासि हा॥ ७॥

महानाटकात्।

सौमित्रे ननु सेव्यतां तरुतलं चण्डांशुरुज्जृम्भते
चण्डांशोर्निशि का कथा रघुपते चन्द्रोऽयमुन्मीलति।
वत्सैतद्विदितं कथं नु भवता धत्ते कुरङ्गं यतः
क्वासि प्रेयसि हा कुरङ्गनयने चन्द्रानने जानकि॥ ८॥

जयदेवस्य।

हा वत्स क्व गतोऽसि देहि वचनं केनाधुना मद्गिरा
भज्यन्तामतिदारुणाः फणिपुरद्वारार्गलाकोटयः।
पौलस्त्योऽस्य न लङ्घते वचनमित्यागत्य पत्या समं
पौलोमी क्व करोतु रावणरुषः शांत्यर्थमभ्यर्थनम्॥ ९॥

बिल्हणस्य।

गण्डूषाशोषिताब्धिप्रकटजलचरोत्फालजातस्मितानां
हेलाकृष्टार्कचन्द्राभिनवकृतमहाकुण्डलाभोगभाजाम्।
पीनांसस्थापिताशाद्विरदमदमषीमांसलस्थासकानां
दूरं यातस्य (स्स?) वत्स स्मरति दशशिरास्त्वच्छिशुक्रीडितानाम्॥१०॥

मायूराजस्य।

भयान्मन्दं यस्याः क्रमवति कपोले परिलुठ-
न्मरुत्प्रत्यासन्नामलकरचनां ताण्डवयति।
समाकृष्टा केशेष्वियमशरणा राक्षसवधूः
प्लवङ्गैर्जन्तूनां दुरधिगमघोरा परिणतिः॥ ११॥

मदनस्य।

१ विज. क ख च.

रामस्य हृदयाम्बोधौ विरहागस्त्यशोषिते ।
और्ववत् कोऽपि कामाग्निरन्तर्ज्वलति केवलम् ॥ १२ ॥

तस्यैव ।

भूयिष्ठानि मुखानि चुम्बति भुजैर्भूयोभिरालिङ्ग्यते
चारित्रव्रतदेवताऽपि भवता कान्तेन मण्डोदरी ।
हा लम्बोदरकुम्भमौक्तिकमणिस्तोमैर्ममैकावली—
शिल्पे वागधमर्णकस्य भवतो लङ्केन्द्र निद्रारसः ॥ १३ ॥

श्रीमुरारेः ।

हे गोदावरि रम्यवारिरसिका पम्पे न दृष्टा त्वया
सा सीता कमलानि वा हृतवती नूनं विनोदाय ते ।
इत्येतत्प्रतिपादपं प्रतिलतं प्रत्यापगं प्रत्यगं
प्रत्येणं प्रतिबर्हिणं तत इतस्तां मैथिलीं पृच्छति ॥ १४ ॥

महानाटकात् ।

यः स्फीतैरवधीरितः सुरतरुस्त्वत्त्यागलीलायितै—
स्तस्या[धो] भवितासि नन्दनवनक्रीडाप्रसङ्गादपि ।
यश्च स्फारविलासविक्रमकलासूत्रस्य पात्रं न ते
तेनार्धासनमाश्रितोऽसि हरिणा कस्ते प्रतिष्ठालवः ॥ १५ ॥

अक्षत्रारिकृताभिमन्युनिधनप्रोद्भूततीव्र[क्रुधः]
पार्थस्याकृतशात्रवप्रतिकृतेरन्तःक्रुधा मुह्यतः ।
कीर्णा बाष्पकणैः पतन्ति धनुषि व्रीडाजडा दृष्टयो
हा वत्सेति गिरः स्फुरन्ति न पुनर्निर्यान्ति कण्ठाद्बहिः ॥ १६ ॥

निशानारायणस्य ।

आपूर्णश्च कलाभिरिन्दुरमलो यातश्च राहोर्मुखे
सञ्जातश्च घनाघनो जलधरः शीर्णश्च वायोर्जवात् ।
उद्भिन्नश्च फलेग्रहिर्द्रुमवरो दग्धश्च दावाग्निना
त्वं चूडामणितां गतश्च जगतः प्राप्तोऽसि मृत्योर्वशम् ॥ १७ ॥

१ भुवः क, ख, च.

सम्पाद्यः सखि चम्पकस्य लतया सार्धं विवाहोऽनया
नायं केलिमृगः प्रदाय हरिणीं हाहा गृहस्थः कृतः।
एवंप्रायमगादि गद्गदगिरा निर्गत्य यत्सीतया
तेनाभूदभिभूय धैर्यमिह कः पुर्यां न पर्याकुलः॥ १८॥

अत्राकण्ठं विलुठ सलिले निर्जला भूः पुरस्ता-
ज्जह्याः शोषं वदनविहितेनामलक्याः फलेन।
स्थाने स्थाने तदिति पथिकस्त्रीजन[ः] क्रान्तगात्रीं
पश्यन् सीतां किमु न कृपया वर्धितो रोदितश्च॥ १९॥

बिल्हणस्य।

यस्य त्वया व्रणविरोहणमिङ्गुदीनां
तैलं न्यषिच्यत मुखे कुशसूचिभिन्ने।
श्यामाकमुष्टिपरिवर्धितको जहाति
सोऽयं न पुत्रकृतकः पदवीं मृगस्ते॥ २०॥

मया प्रत्यादिष्टा स्वजनमधिगन्तुं व्यवसिता
स्थिता तिष्ठेत्युच्चैर्वदति गुरुशिष्ये गुरुसमे।
पुनर्दृष्टिं बाष्पप्रसरकलुषामर्पितवती
मयि क्रूरे यत्तत्सविषमिव शल्यं दहति माम्॥ २१॥

कालिदासस्यैतौ।

॥ इति श्रीमदारोहकभगदत्तजल्हणदेवविरचितायां सूक्तिमुक्तावल्यां करुणरसपद्धतिः॥



# रौद्रः ( ९१ )



कृतमनुमतं दृष्टं वा यैरिदं गुरु पातकं
　मनुजपशुभिर्निर्मर्यादैर्भवद्भिरुदायुधैः ।
नरकरिपुणा सार्धं तेषां सभीमकिरीटिना-
　मयमहमसृङ्मेदोमांसैः करोमि दिशां बलिम् ॥ १ ॥

यत्सत्यव्रतभङ्गभीरुमनसा यत्नेन मन्दीकृतं
　यद्विस्मर्तुमपीहितं शमवता शान्तिं कुलस्येच्छता ।
तद्द्यूतारणिसंभृतं नृपसुताकेशाम्बराकर्षणैः
　क्रोधज्योतिरिदं महत्कुरुवने यौधिष्ठिरं जृंभते ॥ २ ॥

निशानारायणस्यैतौ ।

येन स्वां विनिहत्य मातरमपि क्षत्रास्रमध्वासव-
　स्वादाभिज्ञपरश्वधेन विदधे निःक्षत्रिया मेदिनी ।
यद्बाणव्रणवर्त्मना शिखरिणः क्रौञ्चस्य हंसच्छला-
　दद्याप्यस्थिकणाः पतन्ति स पुनः क्रुद्धो मुनिर्भार्गवः ॥ ३ ॥

त्रैलोक्यत्राणशौण्डः सरसिजवसतेः संप्रसूतो भुजाभ्यां
　यः क्षत्रं नाम वर्णः कुलिशकठिनयोर्यस्य बाह्वोर्विलीनः ।
ज्वालाजिह्वालकालानलकपिलभयभ्रान्तदेवासुराणि
　व्यातन्वानो जगन्ति ज्वलति भृगुरयं पार्वतीधर्मपुत्रः ॥ ४ ॥

न्यञ्चन्न्यञ्चद्धरित्रीधृतचरणभरश्चन्द्रहासैकदृष्टि-
　र्व्यावल्गद्यौगपद्योत्सुकसकलभुजक्रान्तदिक्चक्रवालः ।
क्रोधक्रूराक्षिरक्तोत्पलरचितवियत्तोरणस्रञ्जि बिभ्र-
　द्वक्त्राणि प्रत्यनीकप्रसरसरभसो निर्जिहीते दशास्यः ॥ ५ ॥

एते श्रीमुरारेः ॥

॥ इति श्रीमदारोहकभगदत्तजल्हणदेवविरचितायां सूक्तिमुक्तावल्यां रौद्ररसपद्धतिः ॥

# वीरः ( ९२ )



प्रायेण सुकरं दानं प्रायेण सुकरं तपः।
प्राणानपेक्षव्यापारः पुनर्वीरस्य दुष्करः ॥ १ ॥

कस्यापि।

क्षुद्राः सन्त्रासमेनं विजहत हरयो भिन्नशक्रेभकुम्भा
युष्मद्गात्रेषु लज्जां दधति परममी सायकाः संपतन्तः।
सौमित्रे तिष्ठ पात्रं त्वमसि नहि रुषो नन्वहं मेघनादः
किंचिद्भ्रूभङ्गलीलानियमितजलधिं राममन्वेषयामि ॥ २ ॥

कपोले जानक्याः करिकलभदन्तद्युतिमुषी
स्मरस्मेरं गण्डोड्डमरपुलकं वक्त्रममलम्।
मुहुः पश्यन् शृण्वन् रजनिचरसेनाकलकलं
जटाजूटग्रन्थिं द्रढयति रघूणां परिवृढः ॥ ३ ॥

महानाटकादेतौ।

जन्मेन्दोरमले कुले व्यपदिशस्यद्यापि धत्से गदां
मां दुःशासनकोष्णशोणितसुराक्षीबं रिपुं भाषसे।
दर्पान्धो मधुकैटभद्विषि हरावप्युद्धतं चेष्टसे
मत्त्रासान्नृपशो विहाय समरं पङ्केऽधुना लीयसे ॥ ४ ॥

निशानारायणस्य।

अप्राप्तप्रथमावकर्तनरुषा व्यानम्रमूकीभव-
द्वक्त्रेष्वन्यशिरस्सु यस्य दहने छिन्नं शिरो जुह्वतः।
उच्चार्य स्वयमेव मन्त्रमकरोन्नास्याहमित्यात्मन-
स्त्यागं पङ्क्तिमुखः स विक्रमसुहृद्वीरः कथं वर्ण्यते ॥ ५ ॥

मायूराजस्य।

निस्त्रिंशप्रतिबिम्बितेन यदु(उ?)रःकम्पेन वीरव्रत-
मौढिस्से(र्ने?)ति न चन्द्रहासमधुनोत्कण्ठच्छिदापर्व(कर्म?)णि।
जुह्वद्यः स्वशिरांसि शङ्करपुरो हाकारवैरेण न
स्वाहाकारमुदाहरन्न स दशग्रीवो गिरां गोचरः॥ ६॥

किञ्चित्कोपकलाकलापकलनाहङ्कारविभ्रद्भ्रुवो—
र्विक्षेपादकरोदसौ रघुपतिर्लङ्कापतेः पत्तनम्।
क्रन्दत्फेरु रटत्करेणु विचटद्दारु स्फुटद्गुग्गुलु
प्रक्रीडत्कपि निश्वसत्फणि रणज्झिल्लि भ्रमद्द्वीपि च॥ ७॥

महानाटकादेतौ।

मूले पञ्च ततश्चतुष्टयमिति स्रक्सन्निवेशैः शिरः-
पुष्पैरन्यतमावलोकनमितैरुच्छोणितैरर्चितैः।
हस्तस्पर्शवशेन मूर्ध्नि दशमं मूर्धानमारोपयन्
शंभोरद्भुतसाहसैकरसिकः कैर्न श्रुतो रावणः॥ ८॥

कस्यापि।

सन्तुष्टे तिसृणां पुरामपि रिपौ कण्डूलदोर्मण्डल-
क्रीडाकृत्तपुनःप्ररूढशिरसो वीरस्य लिप्सोर्वरम्।
याच्नादैन्यपराञ्चि यस्य कलहायन्ते मिथस्त्वं वृणु
त्वं वृण्वित्यभितो मुखानि स दशग्रीवः कथं वर्ण्यते॥ ९॥

स्वेषूत्कृत्य हुतेषु मूर्धसु जवादग्नेः स्फुटित्वा बहि-
र्व्याकीर्णेष्वलिकेषु देवलिपिभिर्दृष्ट्वाऽपि रामायणम्।
चित्तेनास्खलितेन यस्तदधिकं ब्रह्माणमप्रीणयत्
कस्तस्मै प्रथमाय मानिषु महावीराय वैरायते॥ १०॥

एतौ श्रीमुरारेः।

कण्ठश्रेणिविशीर्यमाणरुधिरप्राग्भारभग्नद्युते-
र्येन स्मेरमुखेन होमशिखिनः सन्धुक्षणाकाङ्क्षिणा।
भ्रूभङ्गः शितिकण्ठकण्ठफणिने फूत्कारहेतोः कृतः
शौण्डीर्यव्रततुष्टधूर्जटिरयं किं वर्ण्यते रावणः॥ ११॥

वीरोऽसौ किमु वर्ण्यते दशमुखश्छिन्नैः शिरोभिः स्वयं
यः पूजास्रजमुत्सुकं घटयितुं देवस्य खट्वाङ्गिनः।
सूत्रार्थी हरकण्ठसूत्रभुजगव्याकर्षणायोद्यतः
साटोपं प्रमथैः कृतभ्रुकुटिभिः[1] स्थित्वाऽन्तरे वारितः ॥ १२ ॥

अर्धासने समधिरोप्य सुरद्विपस्य
शक्रोऽपि यद्युधि शचीं कवचीकरोति।
धीरस्य तस्य सहते दशकन्धरस्य
कस्साहसैकरसिकः करवालधाराम् ॥ १३ ॥

शूराः श्रोत्रपथे न नः कति कति प्राञ्चः पदं चक्रिरे
तेषामेव विलङ्घ्य साम्यसर[2]णिं जागर्ति लङ्काभटः।
यद्दोर्मण्डलगाढपीडनवशान्निष्ठ्यूतरक्तच्छटा-
शङ्कामङ्कुरयन्ति शङ्करगिरेरद्यापि धातुद्रवाः ॥ १४ ॥

कलिङ्गस्य।

येऽहंपूर्विकया प्रहारमभजन् खड्गस्य मां छिन्धि मां
छिन्धीत्युक्तिपराः पुरारिपुरतो लङ्कापतेर्मौलयः।
ते भूमौ पतिताः पुनर्भवनवानालोक्य मूर्ध्नो वरं
याचिष्यन्त इमे हि नो वयमिति प्रीत्याऽट्टहासं व्यधुः ॥ १५ ॥

ये लङ्काधिपतिप्रतापदहनैः प्लुष्टास्त एव ग्रहा
दिक्पालाश्च कदम्बकेन हनुमन्निर्दग्धलङ्कार्चिषाम्।
आलीढाम्बरदिङ्मुखेन दधिरे सन्तोषमित्यग्निना
दग्धस्यौषधमग्निरित्युपचयं स्थाने जनोक्तिर्गता ॥ १६ ॥

मदनस्यैतौ।

रामः किं कुरुते न किञ्चिदपि च प्राप्तः पयोधेस्तटीं
कस्मात्साम्प्रतमेवमेव हि ततो बद्धः किमम्भोनिधिः।
क्रीडाभिः किमसौ न वेत्ति यदयं लङ्कापतिर्वर्तते
जानात्येव विभीषण[ःस्व] निकटे लङ्कापदे स्थापितः ॥ १७ ॥

इन्द्रकवेः।

१. भिश्छि. क. ख. च। भिः स्थि. शार्ङ्गधरीये. २. णस्य. क. ख. च.

स्वैरं कुरुत [1]वै तावत् सुमनःपातमाहवे ।
अन्यथा सुमनःपातं कुम्भकर्णः करिष्यति ॥ १८ ॥

काकुत्स्थस्य प्रतापाग्निर्दीप्तपिङ्गैर्वलीमुखैः ।
निर्वाणो राक्षसेन्द्रस्य मन्ये नीलैर्निशाचरैः ॥ १९ ॥

धीवरो माल्यवानेकः प्रविष्टो वाहिनीमपि ।
यन्नीतिगुणजालान्तः पतन्त्यनिमिषाः क्षणात् ॥ २० ॥

एकस्मिन्ननु पातितेऽपि शिरसि क्रोधोपशान्तिः कुतः
स्याच्चेत्किन्तु तथा स्वमूर्धपतनं दृष्टं न यत्रारिणा ।
एतन्मूर्धबहुत्वतः फलमिदं त्वत्तो मया लप्स्यते
छिन्नं छिन्नमवेक्ष्य राक्षसपते यस्मादसूंस्त्यक्ष्यसि ॥ २१ ॥

॥ राजशेखरस्य ॥

सन्धानक्षण एव राघवशरैर्ये बाहवः खण्डिता-
स्तद्बाणान् परिहृत्य शीघ्रमपरे कर्षन्त्यमर्षाद्धनुः ।
प्रारब्धां तु दशाननस्य विदलद्वर्णामपूर्णां गिरं
मूर्धानः परिपूरयन्ति विशिखैरन्यत्र नीता अपि ॥ २२ ॥

॥ बिल्हणस्य ॥

अस्त्राणि प्लवगाधिपेन विहिताः पौलस्त्यवक्षःस्थली-
संघट्टानलदत्तदावविपदः सीदन्ति भूमीरुहः ।
उत्पाट्य प्रहितश्च शैलशिखरो लङ्केन्द्रहस्तावली-
पिष्टोऽयं निजकुञ्जनिर्झरजलैर्जम्बालपिण्डायते ॥ २३ ॥

यद्यत्कृत्तं दशमुखशिरस्तस्य तस्यैव कान्तौ
संक्रामन्त्यामतिशयवती शेषवक्त्रेषु लक्ष्मीः ।
यो यः कृत्तो दशमुखभुजस्तस्य तस्यैव वीर्यं
लब्ध्वा दृप्यन्त्यधिकमधिकं बाहवः शिष्यमाणाः ॥ २४ ॥

[1] वे. क. ख. च.

प्रागुच्चैःशिरसं क्षुरप्रनखरैः क्रौञ्चाद्रिदन्तावलं
भित्वा हंसमयानि मौक्तिकफलान्याकीर्य पर्यापिताम् ।
सैंहीं वृत्तिमधिष्ठितेऽपि हि मयि क्षात्रेण कल्पेन ते
दिष्ट्या कौतुकमाभिरामिकमसि त्वं कोऽपि वीराङ्कुरः ॥ २५ ॥

आजन्मब्रह्मचारी पृथुलभुजशिलास्तम्भविभ्राजमान-
ज्याघातश्रेणिसंज्ञान्तरितवसुमतीचक्रजैत्रप्रशस्तिः ।
वक्षःपीठे घनास्त्रव्रणकिणकठिने संक्ष्णुवानः पृषत्कान्
प्राप्तो राजन्यगोष्ठीवनगजमृगया कौतुकी जामदग्न्यः ॥ २६ ॥

एते श्रीमुरारेः ।

नियन्तव्याः केन स्ववशरसनावाल्लिसुभगाः
स्वगाथा गायन्तो निजसदसि के नाम न भटाः ।
न तानुद्रक्ष्यामो य इह करवालद्वयमिल-
ज्झणत्कारे चक्षुर्झटिति न विलुम्पन्ति मिलिताः ॥ २७ ॥

वीररसे बलप्रोत्साहः

स्वर्गस्य मार्गा बहवः प्रदिष्टास्ते कृच्छ्रसाध्याः कुटिलाः सविघ्नाः ।
निमेषमात्रेण महाफलोऽयमृजुश्च पन्थाः समरे व्यसुत्वम् २८ ॥

जीवतोऽपि निहतस्य वा रणे धर्म एव हि नरस्य योधिनः ।
निश्चयान्न मरणं रणाजिरे नैव भीरुरजरामरः क्वचित् ॥ २९॥

एकतश्च सुरसुन्दरीजनः श्रीः प्रतीच्छति युयुत्सुमन्यतः ।
पाप्मना सह पलायतोऽयशश्चैकतः कुलकलङ्ककारणम् ॥ ३० ॥

न पाहि पाहीति यदब्रवीदमुं ममोष्ठ तेनैवमभूदिति क्रुधा ।
रणक्षितावस्य विरोधिमूर्धभिर्विदश्य दन्तैर्निजमोष्ठमास्यते ॥ ३१ ॥

हा तात तातेति स वेदनार्तः क्वणन् शकृन्मूत्रकफानुलिप्तः ।
वरं मृतः किं भवने किमाजौ सन्दष्टदन्तच्छदभीमवक्त्रः ॥ ३२ ॥

१. पापमेव हि. क. पाठभेदः

लोकोऽशुभस्तिष्ठतु तावदन्यः पराङ्मुखानां समरेषु[1] पुंसाम् ।
पत्न्योऽपि तेषां न ह्रिया मुखानि पुरः सखीनामवलोकयन्ति ॥ ३३ ॥

संमूर्छितं संयति संमहारैः पश्यन्ति सुप्तप्रतिबुद्धकल्पम् ।
आत्मानमङ्के(ङ्के?)षु सुराङ्गनानां मन्दाकिनीमारुतवीजिताङ्गाः ॥ ३४ ॥

उरः कृत्वा[ऽवेध्यं][3]मणिफलकगाढस्थितकुचं
भुजावालम्ब्यैर्हीत्यमरवनिता व्योमगृहगाः ।
अपद्वारेणैव त्वरितपदमाभाष्य सहसा
हतं हस्तालम्बैर्हरति सुरलोकं रणमुखात् ॥ ३५ ॥

सप्तैते वराहमिहिरस्य ।

भर्तृपिण्डानृणकरो यशःक्रममहापणः ।
सुराङ्गनास्वयंग्राहो रम्यः कालोऽयमागतः ॥ ३६ ॥

शाण्डिल्यस्य ।

क्षत्रियस्योरसि क्षत्रं पृष्ठे ब्रह्म व्यवस्थितम् ।
तेन पृष्ठं न दातव्यं पृष्ठदो ब्रह्महा भवेत् ॥ ३७ ॥

हतोऽपि लभते स्वर्गं हन्ताऽपि लभते यशः ।
उभयं वो बहुगुणं नास्ति निष्फलता रणे ॥ ३८ ॥

न यज्ञैर्दक्षिणावद्भिर्न तपोभिर्न विद्यया ।
न गच्छति तथा स्वर्गं यथा मर्त्यो रणे हतः ॥ ३९ ॥

भगवतो व्यासस्यैते ।

तुमुलयुद्धम् ।

शुण्डादण्डप्रहारप्रपदविघटिताः केऽपि केचिच्च दन्त-
प्रान्तप्रत्युप्तगात्रक्षरदसृगरुणाः कुम्भियुद्धे निपेतुः ।
केचित्साचिस्थयोधोद्धुरकरविलसच्चण्डकोदण्डवल्ली-
ज्यामुक्तानेकभल्लीशतहततनवः सिद्धनारीरवापुः ॥ ४० ॥

१. कः. क. ख. २. कु. ग. ३. वेद्यां. क. ख. च.

रक्तं नक्तञ्चरौघः पिबति वमति च ग्रस्तकुन्तः शकुन्तः
क्रव्यं नव्यं गृहीत्वा प्रणदति मुदितो मत्तवेतालबालः।
क्रीडन्त्यव्रीडमस्मिन् रुधिरमधुवशात्पूतना नूतनाङ्ग्यो
योगिन्यो मांसमेदःप्रमुदितमनसः शूरशक्तिं स्तुवन्ति ॥ ४१ ॥

कवीश्वरस्यैतौ।

कश्चिन्मूर्छामेत्य गाढप्रहारः सिक्तः शीतैः शीकरैर्वारणस्य।
उच्छ्वासप्रस्थिता तं जिघृक्षुर्व्यर्थीकृता नाकनारी मुमूर्छ ॥ ४२ ॥

वृत्तं युद्धे शूरमाश्लिष्य काचिद्रन्तुं तूर्णं मेरुकुञ्जं जगाम।
त्यक्त्वा नाग्नौ देहमेति स्म यावत् पत्नी सद्यस्तद्वियोगासमर्था ॥ ४३ ॥

माघस्यैतौ।

परस्परं सायकविक्षताङ्गास्ते क्षत्रियाः कुण्डलिनो युवानः।
कुम्भेषु लग्नाः सुषुपुर्गजानां स्तनेषु लीना इव कामिनीनाम् ॥ ४४ ॥

भूरेणुदिग्धान्नवपारिजातमालारजोवासितबाहुमध्याः।
गाढं शिवाभिः परिरभ्यमाणा[न्] सुराङ्गनाश्लिष्टभुजान्तरालाः ॥ ४५ ॥

सशोणितैः क्रव्यभुजां स्फुरद्भिः पक्षैः खगानामुपवीज्यमानान्।
संवीजिताश्चन्दनवारिसेकैः सुगन्धिभिः कल्पलतादुकूलैः ॥ ४६ ॥

विमानपर्यङ्कतले निषण्णाः कुतूहलाविष्टतया तदानीम्।
निर्दिश्यमानान् ललनाङ्गुलीभिर्वीराः स्वदेहान् पतितानपश्यन् ॥ ४७ ॥

भगवतो व्यासस्यैते।

प्रेयान्मे दन्तिदन्तप्रवसदसुरयं वल्लभो मे विपक्षैः
कुन्तप्रोतोऽपि योऽयं स्फुरति मम रुचिस्ताण्डवीयत्कबन्धः।
अत्रास्मत्प्रेमबद्धभ्रुकुटिमुखमिदं यस्य लूनेऽपि वक्त्रे
युद्धे देवाङ्गनानामिति वरवरणे न श्रुताः केन वाचः ॥ ४८ ॥

राजशेखरस्य।

१. त्य. ग. २. क्री. ग.

कोऽप्येष खण्डितशिरा विकसन्मुखश्रीः
प्रारब्धताण्डवविधिः सुरकामिनीभिः ।
आलोक्यते निजकराभिनयानुरूप-
व्यापारितेक्षणनिवेदितसत्वचारः ॥ ४९ ॥

वादीश्वरकाञ्चनस्य[1] ।

एकेनोद्धृत्य खड्गं हृदि पतितमिषुं पाणिनैकेन भञ्जन्
भ्रूभेदालङ्कृतास्यः सरभसनयनः स्पष्टदष्टाधरोष्ठः ।
भीतैः क्रव्यादवृन्दैरनुपहततनुः कुञ्जरेन्द्रोपधानः
शेते योधप्रधानो यदि मरणमिदं लभ्यते किं जयेन ॥ ५० ॥

कस्यापि ।

इति श्रीमदारोहकभगदत्तजल्हणविरचितायां सूक्तिमुक्तावल्यां वीररसपद्धतिः ॥



१. वादी. क. पाठभेदः—

# भयानकपद्धतिः (९३)



ग्रीवाभङ्गाभिरामं मुहुरनुपतति स्यन्दने दत्तदृष्टिः
पश्चार्धेन प्रविष्टः शरपतनभयाद्भूयसा पूर्वकायम् ।
दर्भैरर्धावलीढैः श्रमविवृतमुखभ्रंशिभिः कीर्णवर्त्मा
पश्योदग्रप्लुतत्वाद्वियति बहुतरं स्तोकमुर्व्यां प्रयाति ॥ १ ॥

कालिदासस्य ।

अकृतकवलारम्भैर्वक्त्रैर्भयस्थगितेक्षणाः
किमपि वलितग्रीवं स्थित्वा मुहुर्मृगपङ्क्तयः ।
गगनमसकृत्पश्यन्त्येतास्तथाऽश्रुघनैर्मुखै-
र्निपतति यथा शृङ्गाग्रेभ्योऽक्रमं नयनोदकम् ॥ २ ॥

कस्यापि ।

निर्मज्जच्चक्षुरन्तर्भ्रमदतिकपिशक्रूरतारा नरास्थि-
ग्रन्थिं दन्तान्तरालग्रथितमविरतं जिह्वया घट्टयन्ती ।
ध्वान्तेऽपि व्यात्तवक्त्रज्वलदनलशिखाजर्जरे व्यक्तकर्मा
निर्मान्ती गृध्ररौद्रीं दिवमुपरि परिक्रीडते ताटकेयम् ॥ ३ ॥

श्रीमुरारेः ।

प्रचण्डं चामुण्डागृहमिदमुदग्राभिरभितः
पताकाभिर्घोरं यममहिषजिह्वाकारिणि(नुकृति?)भिः ।
किमेकाकिन्यत्र प्रविशसि न किं पश्यसि पुरः
शिरोभिः पान्थानां पथि विरचितां तोरणततिम् ॥ ४ ॥

अत्रावासपरिग्रहं गृहपतेराचक्ष्व चण्डोद्यमैः
चण्डालैरुपसेविताः सखि धनुर्हस्तैः पुरस्तादिमाः ।
उत्कालाकुलसारमेयरसनालेलिह्यमानोन्नत-
द्वाराग्रत्वगवास्थिसास्रशकलस्रग्वल्लयः पल्लयः ॥ ५ ॥

बिह्लणस्य ।

१. भ्रमं. ख. च. २. न. ख. व. च.

एताः शार्दूलहेलादलितमृगकुलव्यक्तरक्ताभिषिक्त-
　क्ष्मापीठास्वादलुब्धस्फुटतरकलहस्फारफेरण्डचण्डाः ।
वेल्लन्निर्मोकवल्लीवलयनिगडितानोकहक्रोडनीड-
　क्रीडन्निश्शूकघूकव्यतिकरमुखरा भूमयो भीषयन्ति ॥ ६ ॥

महानाटकात् ।

मन्त्रान्मृत्युजितो जपद्भिरसकृद्ध्यायद्भिरिष्टान् सुरान्
　शुष्यत्तालुभिराकुलाकुलपदैर्निर्वाग्भिरुत्कम्पिभिः ।
अध्वन्यैरिह जीवितेशमहिषव्याधूम्रधूमाविला
　लङ्घ्यन्ते करिमांसघस्मररणत्कौलेयकाः पल्लयः ॥ ७ ॥

कस्यापि ।

रक्ताभ्यक्तोरुसृक्वागुरुकवलचलज्जाङ्गलव्यग्रतालुः
　फेत्कारैः पुल्लगल्लव्यतिकरगुरुभिः कम्पयन्ती जगन्ति ।
अन्योन्येनाग्रपाणिप्रणयिशबयुगं ताटका ताटयन्ती
　सेयं द्राक्स्पष्टदंष्ट्राङ्कुरकषणरणद्भीमभीमाभ्युदेति ॥ ८ ॥

राजशेखरस्य ।

विश्वक्षोभं विदधदहहा कुण्डलभ्रंशभङ्ग्या
　प्रभ्रष्टाभ्यां तपनशशिवन्मण्डलाभ्यामिवाभ्याम् ।
पौलस्त्यस्त्रीकरकिसलयक्षिप्तमुक्ताक्षतं तत्
　रामच्छिन्नं चरति गगने कुम्भकर्णोत्तमाङ्गम् ॥ ९ ॥

बिल्हणस्यैषः ।

मौढच्छेदानुरूपोच्चलनरयवशात् सैंहिकेयोपमेयं
　त्रासाकृष्टाश्वतिर्यग्वलितरविरथेनारुणेनेक्ष्यमाणम् ।
कुर्वत्काकुत्स्थवीर्यस्तुतिमिव मरुतां कन्धरारन्ध्रभाजां
　भाङ्कारैर्भीममेतन्निपतति वियतः कुम्भकर्णोत्तमाङ्गम् ॥ १० ॥

श्रीयशोवर्मणः ।

इति श्रीभगदत्तजल्हणविरचितायां सूक्तिमुक्तावल्यां भयानकरसपद्धतिः ॥

---

१. श्शू. ग.

# बीभत्सपद्धतिः ( ९४ )



उत्कृत्योत्कृत्य कृत्तिं प्रथममथ पृथूच्छोभभूयांसि मांसा-
न्यंसस्फिक्पृष्ठपिण्डाद्यवयवसुलभान्युग्रपूतीनि जग्ध्वा ।
अंत्तस्नाय्वान्त्रनेत्रः प्रकटितदशनः प्रेतरङ्कः करङ्का-
दङ्कस्थादस्थिसंस्थं स्थपुटगतमपि क्रव्यमव्यग्रमत्ति ॥ १ ॥

निष्टापस्विद्यदस्रः क्वथनपरिणमन्मेदसः प्रेतकायान्
कृष्ट्वा संसक्तधूमानपि कुणपभुजो भूयसीभ्यश्चिताभ्यः ।
उत्पक्वस्रंसि मांसं प्रचलदुभयतः सन्धिनिर्मुक्तमारा-
द्देते निष्कृष्य जङ्घानलकमुदयिनीं मज्जधारां पिबन्ति ॥ २ ॥

अन्त्रप्रोतबृहत्कपालनलकक्रूरक्वणत्कङ्कण-
प्रायःप्रेङ्खितभूरिभूषणरवैराघोषयन्त्यम्बरम् ।
पीतच्छर्दितरक्तकर्दमघनप्राग्भारघोरोल्लस-
द्व्यालोलस्तनभारभैरववपुर्दर्पोद्धुरं धावति ॥ ३ ॥

अन्त्रैः कल्पितमङ्गलप्रतिसराः स्त्रीहस्तरक्तोत्पल-
व्यक्तोत्तंसभृतः पिनह्य सहसा हृत्पुण्डरीकस्रजः ।
एताः शोणितपङ्ककुङ्कुमजुषः संभूय कान्तैः पिब-
न्त्यस्थिस्नेहसुराः कपालचषकैः प्रीताः पिशाचाङ्गनाः ॥ ४ ॥

एते भवभूतेः ।

सद्यो जग्ध्वाऽर्धदग्धं व्यसुपिशितलसत्स्थूलमेदःकबन्ध-
स्कन्धस्थोद्दामरोद्यड्डुरुडमरुडमत्कारनृत्यच्छवेन्द्रम् ।
निर्यन्नानान्त्रजालीवलयवलयितग्रीवगृध्रोपरुद्धं
दद्याद्भीतिं परेतप्रवरकिलकिलाघस्मरं वः श्मशानम् ॥ ५ ॥

चञ्चत्यक्षाभिघातग्लपितहुतभुजः प्रौढधाम्नश्चिताया:
क्रोधव्याकृष्टमूर्तेरहमहमिकया चण्डचञ्चुग्रहेण ।
सद्यस्तप्तं शवस्य ज्वलदिव पिशितं भूरि जग्ध्वार्धदग्धं
पश्यान्तः प्लुष्यमाणः प्रविशति सलिले सत्वरं गृध्रसङ्घः ॥ ६ ॥

---

१. आ. क. ख. च. २. घटगतमपि च. क. ख. च.

उत्कृत्य ज्वलितात् शवात् कथमपि प्रेताशनः पैशितीं
　पेशीमग्निमयीं निगीर्य सहसा दन्दह्यमानोदरः ।
धावत्युत्प्लवते मुहुर्निपतति प्रोत्तिष्ठति प्रेक्षते
　विष्वक्क्रोशति संपिनष्टि जठरं मुष्ट्या हते मस्तकम् ॥ ७ ॥

केषामप्येते ।

विध्वस्तहस्तयुगलं गलितान्त्रतन्त्र-
　मुन्मुक्तरक्तततिखण्डितकालखण्डम् ।
उत्कृत्तकृत्ति च शरै रचितं शरीर-
　मार्येऽखिलाङ्गपरिताडिनि ताटकायाः ॥ ८ ॥

राजशेखरस्य ।

गृध्रोद्भ्रान्तनितान्तनिस्सरदसृग्धाराश्चमत्कारिभि-
　र्दंष्ट्रालोलितजिह्वविह्वलमुखज्वालैर्लिहन्तीं दिवं ।
भूयो निम्नकडारतारनयनद्वन्द्वेन सुन्दप्रिया
　प्राप्तेयं ज्वलितान्तरिक्षकुहरक्रूरेण नक्तंचरी ॥ ९ ॥

कस्यापि ।

विकीर्णहरिचन्दनद्रविणि यत्र लीलालसा
　निपेतुरलिचञ्चलाश्चतुरकामिनीदृष्टयः ।
तदेतदुपरिभ्रमन्निबिडगृध्र[जालं] जनै-
　र्लुठत्क्रिमि कलेवरं पिहितनासिकैर्वीक्ष्यते ॥ १० ॥

इन्द्रकविः ।

॥ इति श्रीभगदत्तजल्हणविरचितायां सूक्तिमुक्तावल्यां बीभत्सरसपद्धतिः ॥



१. बा. क. ख. च.

# अद्भुतः ( ९५ )

एके[1] कुटीरकोणेऽपि न लक्ष्यन्ते स्थिताः क्वचित्।
अन्येषां विभवस्यैतद्ब्रह्माण्डमपि सङ्कटम् ॥ १ ॥

कृष्णेनाम्ब गतेन रन्तुमधुना[2] मृद्भक्षिता स्वेच्छया
सत्यं कृष्णक एवमाह मुसली मिथ्याऽम्ब पश्याननम्।
व्यादेहीति विदारिते च वदने दृष्ट्वा समस्तं जग-
न्माता यस्य जगाम विस्मयपदं पायात् स वः केशवः ॥ २ ॥

कयोरप्येतौ।

दोर्दण्डाञ्चितचन्द्रशेखरधनुर्दण्डावभङ्गोद्भव-
ष्टङ्कारध्वनिरार्यबालचरितप्रस्तावनापण्डितः।
द्राक्पर्यस्तकपालसंपुटमिलद्ब्रह्माण्डभाण्डोदरे
भ्राम्यत्पिण्डितचण्डिमा[3] कथमहो नाद्यापि विश्राम्यति ॥ ३ ॥

भवभूतेः।

प्रारब्धां तरुपुत्रकेषु सहसा सन्त्यज्य सेकक्रिया-
मेतास्तापसकन्यकाः किमिदमित्यालोचयन्त्याकुलाः।
आरोहन्त्युटजद्रुमांश्च बटवो वाचंयमाः सत्वरं
सद्योमुक्तसमाधयो निजबृसीष्वेवोच्चपादं स्थिताः ॥ ४ ॥

श्रीयशोवर्मदेवस्य।

पक्षोत्क्षेपप्रसर्पत्प्रबलमरुदपव्यस्तवाराकराम्भाः
पातालोद्ग्रीवदर्वीकरभयचकितप्रेक्षणीयावतारः।
उच्चश्चञ्चुकोटीविदलितजलदालीकवल्मीकनिर्य-
द्विद्युन्मिथ्याभुजङ्गीकवलनचपलस्तूर्णमायात् सुपर्णः ॥ ५ ॥

महानाटकात्।

---

१. ते. ख २. मसमां. क. ख. मनसा. च. ३ ङि. क. ख. च.

लीलामीलनतो विलोचनयुगे गच्छन्ति मूर्च्छाममी
वक्त्रे केचन मुद्रणादधरयोः सीदन्ति शाखामृगाः ।
ये नासापुटचारिणः श्रवणयोर्ये च स्थिताः कोटरे
युद्धव्यग्रकरस्य ते यदि परं स्वस्थाः क्षणं रक्षसः ॥ ६ ॥

काकुत्स्थेन शिरांसि यानि शतशश्छिन्नानि मायानिधेः
पौलस्त्यस्य विमानसीमनि तथा भ्रान्तानि नाकौकसाम् ।
तान्येवास्य धनुःश्रमप्रशमनं कुर्वन्ति सीतापतेः
क्रीडाचामरडम्बरानुकृतिभिर्लोलायमानैः कचैः ॥ ७ ॥

पश्यन्तु कौतुकमिदं सकलाः कवीन्द्राः
क्षिप्रं हिमाद्रिशिखरं रजनीचरेशः ।
वामे करे रजतकुम्भवदेष धृत्वा
धत्ते करेण हिमनिर्झरपानलीलाम् ॥ ८ ॥

बिल्हणस्यैतौ ।

सद्यः पीत्वा दरीभिर्जलधिमथ चिरं दृष्टमैनाकबन्धु-
प्रीतिप्रौढाश्रुपूरद्विगुणमहिमभिर्निर्झरैः पूरयन्तः ।
ये विन्यस्ताः पुरस्तान्निशि निशि निवहैरोषधीनां ज्वलद्भि-
स्ते दृश्यन्ते तदात्वोषितकपिशिबिरस्मारिणः सेतुशैलाः ॥ ९ ॥

श्रीमुरारेः ।

॥ इति श्रीभगदत्तजल्हणविरचितायां सूक्तिमुक्तावल्यामद्भुतरसपद्धतिः ॥



# जातिपद्धतिः ( ९६ )



अङ्के कृत्वोत्तमाङ्गं प्लवगबलपतेः पादमक्षस्य हन्तु-
दत्वोत्सङ्गे सलीलं त्वचि कनकमृगस्याङ्गशेषं निधाय।
बाणं रक्षःकुलघ्नं प्रगुणितमनुजेनादरात्तीक्ष्णमक्ष्णः
कोणेनावेक्षमाणस्त्वदनुजवचने दत्तकर्णोऽयमास्ते ॥ १ ॥

महानाटकात्।

भद्रं ते सदृशं यदध्वगशतैः कीर्तिस्तवोद्घुष्यते
स्थाने रूपमनुत्तमं सुकृतिना दानेन कर्णो जितः।
इत्यालोक्य चिरं दृशा करुणया शीतातुरेण स्तुतः
पान्थेनैकपलालमुष्टिरुचिना गर्वायते हालिकः ॥ २ ॥

कस्यापि।

मातर्धर्मपरे दयां कुरु मयि श्रान्तेऽद्य वैदेशिके
द्वारालिन्दककोणकेषु निभृतं यातास्मि सुप्त्वा निशि।
इत्युक्त्वा सहसा प्रचण्डगृहिणीवाक्येन निर्भर्त्सितः
स्कन्धन्यस्तपलालमुष्टिविभवः पान्थः पुनः प्रस्थितः ॥ ३ ॥

रविगुप्तस्य।

वामस्कन्धनिषण्णशार्ङ्गकुटिलप्रान्तार्पिताधोमुख-
स्यन्दच्छोणितलम्बमानशशकान् वेणीस्खलच्चामरान्।
ज्यान्तप्रोतकपोतपोतनिपतद्रक्ताक्ततूणीरकान्
सोऽपश्यत् करिकुम्भभेदजनितास्कन्दान् पुलिन्दान् पुरः ॥ ४ ॥

क्षेमेन्द्रस्य।

माल्यं मूर्धनि कर्णिकारकलिका पिष्टातकं चन्दनं
मुक्तादाम गले च काचमणयो लाक्षामयाः कङ्कणाः।
रागोऽङ्गेषु हरिद्रया नयनयोरत्युल्बणं कज्जलं
वेषोऽयं विरसस्तथापि हृदयं ग्राम्या हरन्ति स्त्रियः ॥ ५ ॥

लीढव्यस्तविपाण्डुराग्रनखयोराकर्णदीर्णं मुखं
　विन्यस्याग्रिमयोर्युगे चरणयोः सद्यो विभिन्नद्विपः।
एतास्मिन्मदगन्धवासितसटस्सावज्ञातिर्यग्वल-
　त्स्वकान्ताहतिधूतलोलमधुपः कुञ्जेषु शेते हरिः ॥ ६ ॥

कयोरप्येतौ ॥

पार्श्वास्फालावलेपाच्चटुलितचरणोल्लेखिताकाशदेशः
　संघट्टाटोपकोपप्रकटितरसनापल्लवालीढसृक्वा।
किंचित्साचीकृतास्यः स्फुरदधरपुटः स्फारिताताम्रचक्षु-
　र्घोराघाताभिलाषादपसरति रुषं दर्शयन्नेष मेषः ॥ ७ ॥

शङ्करवर्मणः।

नयनपथनिरोधक्रोधनिर्धूतमालभ्रमदविरलरोमस्तोमबद्धान्धकारः।
कृमिकवलनलोभोत्खातवल्मीकरन्ध्रोत्थितफणिफणघातैरुच्चलत्यच्छभल्लः॥८॥

मदनस्य।

पण्यान्यादाय वेगाच्चटुलतरक[रो[१] भाय]यित्वा किराटीं
　डिम्भैर्दत्तोच्चतालैर्विहितकलकलैर्दूरतो हन्यमानः।
त्यक्त्वा वीथीस्थिताभिः सचकितनयनं वीक्ष्यमाणोऽङ्गनाभि-
　र्धीत्कृत्योत्पत्य याति द्रुतमहतगतिर्वक्रितास्यः प्लवङ्गः ॥ ९ ॥

न्यञ्चच्चञ्चलचञ्चुचुम्बनचलच्चूडाग्रमुग्रं पत-
　च्चक्राकारकरालकेसरसटास्फारस्फुरत्कन्धरम्।
वारं वारमुदञ्चि[२]च्चञ्चलघनभ्रश्यन्नखक्षुण्णयो-
　र्दृष्टा कुक्कुटयोर्द्वयोः स्थितिरिति क्रूरक्रमं युध्यतोः ॥ १० ॥

वररुचेः[३]।

हन्ति स्थूणाश्चरणहननैर्हन्ति दोग्ध्रीं सपात्रां
　वत्सं हन्ति स्तनपरिसरालोकिनं हन्ति भूमिम्।
दामग्रन्थित्रुटनवलितग्रीवमुत्प्लुत्य लोकं
　हंभाशब्दैश्चलयाति शकृन्मूत्रिणी गौरदुग्धा ॥ ११ ॥

१ रैर्भाल. क. ख. रैश्वा. च. रैभ्राय. ग २ टान. ग. घ. ४ दू. ग.

भरालोके भूमौ पतति दहनाद्यैः प्रपतनै-
रुदस्तः प्रोद्वल्गन् स्वमयमखिलं व्योम कुरुते ।
जले पङ्के गुल्मे पथिकजनसङ्घातनिबिडे
नदन्नुक्षा भारं क्षिपति विपिने धावति ततः ॥ १२ ॥

पुरो नुन्नः पश्चाद्व्रजति विधृतश्चक्रितवपुः
समुत्पत्योत्तानः पतति पथि कच्छान् प्रविशति ।
हयः किंचिद्वच्छेद्यदि नयति नः कन्दुकदशां
कशाघाते तिष्ठत्यथ चरणघातैर्निखनति ॥ १३ ॥

सूक्तिसहस्रादेते ।

अङ्गुष्ठाग्रिमवक्रिताङ्गुलिधरः पादार्धनीरुद्धभूः
पार्श्वोद्वेगकृतो निहत्य कफणिद्वन्द्वेन [दं[1]]शान्मुहुः ।
न्यग्जानुद्वययन्त्रयन्त्रितघटीवक्रान्तरालस्खल-
द्धाराध्वा न मनोरमं पथि पयो गां दोग्धि गोपालकः ॥ १४ ॥

जो(घो?)यिकस्य ।

लोलद्रोणितलं लसत्कुचतटं प्रेङ्खन्नितम्बस्थलं
पर्यस्ताञ्चितनेत्रवल्गितभुजं स्विद्यत्कपोलस्थलम् ।
मश्नन्त्यो दधि हन्त गोपवनिताश्चित्तैः समं कामिना-
माकर्षन्ति दृशो दृशां श्रुतिपथादाकुञ्चनप्राञ्चनैः ॥ १५ ॥

कस्यापि ।

दधिमथनविलोलल्लोलदृग्वेणिदम्भा-
दयमदयमनङ्गो विश्वविश्वैकजेता ।
भवपरिभवकोपत्यक्तबाणः कृपाण-
श्रममिव दिवसादौ व्यक्तशक्तिर्व्यनक्ति ॥ १६ ॥

अरसिठक्कुरस्य ।

॥ इति श्रीभगदत्तजल्हणविरचितायां सूक्तिमुक्तावल्यां जातिपद्धतिः ॥

---

१. दे. क. ख. चं.

# राजवर्णनम् ( १७ )



रत्नाकरोऽपि ते कोशश्चन्द्रश्रीरुचिरोज्ज्वलः ।
प्रयात्यच्छिन्नदानस्य न कदाचित् समुद्रताम् ॥ १ ॥

महत्त्यागदयायुक्तः सत्यभामासमन्वितः ।
भवान्वा भगवान्वापि गतो भेदः परस्परम् ॥ २ ॥

किं चित्रं यदि देवेन भूभृतः करदीकृताः ।
देवोऽपि दापितः किं तैर्न पुनः पृष्ठतः करम् ॥ ३ ॥

केषामप्येते ।

प्रागेतद्वपुरास्येन्दु सृजतः स्रष्टुः समग्रस्त्विषां
कोशः शोषमगादगाधजगतीशिल्पेऽप्यनल्पायितः ।
निश्शेषद्युतिमण्डलव्ययवशादीषल्लभैरेष वा
शेषः केशमयः किमन्धतमसस्तोमैस्ततो निर्मितः ॥ ४ ॥

श्रीहर्षपण्डितस्य ।

अभ्युद्धृता वसुमती दलितं रिपूरः
क्रोडीकृता बलवता बलिराजलक्ष्मीः ।
एकत्र जन्मनि कृतं तदनेन यूना
जन्मत्रये यदकरोत् पुरुषः पुराणः ॥ ५ ॥

मौलौ धारय पुण्डरीकममितं तन्वात्मनो विक्रमं
चक्राङ्कं वह पादयुग्ममवनिं दोष्णा समभ्युद्धर ।
लक्ष्मीं भ्रूनिकटे निवेशय भव ज्यायान् दिवौकस्पते-
र्विश्वान्तःकरणैकचोर तदपि ज्ञातो हरिः खल्वसि ॥ ६ ॥

चित्तपस्य ।

---

१. ति. क. ख. च. २. समा. क. ख. च.

प्रेयानेव वृषस्तवापि सततं भूतिस्तवापि स्थिरा
दुर्गाया भवताऽपि भूधरभुवः सम्यग्गृहीतः करः।
निर्व्याजं परमेश्वरत्वमियता नो यासि वक्तुं जनै-
र्हेलोल्लासितवाहिनीशमथने यन्नो विषादी भवान् ॥ ७ ॥

ते गच्छन्ति महापदं भुवि पराभूतिः समुत्पद्यते
तेषां तैः समलङ्कृतं निजकुलं तैरेव लब्धा क्षितिः।
तेषां द्वारि नदन्ति वाजिनिवहास्ते भूषिताः सर्वदा
ये दृष्टाः परमेश्वरेण भवता रुष्टेन तुष्टेन वा ॥ ८ ॥

कयोरप्येतौ।

सन्धानानि विसन्धयः प्रकृतयस्ताभ्यः परं प्रत्ययो
देव व्याकरणादभेदकमिदं वैधर्म्यमेतत्तव।
आदेशो न विकल्प्यते न च कृतं किंचित्कचिल्लुप्यते
नो वृद्धिर्गुणबाधिका न पुरुषः कार्ये क्वचिन्मध्यमः ॥ ९ ॥

श्रीहर्षपण्डितस्य।

अत्युच्चाः परितः स्फुरन्ति गिरयः स्फारास्तथाऽम्भोधय-
स्तानेतानपि बिभ्रती किमिति न क्लान्ताऽसि तुभ्यं नमः।
आश्चर्येण पुनः पुनः स्तुतिमिति प्रस्तौमि यावद्भुव-
स्तावद्बिभ्रदिमां स्मृतस्तव भुजो वाचस्ततो मुद्रिताः ॥ १० ॥

श्रीहनूमतः।

उन्मीलन्मणिरश्मिजालजटिलच्छायं रणत्कङ्कणं
बिभ्राणस्तव देव वैरिकदनक्रीडाकठोरः करः।
त्यक्त्वा संयति जीवितानि रिपवो ये स्वर्गमार्गे गता-
स्तानाक्रष्टुमिवाविवेश रभसाच्चण्डद्युतेर्मण्डलम् ॥ ११ ॥

श्रीमुरारेः।

केषां त्वच्चरितैर्निसर्गशुचिभिश्चेतो न चित्रीयते
नान्यस्यापि मनाङ्मलीमसतया यैस्संस्तवस्सह्यते।
पश्योल्लासितसन्तताश्रुसरितामेषां द्विषन्नायिका-
नेत्रेष्वञ्जनमञ्जुतामलिनतां मार्ष्टुं कियानुद्यमः ॥ १२ ॥

मुक्ताकणस्य।

आलानं जयकुञ्जरस्य दृषदां सेतुर्विपद्वारिधेः
पूर्वाद्रिः करवालचण्डमहसो लीलोपधानं श्रियः।
संग्रामामृतसागरप्रमथनक्रीडाविधौ मन्थरो
राजन् राजति वैरिवीरवनितावैधव्यदस्ते भुजः॥ १३॥

भट्टश्यामलस्य।

आबाल्याधिगमान्मयैव गमितः कोटिं परामुन्नते-
रस्मत्संकथयाऽपि पार्थिवपतिः संप्रत्यहो लज्जते।
इत्थं रुष्ट इवात्मजेन यशसा दत्तावलम्बोऽम्बुधेः
पारे तीरतपोवनानि भजते वृद्धो गुणानां गणः॥ १४॥

श्रीहनूमतः।

देव त्वद्गुणकीर्तनेन सुखयत्याखण्डलं नारदे
किन्तु श्रोत्रकटु क्वणन्ति मधुपास्ते पारिजातस्रजः।
वार्यन्ते यदि वाऽप्सरोभिरभितस्ते चामराडम्बरै-
रुद्वेल्लद्भुजवल्लिकङ्कणझणत्कारस्तथा दुःश्रवः॥ १५॥

कस्यापि।

स्वर्गाद्गोपाल कस्माद्व्रजसि सुरमुने भूतले कामधेनो-
र्वत्सस्यानेतुकामस्तृणचयमधुना मुग्ध दुग्धं न तस्याः।
श्रुत्वा श्रीभोजदेवक्षितिपवितरणं व्रीडशुष्कस्तनी सा
तर्हि व्यर्थः प्रयासस्तदपरमखिलं चर्वितं तत्सपत्नैः॥ १६॥

संख्यातुं यदि दानमस्य नृपतेः कौतूहलादीहसे
तत्पूर्वं कति वालुकाः कथय भोः स्ववाहिनीरोधसः।
कुण्ठश्चेदसि तत्र कर्मणि तव भ्रातस्तदानीमसौ
कूपातिक्रमकातरस्य जलधिप्रोल्लङ्घनायोद्यमः॥ १७॥

लूतासूत्रपिनद्धजीर्णपटलच्छिद्रेष्वलब्धान्तरै-
र्येषां वेश्मसु नेन्दुधामभिरपि व्यालुप्तमन्धं तमः।
तेषां त्वन्मुखवीक्षणेन सुधियां सौधेषु मुग्धाङ्गना-
कर्णेन्दीवरताडनेऽप्यविकलै रत्नैः प्रदीपायितम्॥ १८॥

गेल्हुकस्यैतौ।

१ कुत्र व्र. क. पाठभेद.

मुक्ताः केलिविसूत्रहारगलिताः सम्मार्जनीभिः कृताः
प्रातः प्राङ्गणसीम्नि मन्थरचलद्बालाङ्घ्रिलाक्षारुणाः ।
दूराद्दाडिमबीजशङ्कितधियः कर्षन्ति केलीशुकाः
यद्विद्वद्भवनेषु देव भवतस्तत्त्यागलीलायितम् ॥ १९ ॥

दरिद्रान् सृजतो धातुः कृतार्थान् कुर्वतस्तव ।
श्रीकीर्तीश न जानीमः कः श्रमेण विरंस्यति ॥ २० ॥

कयोरप्येतौ ।

सुतलं चरणद्वन्द्वं पृथ्वी[1] जघनमण्डली ।
यत्कीर्तेर्मध्यमाकाशः सुमनोवासभूः शिरः ॥ २१ ॥

लघुवल्लभवासुदेवस्य ।

अध्याहारः स्मरहरशिरश्चन्द्रशेषस्य शेष-
स्याहेर्भूयः फणसमुचितः काययष्टीनिकायः ।
दुग्धाम्भोधेर्मुनिचुलकनत्रासनाशाभ्युपायः
कायव्यूहः क्व जगति न जागर्त्यदःकीर्तिपूरः ॥ २२ ॥

आस्ते दामोदरीयामियमुदरदरीं याऽवलम्ब्य त्रिलोकी
संमातुं शक्नुवन्ति[2] प्रथिमभरवशादत्र नैतद्यशांसि ।
तामेतां पूरयित्वा निरगुरिव मधुध्वंसिनः पाण्डुपद्म-
च्छद्मापन्नानि तानि द्विपदशनसनाभीनि नाभीपथेन ॥ २३ ॥

अन्तःसन्तोषबाष्पैः स्थगयति न दृशस्ताभिराकर्णयिष्य-
न्नङ्गे नानस्तिरोमा रचयति पुलकश्रेणिमानन्दकन्दाम् ।
न क्षोणीभङ्गभीरुः कलयति च शिरःकम्पनं तन्न विद्मः
शृण्वन्नेतस्य कीर्तीः कथमुरगपतिः प्रीतिमाविष्करोति ॥ २४ ॥

भूशक्रस्य यशांसि विक्रमभरेणोपार्जितानि क्रमा-
देतस्य स्तुमहे महेभदशनस्पर्धीनि कैरक्षरैः ।
लिम्पद्भिः कृतकं कृतोऽपि रजतं राज्ञां यशःपारदै-
रस्य स्वर्णगिरिः प्रतापदहनैः स्वर्णं पुनर्निर्मितः ॥ २५ ॥

खण्डनकारश्रीहर्षस्यैते ।

१. पृथिवी जघनस्थली. क. ख. च. २ शक्तिमान्ति. क. ख. च.

स्तनयुगमश्रुस्नातं समीपतरवर्ति हृदयशोकाग्नेः ।
चरति विमुक्ताहारं व्रतमिव भवतो रिपुस्त्रीणाम् ॥ २६ ॥

भट्टबाणस्य ।

शत्रूणामयशो यशश्च भवतः श्यामं च शुक्लं च यत्
व्याप्य द्यां च दिशश्च देव रभसादासागरं गच्छतः ।
दृष्ट्वा तत्सहसा कलिन्दतनयामन्दाकिनीसङ्गम-
भ्रान्त्या स्नान्ति मुधैव मुग्धमुनयो मृद्दर्भगर्भैः करैः ॥ २७ ॥

रिस्सुकस्य ।

भ्रान्त्वा दिग्वलयं क्षितीश्वर दिवं त्वत्कीर्तिहंसी गता
साऽपि ब्रह्ममरालसंगतिवशात्तत्रैव गर्भिण्यभूत् ।
पश्य व्योमतरङ्गिणीपरिसरे कुन्दावदातं तया
मुक्तं भाति विशालमण्डकमिदं शीतद्युतेर्मण्डलम् ॥ २८ ॥

श्रीहनूमतः ।

मुक्ताबीजात्प्रसूता रणभुवि निहताराातिमत्तेभकुम्भ-
स्रस्ताद्दिङ्नागदन्तैर्नि[1]हितशतशिफा स्थूलभोगीन्द्रकन्दा ।
विस्फूर्जत्तारतारागणकुसुमचया वर्धिता दानतोयै-
र्देव त्वत्कीर्तिवल्ली नवकफलमिदं चन्द्रबिम्बं बिभर्ति ॥ २९ ॥

वीर क्षीरसमुद्रसान्द्रलहरीलावण्यलक्ष्मीमुष-
स्त्वत्कीर्तेस्तुलनां कलङ्कमलिनो धत्तां कथं चन्द्रमाः ।
स्यादेवं त्वदरातिसौधशिखरप्रोद्भूतदूर्वाङ्कुर-
ग्रासव्यग्रमतिः पतेद्यदि परं तस्याङ्कशायी मृगः ॥ ३० ॥

यः कालः केरलानां निजकुलधवलो धर्मशास्त्रेषु रक्तः
पीतः स्त्रीनेत्रनालैरपि जगति चतुर्वर्णविश्रामभूमिः ।
चञ्चच्चण्डीशहासप्रमुदितकुमुदश्रेणिशीतांशुगौरैः
स्वैः स्वामिन् कीर्तिपुञ्जैः कथमसि कृतवानेकवर्णं जगत्त्वम् ॥ ३१ ॥

---

१. विं. क. पाठभेदः

कर्कन्धूफलमुच्चिनोति शबरी मुक्ताफलाकाङ्क्षया
गृध्रोलूककदम्बकस्य पुरतः काकोऽपि हंसायते।
कीर्त्या ते धवलीकृते त्रिभुवने क्ष्मापाल लक्ष्मीः पुनः
कृष्णं वीक्ष्य बलोऽयमित्युपहितव्रीडं शनैर्जल्पति ॥ ३२ ॥

देव त्वं मलयाचलोऽसि भवतः श्रीखण्डशाखी भुज-
स्तस्मिन् कालभुजङ्गमो निवसति स्फूर्जत्कृपाणच्छलात्।
एष स्वाङ्गमनर्गलं रिपुतरुस्कन्धेषु संघट्टयन्
दीर्घं व्योमविसारि निर्मलयशोनिर्मोकमुन्मुञ्चति ॥ ३३ ॥

चिन्तागम्भीरकूपादनवरतचलद्भूरिशोका [र] घट्ट-
व्याकृष्टं निश्श्वसन्त्यः पृथुनयनघटीयन्त्रमुक्ताश्रुधारम्।
नासावंशप्रणालीविषमपथपतद्बाष्पपानीयमेत-
द्देव त्वद्वैरिनार्यः स्तनकलशयुगेनाविरामं वहन्ति ॥ ३४ ॥

यथा यथा नाथ यशो विवर्धते सितां त्रिलोकीमिव कर्तुमुद्यतम्।
तथा तथा मे हृदयं विदूयते प्रियालकालीधवलत्वशङ्कया ॥ ३५ ॥

गीतं प्रभो तव यशस्त्रिदशाङ्गनाभिः शृण्वन्नतृप्तिचपलः सुरलोकपालः।
पूर्वं विलोचनसहस्रकरीमहल्यां भूयोऽपि चिन्तयति कर्णसहस्रकामः ॥ ३६ ॥

केषामप्येते।

यस्याधो गगनं रसातलमुपर्यम्भोधयोऽभ्यन्तरे
यत्प्राक्पश्चिमदक्षिणोत्तरदिशः कृत्वाऽन्यथा वर्तते।
यस्य ध्वान्तमनुष्णरश्मिरुचयो नीलास्तथाऽर्कोपला
देव त्वद्यशसोऽद्भुताद्भुवनतस्तस्य स्तुतौ के वयम् ॥ ३७ ॥

चित्तपस्य।

कृत्वा कीर्तितटाकमद्भुततरं दूरे स्थितं वाक्पते-
र्वाचामप्यभवत्त्रपाकुलमतिर्यो युक्तमेतद्यशः (तः?)।
यत्र क्वाप्यनुमीयते न भुवनं नो पुष्करं नो चरन्
हंसो न द्विजराजमण्डलमहो विभ्राजमानं जनैः ॥ ३८ ॥

वैद्यभानुपण्डितस्य।

मातुः खेदमयं ततान पृथुकः क्रोडेऽपि धात्र्याश्चरन्
　　रागाढ्यस्तरुणः पुरन्दरपुरश्रीन्यस्तकण्ठग्रहः ।
ज्यायानप्यभजत्पितामहपदं नित्याविनीतस्तनू-
　　जन्मा ते यशसां गणस्तदुचितव्रीडोऽसि तत्कीर्तनात् ॥ ३९ ॥

हनूमतः ।

खद्योतद्युतिमातनोति सविता जीर्णोर्णनाभालय-
　　च्छायामाश्रयते शशी मशकतामायान्ति यत्राद्रयः ।
इत्थं वर्णयतो नभस्तव यशोजातं स्मृतेर्गोचरं
　　तद्यस्मिन् भ्रमरायते नरपते वाचस्ततो मुद्रिताः ॥ ४० ॥

कुमुदचन्द्रस्य ।

दिग्वारणे सुरवधूपरिगीयमानयुष्मद्यशःश्रवणनिश्चलकर्णताले ।
निर्विघ्नमापिबति भृङ्गकुलं मदाम्बु कल्याणमावहति कस्य न चेष्टितं ते ॥४१॥

जितमन्योः ।

सिद्धाङ्गनास्तव यशांसि रतान्तरेषु गायन्ति येन रतखेदमपाकरोति ।
उत्सङ्गसङ्गतकुरङ्गकरोमहर्षघर्षस्रवन्नवघनामृतबिन्दुरिन्दुः ॥ ४२ ॥

उग्रग्राहमुदन्वतो जलमतिक्रामत्यनालम्बने
　　व्योम्नि भ्राम्यति दुर्गमं क्षितिभृतां प्राग्भारमारोहति ।
कीर्णं याति विषाकुलैरहिकुलैः पातालमेकाकिनी
　　कीर्तिस्ते नयनाभिराम कृतकं मन्ये भयं योषिताम् ॥ ४३ ॥

त्रिल्हणस्यैतौ ।

निस्सृत्याहवसागरादनु पुनः संसृत्य पृथ्वीतलं
　　कृत्वाधो हिमशैलमीश्वरशिरःशीतांशुलेखामपि ।
गङ्गेव स्मृतजन्मभूमिरमरैः साश्चर्यमालोकिता
　　त्वत्कीर्तिः प्रतिलोम लङ्घितवती ब्रह्माण्डमारोहति ॥ ४४ ॥

धर्माशोकस्य ।

---

1. क.

सिन्दूरं सीमन्तात् स्मितं मुखाद्वैरिराजवनितानाम्।
यस्य प्रतापयशसी हरतः स्म समानदृग्गुणासहने ॥ ४५ ॥

वैद्यनाथप्रशस्तेः।

अत्युक्तौ यदि न प्रकुप्यसि मृषावादं न चेन्मन्यसे
तद्ब्रूमोऽद्भुतकीर्तनाय रसना केषां न कण्डूयते।
देव त्वत्तरुणप्रतापदहनज्वालावलीशोषिताः
सर्वे वारिधयस्त्वदारिवनितानेत्राम्बुभिः पूरिताः ॥ ४६ ॥

गुणेश्वरस्य।

कूर्मः पादोऽस्य यष्टिर्भुजगपतिरसौ भाजनं भूतधात्री
तैलोत्पूराः समुद्राः कनकगिरिरयं वृत्तवर्तिप्ररोहः।
अर्चिश्चण्डांशुरोचिर्गगनमलिनिमा कज्जलं दह्यमानः
शत्रुश्रेणी पतङ्गो ज्वलति रघुपते त्वत्प्रतापप्रदीपः ॥ ४७ ॥

चित्तपस्य।

तादृग्दीर्घविरिञ्चिवासरविधौ जानामि यत्कर्तृतां
शङ्के यत्प्रतिबिम्बमम्बुधिपयःपूरोदरे वाडवः।
व्योमव्यापिविपक्षराजकयशस्तारापराभावुकः।
कासामस्य न स प्रतापतपनः पारं गिरां गाहते ॥ ४८ ॥

अस्यासिर्भुजगः स्वकोशसुषिराकृष्टः स्फुरत्क्ष्णिमा
कम्पोन्मीलदरालनीलवलनस्तेषां भिये भूभुजाम्।
सङ्ग्रामेषु निजाङ्गुलीमयमहासिद्धौषधीवीरुधां
पर्वास्ये विनिवेश्य जाङ्गिलकता यैर्नाम नालम्बिता ॥ ४९ ॥

उद्दण्डकोकनदकोमलकोशकान्तिः
कान्ताकचग्रहणकण्टकितप्रकोष्ठः।
मित्रद्विजातिरिपुवर्गविलासिनीनां
सम्मानदानभयभोगकरः करस्ते ॥ ५० ॥

श्रीहर्षस्यैतौ।

तुल्या बाणकृपाणयोरनुगतिः क्षीणा न नौ कुत्रचित्
कोशं मे हरति प्रयच्छति पुनर्लक्षं रणे पत्रिणे।
इत्थं देव कुनायकत्वमसकृद्बुद्ध्वेव युद्धेष्वसिः
कृत्वा सन्धिमुपोढवेपथुरथ क्रोधाद्विवेश द्विषि ॥ ५१ ॥

कस्यापि।

तव दिग्विजयारम्भे बलधूलीबहलकोपजनितेषु।
गगनस्थलेषु भानोश्चक्रमभूदुरो....भिन्नम् ॥ ५२ ॥

रुद्रस्य।

यद्येतत्क्षयवह्निधूमपटलं ज्वालाः किमन्तर्न त-
न्मेघानामियमुन्नतिर्यदि तदा किं नात्र विद्युच्छटा।
ध्वान्तं चेदिदमुद्गतं तदमुना प्रच्छाद्यते किं रविः
यद्यात्रोद्यतधूलिभिर्दिविषदामेवं विकल्पाः कृताः ॥ ५३ ॥

वैद्यश्री(श्रीवैद्य?)नाथप्रशस्तेः।

सप्तानामयुगान्तसङ्गतिरिह स्यादर्णवानां न किं
प्रभ्रश्यत्क्षितिगोललोललहरिर्यज्जैत्रयात्रोत्सवे।
न स्याच्चेच्चलितोच्चकन्धरहरिव्यूहप्रकामोच्चल-
द्धूलीजालनिबद्धपङ्कपटलीसंस्त्यायमेषां पयः ॥ ५४ ॥

भेरीभाङ्कारस्य।

यद्यात्रासु प्रचुरतुरगश्रेणिवल्गत्खुराग्रैः
प्रोद्यद्धूलीपटलपिहितः खे न नष्टः खरांशुः।
तन्मन्येऽहं भुवनविवरव्यापिनस्तूर्यघोषा-
त्त्रस्तैरश्वैरपहृतरथः क्वापि नीत्वा निरस्तः ॥ ५५ ॥

आदित्यभट्टस्य।

तुरगखरखुरोत्थैर्मांसलैः पांसुपूरै-
र्गगनमपि तथाऽभूदाकुलं तस्य युद्धे।
न निपतति यथाऽस्मादन्तराले निरुद्धा
कुसुमनिकरवृष्टिः स्वर्वधूभिर्विमुक्ता ॥ ५६ ॥

श्रीवैद्यभानुपण्डितस्य।

१ म. क. ख. च. २. द्धत. क पाठभेदः

यस्याशाविजये तुरङ्गमखुरक्षुण्णक्षमामण्डल-
क्षोदोद्भूतरजःपरागपटले दिक्चक्रमाक्रामति।
अक्ष्णां पङ्क्तिशतानि निन्दति निजं हस्तद्वयं निन्दति
त्वां निन्दत्यनिमेषतां परिपतद्बाष्पाम्बुपूरो हरिः॥ ५७॥

देव त्वद्विजयप्रयाणसमये गम्भीरभेरीरवा-
नाकर्ण्यारिमहीभुजां प्रविशतां दुर्गां वनान्तःस्थलीम्।
फाल[प्रान्ते]विलग्नकण्टकतरुव्याजेन[1] राज्याक्षर-
श्रेणीमात्मकृतां निकृन्तति भवद्भीत्या विहस्तो विधिः॥ ५८॥

देव त्वद्विजयप्रयाणसमये सद्वाजिराजीखुर-
क्षुण्णक्ष्मातलपीनपांसुपटलव्याप्तानिमेषेक्षणः।
सुत्रामा बहु मन्यते फणिपतिं पातालमूलस्थितं
सोऽप्युद्दामकरीन्द्रदुर्धरभराक्रान्तः सहस्रेक्षणम्॥ ५९॥

केषामप्येते।

श्रुत्वा त्वां सहसाऽऽगतं निजपुरात्त्रासेन निर्गच्छतां
शत्रूणामवरोधनैर्जललवप्रस्यन्दनश्यत्पुटाः।
शुभ्रे सद्मनि पल्लविन्युपवने वाप्ये नवाम्भोरुहे
क्रीडाद्रौ च सशाद्वले विवलितग्रीवं विमुक्ता दृशः॥ ६०॥

धनपालस्य।

असिन्दूरश्च सीमन्तो माऽभून्नो योषितामिति।
अतः परिहरन्त्याजावसिं दूराच्च तेऽरयः॥ ६१॥

कस्यापि।

हारानाहर देव चन्द्रधवलान्नो चेत्पयोधेस्तटीं
संप्राप्ते त्वयि सैन्यवारणगणैर्मज्जद्भिराक्षोभितम्।
सिन्दूरारुणमम्बु मेघपटलैः पीत्वोज्झितं शुक्तिषु
स्वल्पैरेव दिनैः करिष्यति महीमाताम्रमुक्ताफलाम्॥ ६२॥

धर्मदेवस्य।

१. व्याज. क. ख. च.

राज्ञामस्य शतेन किं कलयतो हेतिं शतघ्नीं कृ[तं][1]-

[लैं][2]क्षैर्लक्षभिदो दृशैव जयतः पद्मानि पद्मैरलम्।

कर्तुं सर्वपरच्छिदः किमपि नो शक्यं परार्धेन वा

तत्सङ्ख्यापगमं विनाऽस्ति न गतिः काचिद्धतैतद्द्विषाम् ॥ ६३ ॥

अस्यारिप्रकरश्शरश्च नृपतेः सङ्ख्ये पतन्तावुभौ

सीत्कारं च न संमुखं रचयतः कम्पं च न प्राप्नुतः।

तद्युक्तं न पुनर्निवृत्तिरुभयोर्जागर्ति यन्मुक्तयो-

रेकस्तत्र भिनत्ति मित्रमपरश्चामित्रमित्यद्भुतम् ॥ ६४ ॥

यः पृष्ठं युधि दर्शयत्यरिभटश्रेणीषु यो वक्रता-

मस्मिन्नेव बिभर्ति यश्च किरति क्रूरध्वनिर्निष्ठुरः।

दोषं तस्य तथाविधस्य भजतश्चापस्य गृह्णन् गुणं

विख्यातः स्फुटमेक एष नृपतिः सीमा गुणग्राहिणाम् ॥ ६५ ॥

ऋजुत्वमौनश्रुतिपारगामिता यदीयमेतत् परमेव हिंसितुम्।

अतीव विश्वासविधायि चेष्टितं बहुर्महानस्य स दाम्भिकः शरः ॥ ६६ ॥

श्रीहर्षपण्डितस्यैते।

त्वन्निस्त्रिंशहतोद्धतैररिशिरश्चक्रैर्बभूव क्षणं

लोके चान्द्रमसे विधुन्तुदघटावस्कन्दकोलाहलः।

किञ्चामीभिरपि स्फुरन्मुखतया शीतांशुकोटिभ्रमं

बिभ्राणैरजनिष्ट राहुभुवने भूयान् सुभिक्षोत्सवः ॥ ६७ ॥

कस्यापि।

देव स्वस्तुतिरस्तु नाम हृदि वः सर्वे च[3] सन्त्यागमा-

स्तीर्थं न क्वचिदीदृशं भवति किं त्वत्खड्गधारा यथा।

यामेकस्स्वशरीरसिद्धिरसिको मूर्ध्नि प्रतीच्छन् क्षणं

द्वैविध्यादनु पञ्चतां तदनु च त्रैदश्यमाप क्षणात् ॥ ६८ ॥

धर्माशोकस्य।

१ ते. क. ख. च. २ लै. क. ख. च. ३ व. क. पाठभेदः

चापस्तेन निपीडितो रणरसः सद्योऽगलद्विद्विषां
दूराकृष्टिरकारि तेन धनुषो निष्पन्दताऽभूद्द्विषाम्।
लक्षं प्राप्यत मार्गणैः परबले तस्याभवत्तद्यशः
पञ्चत्वं रिपुषु स्थितं स नृपतिर्लेभे न सङ्ख्यान्तरम्॥ ६९॥

सुबन्धोः।

आत्ते सीमन्तरत्ने मरकतिनि हृते हेमताटङ्कपत्रे
लुप्तायां मेखलायां झटिति मणितुलाकोटियुग्मे गृहीते।
शोणं बिम्बोष्ठकान्त्या त्वदरिमृगदृशामित्वरीणामरण्ये
राजन् गुञ्जाफलानां स्रज इति शबरा नैव हारं हरन्ति॥ ७०॥

परिमलस्य।

कान्तारे दैवगत्या कथमपि गलितान्यन्तरालोत्य(क्य?) भक्ष्या-
ण्युड्डीयोड्डीय भूयस्तरुशिखरशिखामेव तेभ्यः श्रयन्ते।
इत्थं त्वद्वैरिनारी गिरिषु नरपते जम्बुलम्बीकदम्ब-
भ्रान्त्या भर्तुर्बुभुक्षोः कथयति पुरतश्चेष्टितं षट्पदानाम्॥ ७१॥

अरसीठक्कुरस्य।

घ्रातं तालफलाशया स्तनयुगं बिम्बभ्रमेणाधरो
दष्टः पाकविकीर्णदाडिमधिया लीढाः स्फुरन्तो रदाः।
क्षुत्क्षामैर्विफलश्रमैरिति वने त्वद्वैरिवीराङ्गना
निद्राणा मुहुरादृता मुहुरपि क्षिप्ताश्च शाखामृगैः॥ ७२॥

उमापतिधरस्य।

क्रामन्त्यः क्षतकोमलाङ्गुलिगलद्रक्तैः सदर्भाः स्थलीः
पादैः पातितयावकैरिव गलद्बाष्पाम्बुधौताननाः।
भीता भर्तृकरावलम्बितकरास्त्वच्छत्रुनार्योऽधुना
दावाग्निं परितो भ्रमन्ति पुनरप्युद्यद्विवाहा इव॥ ७३॥

कस्यापि।

दिश गतिमतिशीघ्रां त्वं मृगि द्राग्गृहाण
श्वसनचलितनीलाम्भोजलीलादृशं स्वाम्।
इति पथि विलपन्ती प्रान्तराक्रान्तखिन्ना
त्वदसिनिहतवैरिप्रेयसी कैर्न दृष्टा ॥ ७४ ॥

श्रीवैद्यभानुपण्डितस्य।

[आ][1]च्छिद्य प्रियतः कदम्बकुसुमं त्वद्वैरिदारैर्नवं
यात्राभङ्गविधायिनां जलमुचां कालस्य चिह्नं महत्।
हृष्यद्भिः परिचुम्बितं नयनयोर्न्यस्तं हृदि स्थापितं
सीमन्ते निहितं कथंचन ततः कर्णावतंसीकृतम् ॥ ७५ ॥

स्नाताः प्रावृषि वारिवाहसलिलैः संरूढशष्पाङ्कर-
व्याजेनात्तकुशाः प्रणालसलिलैर्दत्त्वा निवापाञ्जलीन्।
प्रासादास्तव विद्विषां परिपतत्कुड्यस्थपिण्डस्थलाः
कुर्वन्ति प्रतिवासरं निजपतिप्रेताय पिण्डक्रियाम् ॥ ७६ ॥

हर्म्याणामुपका(हा?)रकर्म कुसुमैरुत्सङ्गशाखाभृतां
वन्यानां मदशीकरेण करिणां राजाङ्गणाभ्युक्षणम्।
वासो वासगृहेषु धूपशिखया दावाग्निदग्धाङ्कुरो
यस्य प्रागिव सत्क्रिया रिपुगृहे शून्येऽपि संपाद्यते ॥ ७७ ॥

द्वारं खड्गिभिरावृतं बहिरपि प्रक्लिन्नगण्डैर्गजै-
रन्तः कञ्चुकिभिः स्फुरन्मणिधरैरध्यासिता भूमयः।
आक्रान्तं महिषीभिरेव शयनं त्वद्विद्विषां मन्दिरे
राजन् सैव चिरन्तनप्रणयिनी शून्येऽपि राज्यस्थितिः ॥ ७८ ॥

राजन् राजसुता न पाठयति मां देव्योऽपि तूष्णीं स्थिताः
कुब्जे भोजय मां कुमारसचिवैर्नाद्यापि किं भुज्यते।
इत्थं राजशुकस्तवारिभवने मुक्तोऽध्वगैः पञ्जरात्
चित्रस्थानवलोक्य शून्यवलभावेकैकमाभाषते ॥ ७९ ॥

१ अच्छेद्य. क. ख. अच्छेद्यः च. अच्छिद्य. क. पाठभेदः

कोणे कोङ्कणकः कवाटनिकटे लाटः कलिङ्गोऽङ्गणे
त्वं रे गूर्जर नूतनो मम पिताऽप्यत्रोषितः स्थण्डिले ।
इत्थं यस्य विवर्धते निशि मिथः प्रत्यर्थिनां प्रस्तर—
स्थानान्यत्र( त्व ? )भवो विरोधिकलहः कारानिकेतस्थिते ॥ ८० ॥
केषामप्येते ।

॥ इति श्रीमदरोहकभगदत्तजल्हणविरचितायां सूक्तिमुक्तावल्यां राजवर्णनपद्धतिः ॥

---

# क्रियागुप्त्यादिचित्रपद्धतिः ( ९८ )



तत्र क्रियागुप्तम्

पामारोगाभिभूताङ्ग श्लेष्मव्याधिनिपीडित ।
यदि ते जीवितुं वाञ्छा तदहो शीतलं जलम् ॥ १ ॥
( मा पाः इति क्रिया )

प्रावृषि स्फारपर्जन्यगर्जाजुषि मदद्विषि ।
अनेहसि मनोनाथमहं मानवती मुहुः ॥ २ ॥
प्रावृषीति[1] क्रिया ।

आलिङ्ग्य मन्दिरे रम्ये सदानन्दविधायिनि ।
कान्ता कान्तं कुरङ्गाक्षी कुम्भिकुम्भपयोधरा ॥ ३ ॥
असदिति[2] क्रिया ।

कावेरीतीरकर्पूरपरागामोदसोदराः ।
रतिस्वेदलवानेते पुरन्ध्रीणां समीरणाः ॥ ४ ॥
अपुरिति[3] क्रिया ।

अहं च देवनन्दी च कुशाग्रीयधियावुभौ ।
नैव शब्दाम्बुधेः पारं किमन्ये जडबुद्धयः ॥ ५ ॥
ऐवेति[4] क्रिया ।

---

१. वृञ् धातोर्लुङि उत्तमपुरुषैकवचनम् अवृण्पीति । २ षस. स्वप्ने. लङ्. असत् । ३. पाधातोर्लुङि प्रथमपुरुष-बहुवचनान्तम् अपुरिति ४. इण्गतौ.

निधुवनविनोदसमये किमकारि नवोढया पुरो भर्तुः ।
अत्रापि कथितमुत्तरमवबुध्यन्ते नहि भवन्तः ॥ ६ ॥

अत्रापि[1] इति क्रिया ।

स्तनजघनभराभिराममन्दं गमनमिदं मदिरारुणेक्षणायाः ।
कथमिह सहसा विलोकयन्तो मदनशरज्वरजर्झरा युवानः ॥ ७ ॥

न स्तं[2] इति क्रिया । केषामप्येते

कर्मगुप्तम् ।

शीकरासारसंवाही सरोजवनमारुतः ।
प्रक्षोभयति पान्थस्त्रीनिश्वासैरिव मांसलः ॥ ८ ॥

सर इति कर्म ।

करणगुप्तम् ।

पूतिपङ्कमयेऽत्यर्थं कासारे दुःखिता अमी ।
दुर्वारा मानसं हंसा गमिष्यन्ति घनागमे ॥ ९ ॥

दुर्वारा[3] इति करणम् ।

संप्रदानगुप्तम् ।

अम्भोरुहमये स्नात्वा वापीपयसि कामिनी ।
ददाति भक्तिसम्पन्ना पुष्पं सौभाग्यवर्धनम् ॥ १० ॥

अये[4] इति संप्रदानम् ।

अपादानगुप्तम् ।

शिलीमुखैस्त्वया धीर दुर्वारैर्विजितो रिपुः ।
बिभेत्यत्यन्तमलिनो वनेऽपि कुसुमाकुले ॥ ११ ॥

अलिन इत्यपादानम् । धर्मदासस्यैते ।

१, त्रपधातोः कर्मणि लुङ् । २ स्त न इति पदच्छेदः ३. दुर्वारा. दुष्टजलेन. ४. इः–कामः तस्मै अये.

अधिकरणगुप्तम् ।

क वसन्ति श्रियो नित्यं भूभृतां वद कोविद ।
असावतिशयः कोऽपि यदुक्तमपि नोह्यते ॥ १२ ॥

असौ[1] इत्यधिकरणम् । वाग्भटस्य ।

संबोधनगुप्तम् ।

वट[2]वृक्षो महानेष मार्गमावृत्य तिष्ठति ।
तावदत्रैव तिष्ठामि यावदन्यत्र यास्यति ॥ १३ ॥

वटो इति संबोधनम् ।

पिबतस्ते शरा[3]वेण वारि कल्हारशीतलम् ।
केनेमौ दुर्विदग्धेन हृदये सन्निवेशितौ ॥ १४ ॥

एणेति संबोधनम् । कयोरप्येतौ ।

को वा दग्धस्त्रिपुरजयिना कश्च कर्णस्य हन्ता
नद्याः कूलं विघटयति कः कः परस्त्रीरतश्च ।
कः संग्रामे परिभवकरो भूषणं किं कुचानां
को दुस्सङ्गे भवति महतां मान[4]पूजापहारः ॥ १५ ॥

कीदृक्षो भवति जनः क्षितौ सुखाशः
कः कालो विदित इहान्धकारहेतुः ।
कः प्रेयान् कुमुदवनस्य को निहन्ति
भ्रातृव्यं वद शिरसा जितस्त्वया कः ॥ १६ ॥

विधुरै[5]विरहितः ।

संबन्धगुप्तम् ।

न मया गोरसाभिज्ञं चेतः कस्मात्प्रकुप्यसि ।
अस्थानरुदितैरेभिरलमालोहितेक्षणे ॥ १७ ॥

१. असौ. खड्गे. २. वटो–ऋक्षः इति पदविभागः. ३ शरौ एण इति पदविभागः. ४. मारः नरः पूरः जारः परः हारः मानपूजापहारः इति क्रमात् प्रतिवचनानि बोध्यानि. ५ विधुरो विरहितश्च, विधु-रवि-रहितः, विधुः, अविः, अहितः, इति क्रमेण प्रतिवचनानि ।

मे आगः इति संबन्धः । दण्डिनः ।

पानीयं पातुमिच्छामि त्वत्तः कमललोचने ।
यदि दास्यासि नेच्छामि नो दास्यासि पिबाम्यहम् ॥ १८ ॥

दासी असीति गूढम् ।

कान्तयाऽनुगतः कोयं पीनस्कन्धो मदोद्धतः ।
मृगाणां पृष्ठतो याति शंबरो रूढयौवनः ॥ १९ ॥

शम्बर इति बिन्दुच्युतकम् ।

काले विद्युत्प्रभाजाले शिखिताण्डवमण्डिते ।
कान्तः सर्वजनाभीष्टो बा[१]लेन्दुः खे न लभ्यते ॥ २० ॥

बालेन्दुरिति बिन्दुच्युतकम् । केषामप्येते ।

महानपि सुवीरोऽपि बहुरत्नयुतोऽपि सन् ।
विरसः कुपरीवारो दीनः केनोपसेव्यते ॥ २१ ॥

नदीन इत्यक्षरगुप्तम् ।

सत्यशीलदयोपेतो दाता शुचिरमत्सरः ।
इनः सर्वात्मना सेव्यः पदमुच्चैरभीप्सता ॥ २२ ॥

जिन इति व्यञ्जनच्युतकम् । सर्वदासस्यैतौ

प्रश्नोत्तरभेदाः ॥

काऽहमस्मि गुहा वक्ति प्रश्नेऽमुष्मिन् किमुत्तरम् ।
क[२]थमुक्तं न जानासि कदर्थयसि यत् सखे ॥ २३ ॥

दर्यसीत्येतत्प्रतिवचनम् ।

श्लोके[३]ऽत्रादौ विनिर्दिष्टं विजानन्ति महाधियः ।
कुतः कस्मिन् समुत्पन्ने सरागं भुवनत्रयम् ॥ २४ ॥

आत्औ इति च प्रतिवचनम् ।

---

१. बाले-दुःखेन इति पदविभागः २. क–थ–मुक्तम् ककारथकाराभ्यां रहितं कदर्थयसीति पदम् दर्यसीति पर्यवस्यति । ३. आदौ–आत् औ इति पदच्छेदः, अः–विष्णुः, तस्मात्, कुतोभुवनत्रयमित्यस्य प्रश्नस्येदं प्रतिवचनम्, इः–कामः, तस्मिन्, कस्मिन् समुत्पन्ने सरागं भुवनत्रयमित्यस्य प्रश्नस्येदं प्रतिवचनम् ।

भद्र माणवकाख्याहि कीदृशः खलु ते पिता।
वातान्दोलितकल्लोलः कीदृशश्च महोदधिः॥ २५॥

अत्र मज्[1]जन्मकरः।

कां हरिरभ[2]रत् सूकररूपः कामरिरहितामिच्छति भूपः।
केनाकारि च मन्मथजननं केन विराजति तरुणीवदनम्॥ २६॥

अत्र कु[3]ङ्कमेनेति।

विभूषणं किं कुचमण्डलानां कीदृश्युमा चन्द्रमसः कुतो भाः।
सीता कथं रौति दशास्यनीता हा[4]राम हादेवर तात मातः॥ २७॥

केषामप्येते।

कः खे गच्[5]छति का रम्या का जप्या किं विभूषणम्।
को वन्द्यः कीदृशी लङ्का वीर[6]मर्कटकम्पिता॥ २८॥

का लक्ष्मीः पदमुन्नतं किमु पदं यद्गौरवं स्वामिनः
किं तद्गौरवमन्तरायरहिताऽपूर्वैव गुर्वी स्थितिः।
का चासौ स्थितिरात्मभूषणपरव्यापारसंभावना
कस्यैतत्सकलं समस्ति शशिनः श्रीकण्ठचूडामणेः॥ २९॥

विद्येशस्य।

अथ प्रहेलिका

सर्वस्वापहरो न दस्युकुलजः खट्वाङ्गभृन्नेश्वरो
दोषानिष्टकरो न धर्मनिरतः कीलालपो नासुरः।
नृणां पृष्ठपलाशनो न पिशुनः शीघ्रंगमो नो हयः
शश्वद्रात्रिचरो न राक्षसगणः कोऽयं सखे ब्रूहि मे॥ ३०॥

मत्कुणः। धनञ्जयस्य।

---

१. मत् जन्म करः–मम जन्मनः कारणभूत इति प्रथमप्रश्नप्रतिवचनम् मज्जन् मकर इति द्वितीयप्रश्नस्य प्रतिवचनम्। २ बभार हर. क. ख. च. ३. कुम्, कुम्, एन, कुङ्कुमेन, इति क्रमात्प्रतिवचनानि. ४ हाराः, महादेवरता, तमातः–निशातः, हा राम हा देवर तात मातः, इति क्रमात्प्रतिवचनानि. ५. चरति. क. पाठभेदः, ६. विः, रमा, ऋक्, कटकम, पिता, वीरमर्कटकम्पिता, इति क्रमात्प्रतिवचनम्।

या मौनेन विरौति दुर्बलतया बध्नाति मेरुं गले
  श्रान्ता धावति पर्वतेषु तृषिता ग्रीष्मे मरौ लीयते ।
शीतार्ताऽप्सु निमज्जते हुतवहं घर्मातुरा सेवते
  नग्ना नेच्छति चाम्बरं वद सखे किं नाम नार्या भवेत् ॥ ३१ ॥

( छाया )

अनेकसुषिरं कान्तं वादि स्त्री[1]मुखपङ्कजम् ।
पश्य कान्ते वनस्यान्ते नेत्रश्रुतिमनोरमम् ॥ ३२ ॥

( वल्मीकम् )

अप्यत्युच्चो[2] भूमिसमः पार्थिवोऽपि न पार्थिवः ।
मानार्थं जीवितं तस्य कृते माने न जीवति ॥ ३३ ॥

प्रमाणार्था समुन्नता भूः ।

कामुज्जहार हरिरम्बुधिमध्यलग्नां
  किं दुः(वि)श्रुतं भवति निर्मलमागमानाम् ।
आमन्त्रयस्व वनमग्निशिखावलीढं
  य(त?)चापि का(को?)दहति के मदयन्ति भृङ्गान् ॥ ३४ ॥

कुन्द[3]मकरन्दबिन्दवः । केषामप्येते ।

दृष्टं न दृश्यते स्पष्टं वक्ति न श्रूयते ध्वनिः ।
चेष्टते जीवहीनोऽपि कथ्यतां यदि कौशलम् ॥ ३५ ॥

( दर्पणच्छाया ) भट्टसोमेश्वरस्य ।

अथाभाणकः

बहुक्लेशेऽल्पफलदे कार्ये भाव्यं न सादरैः ।
विदार्य गिरिशृङ्गाणि मूषकाकर्षणेन किम् ॥ ३६ ॥

१. श्री. क. पाठभेदः २. अत्युच्चोऽपि. क. ख. च. ३. कुम्, दमकरम् दविन्, कुन्दमकरन्दबि[illegible]नि क्रमात् प्रतिवचनम्

पूर्वमेव परीक्ष्यं स्याद्व्रीडाकरमिदं न वा।
नृत्ते तु संप्रवृत्तस्य शिरःप्रावरणेन किम् ॥ ३७ ॥

रत्नघोषस्यैतौ।

महता पीडितो भूयः कुर्यादेव तदाश्रयम्।
अग्निरेवाग्निदग्धस्य भेषजं लोकविश्रुतम् ॥ ३८ ॥
निजामशक्तिं जानानो नावष्टम्भं त्यजेन्नरः।
जरत्फणिफणाटोपो दंष्ट्राहीनोऽपि भीषणः ॥ ३९ ॥

भगवतो व्यासस्यैतौ।

यावत्स्वस्थमिदं शरीरमरुजं यावच्च दूरे जरा
यावच्चेन्द्रियशक्तिरप्रतिहता यावत् क्षयो नायुषः।
आत्मश्रेयसि तावदेव विदुषा कार्यः प्रयत्नो महान्
संदीप्ते भवने तु कूपखननप्रत्युद्यमः कीदृशः ॥ ४० ॥

कस्यापि।

॥ इति श्रीमदारोहकभगदत्तजल्हणविरचितायां सूक्तिमुक्तावल्यां क्रियागुप्त्यादिचित्रपद्धतिः ॥



# वक्रोक्तिपद्धतिः ( ९९ )



धन्या केयं स्थिता ते शिरसि शशिकला किं नु नामैतदस्या
नामैवास्यास्तदेतत्परिचितमपि ते विस्मृतं कस्य हेतोः ।
नारीं पृच्छामि नेन्दुं कथयतु विजया न प्रमाणं यदीन्दु-
र्देव्या निह्नोतुमिच्छोरिति सुरसरितं शाठ्यमव्याद्विभोर्वः ॥ १ ॥

केयं मूर्ध्न्यन्धकारे तिमिरमिह कुतः सुभ्रु कान्तेन्दुयुक्ते
कान्ताऽप्यत्रैव कामिन्ननु भवति मया पृष्टमेतावदेव ।
नाहं द्वन्द्वं करोमि व्यपनय शिरसस्तूर्णमेनामिदानी-
मेवं प्रोक्तो भवान्या प्रतिवचनजडः पातु वो मन्मथारिः ॥ २ ॥

नादेयं किमिदं घटस्थमुदकं नादेयमेवोह्यते
तत्किं नाम पिबामि कत्यपतृषः पीतेन नाम्नाऽभवन् ।
किं वर्णा अपि सन्ति नाम्नि न[२] च किं किं तैरलं त्वं कुतो
यस्मादेव भवान् भगिन्यासि ततस्तेनैव मां बाधसे ॥ ३ ॥

वर्षाकाले सांप्रतमपतितया नैव शक्येत स्थातुम् ।
उत्कण्ठिताऽसि तरले नहि नहि सखि पिच्छिलः पन्थाः ॥ ४ ॥

यातीतः पान्थ पन्था व्रजति ननु कथं स्थावरं वर्त्म मुग्धे
मार्गं पृच्छामि पृच्छ स्थितमिदमिह ते विस्मितं वीक्ष्य नेत्रे ।
अध्वानं ब्रूह्यपेतध्वनि भवति वचश्चित्रमुद्राष्पनेत्रा
हास्यन्ते भावमूढाः पथि पथिकविटैस्त्वद्विषां नाथ नार्यः ॥ ५ ॥

केषामप्येते ।

१ सत्यं. क. ख. २ बह्वः क. पाठभेदः

किं गौरि मां प्रति रुषा न तु गौरहं किं
कुप्यामि कां प्रति मयीत्यनुमानतोऽहम्।
जानाम्यतस्त्वमनुमानत एव सत्य-
मित्थं गिरो गिरिभुवः कुटिला जयन्ति ॥ ६ ॥

रुद्रस्य।

नगच्छाया हि रम्येयं वसतिः परिगृह्यताम्।
ग्रीष्मे काचिज्जनोपेता पान्थमित्थमजीवयत् ॥ ७ ॥

मकरन्दस्य।

के यूयं स्थल एव संप्रति वयं पश्नो विशेषाश्रयः
किं ब्रूषे विहगस्य वा फणिपतेर्यस्यावतारो हरिः।
वामा यूयमहो विडम्बरसिकः कीदृक् स्मरो वर्तते
येनास्मिन् सुविवेकशून्यमनसां पुंस्येव योषिद्भ्रमः ॥ ८ ॥

॥ इति श्रीमदारोहकभगदत्तजल्हणविरचितायां सूक्तिमुक्तावल्यां वक्रोक्तिपद्धतिः।



# रथवर्णनपद्धतिः ( १०० )

यदालोके सूक्ष्मं व्रजति सहसा तद्विपुलतां
यदर्धे विच्छिन्नं भवति कृतसन्धानमिव तत् ।
प्रकृत्या यद्वक्रं तदपि समरेखं नयनयोः
न मे दूरात्[1] किंचिन्न[2] च भवति पार्श्वे रथजवात् ॥ १ ॥

मुक्तेषु रश्मिषु निरायतपूर्वकाया
निष्कम्पचामरशिखा निभृतोर्ध्वकर्णाः ।
आत्मोद्धतै[3]रपि रजोभिरलङ्घनीया
धावन्त्यमी मृगजवाक्षमयेव रथ्याः ॥ २ ॥

अयमरविवरेभ्यश्चातकैर्निष्पतद्भि-
र्हरिभिरचिरभासां तेजसा चानुलिप्तैः ।
गतमुपरि घनानां वारिगर्भोदराणां
पिशुनयति रथस्ते शीकरक्लिन्ननेमिः ॥ ३ ॥

कालिदासस्यैते ।

विच्छिन्ना रथचक्रपद्धतिरियं हेलाप्लुतैर्वाजिना-
मायान्तीव जवेन सम्मुखममी मार्गस्थिताः शाखिनः ।
खेदं पादतलोद्धतेरिव गतो गन्तुं पुरो नेहते
वाहानामनुकूलमारुतभरान्नीतोऽपि धूलीव्रजः ॥ ४ ॥

आलिङ्गन्ते वसुधां निजखुरदलितामिवानुनेतुममी ।
वदनविनिर्गतचरणा इव संलक्ष्यन्ते जवादश्वाः ॥ ५ ॥

वादीश्वरकाञ्चनस्यैतौ ।

अग्रे यान्ति रथस्य रेणुवदमी चूर्णीभवन्तो घना-
श्चक्रभ्रान्तिररान्तरेषु घटयत्यन्यामिवारावलिम् ।
चित्रन्यस्तमिवाचलं हयशिरस्यायामवच्चामरं
यष्ट्यग्रे च समस्थितिर्ध्वजपटः प्रान्ते च वेगानिलात् ॥ ६ ॥

( कालिदासस्य । )

॥ इति श्रीमदारोहकभगदत्तजल्हणविरचितायां सूक्तिमुक्तावल्यां रथवर्णनपद्धतिः ॥

---

१. दूरे. २. क्षणमपि न. ३. त्थितै. रु. पाठभेदौ.

# गजवर्णनपद्धतिः ( १०१ )

उच्चैःकुम्भः कपिशदशनो बन्धुरस्कन्धसन्धिः
स्निग्धाताम्रद्युतिनखमणिर्लम्बवृत्तोरुहस्तः ।
शूरस्सप्तच्छदपरिमलस्पर्धिदानोदकोऽयं
भद्रः सान्द्रद्रुमगिरिसरित्तीरचारी गजेन्द्रः ॥ १ ॥

कस्यापि ।

भूयस्त्रिभङ्गिकुटिलोन्नमितेन गृह्ण-
न्नग्रेसरं जलमुचामुदकं करेण ।
स्तम्बेरमः प्रतिघनध्वनि बृंहमाणो
धाराहतं गलितधातु शिरो धुनोति ॥ २ ॥

शार्वदासस्य ।

महीचर इवाम्भोदश्चरन्निव महीधरः ।
अयमायाति मातङ्गः स्थिराङ्ग इव सागरः ॥ ३ ॥
राज्ञस्तथा भुजकृपाणशरासनेषु सान्निध्यमस्ति रणरङ्गजयश्रियो न।
दन्तद्वये दलितशात्रवकुम्भिकुम्भमस्तिष्कगन्धिनि यथा मदकुञ्जरस्य ॥ ४ ॥
मेरोः पोतमुदन्वतः प्रतिनिधिं प्रावृण्मुखोत्थायिनां
मेघानां प्रकृतिं युगान्तमरुतामध्यापकं रंहसः ।
पश्यैनं करिणां पतिं घनमदामोदोपहूतानलि-
व्यूहान् कर्णझलज्झलाभिरभितः प्रेङ्खोलयन्तं मुहुः ॥ ५ ॥

सूक्तिसहस्रादेतौ ।

क्षिप्तं पुरो न जगृहे मुहुरिक्षुकाण्डं
नापीक्षते स्म निकटोपगतां करेणुम् ।
सस्मार वारणपतिः परिमीलिताक्ष-
मिच्छाविहारवनवासमहोत्सवानाम् ॥ ६ ॥

माघस्य ।

स्तम्भं महान्तमुचितं सहसा मुमोच
दानं ददावतितरां सहसाग्रहस्तः।
बद्धापराणि परितो निगलान्यलावीत्
स्वातन्त्र्यमुज्ज्वलमवाप करेणुराजः ॥ ७ ॥

तस्यैव।

सिन्दूरद्युतिमुग्धमूर्धनि धृतस्कन्धाव(धि) श्यामिके
व्योमान्तस्पृशि सिन्धुरेऽस्य समरारम्भोद्धुरे धावति।
जानीमोऽनुपदं प्रदोषतिमिरव्यामिश्रसन्ध्याधिये-
वास्तं यान्ति समस्तबाहुजभुजातेजस्सहस्रांशवः ॥ ८ ॥

श्रीहर्षपण्डितस्य।

तीव्राघातप्रतिहततरुस्कन्धलग्नैकदन्तः
क्रोडाकृष्टव्रततिवलयासङ्गसञ्जातपाशः।
मूर्तो विघ्नस्तपस इव नो भिन्नसारङ्गयूथो
धर्मारण्यं प्रविशति गजः स्यन्दनालोकभीतः ॥ ९ ॥

कालिदासस्य।

॥ इति श्रीमदारोहकभगदत्तजल्हणविरचितायां सूक्तिमुक्तावल्यां गजवर्णनपद्धतिः ॥



# अश्ववर्णनपद्धतिः ( १०२ )



कियत्पदं विष्णुपदं क्रमेऽस्य मे धरा वराकी च पयोधिरोधिता ।
इतीव हेलापरिनम्रकन्धरः करोत्ययं मण्डलिकारयं हयः ॥ १ ॥

उमापतिधरस्य ।

अनूनवेगादयमद्वितीयश्च्छायातुरङ्गादिव लज्जमानः ।
खुरोद्धुतैर्वीर तुरङ्गमस्ते रजोभिरङ्गां पतिमावृणोति ॥ २ ॥

प्रज्ञानन्दनस्य ।

आवर्तिनः शुभफलप्रदशुक्तियुक्ताः
सम्पन्नदेवमणयो भृतरन्ध्रभागाः ।
अश्वाः प्यधुर्वसुमतीमतिरोचमाना-
स्तूर्णं पयोधय इवोर्मिभिरापतन्तः ॥ ३ ॥

माघस्य ।

पश्चादङ्घ्री प्रसार्य त्रिकनतिविततं द्राघयित्वाऽङ्गमुच्चै-
रासज्याभुग्नकण्ठो मुखमुरसि सटाधूलिधूम्रां विधाय ।
घासग्रासाभिलाषादनवरतचलत्प्रोथतुण्डस्तुरङ्गो
मन्दं शब्दायमानो विलिखति शयनादुत्थितः क्ष्मां खुरेण ॥ ४ ॥

भट्टबाणस्य ।

द्विषद्भिरेवास्य विलङ्घिता दिशो यशोभिरेवाब्धिरकारि गोष्पदम् ।
इतीव धारामवधीर्य मण्डलीक्रियाश्रियाऽमण्डि तुरङ्गमैः स्थली ॥ ५ ॥

चलाचलप्रोथतया महीभृते स्ववेगदर्पानिव वक्तुमुत्सुकम् ।
अलं गिरा वेद किलायमाशयं स्वयं हयस्येति च मौनमास्थितम् ॥ ६ ॥

हरेर्यदक्रामि पदैककेन खं पदैश्चतुर्भिः क्रमतां तदेव नः ।
त्रपा हरीणामिति नम्रिताननैर्न्यवर्ति तैरर्धनभःकृतक्रमैः ॥ ७ ॥

प्रयातुमस्माकमियं कियत्पदं धरा तदम्भोधिरपि स्थलायताम्।
इतीव वाहैर्निजवेगदर्पितैः पयोधिरोधक्षममुद्धतं रजः ॥ ८ ॥

अजस्रभूमीतटकुट्टनोद्गतैरुपास्यमानं चरणेषु रेणुभिः।
रयप्रकर्षाध्ययनार्थमागतैर्जनस्य चेतोभिरिवाणिमाङ्कितैः ॥ ९ ॥

धूलीभिर्दिवमन्धयन् बधिरयन्नाशाः खुराणां रवै–
र्वातं संयति खञ्जयञ्जवजयैः स्तोतॄन् गुणैर्मूकयन्।
धर्माराधनसंनियुक्तजगता राज्ञाऽमुनाऽधिष्ठितः
सान्द्रोत्फालमिषाद्विगायति पदा स्प्रष्टुं तुरङ्गोऽपि गाम् ॥ १० ॥

एते श्रीहर्षपण्डितस्य।

॥ इति श्रीभगदत्तजल्हणविरचितायां सूक्तिमुक्तावल्यामश्ववर्णनपद्धतिः ॥



# सर्वपर्वतवर्णनपद्धतिः ( १०३ )



तत्र मेरुः।

मेरोर्मेदुरयन्ति सम्पदमयः सञ्चारिभिर्ज्योतिषा-
मातोपैर्विटपोपरिस्थिततरुच्छायाभृतोऽधित्यकाः।
निष्पीतासु च मासि मासि विबुधैरिन्दोः कलासु क्रमा-
दुद्दामप्लवमानलाञ्छनमृगच्छिन्नाग्रदर्भाङ्कुराः ॥ १ ॥

भूमेः स्वर्णतया फलोत्तरतरुस्मेरस्य मेरोस्तटी-
सीमन्तोऽयमनूरुसारथिरथप्रस्थानघण्टापथः।
अस्मिन्नुद्ध्रियते कथञ्चन हयैरुद्दामचण्डातप-
ज्वालाजालविलीनकाञ्चनशिलाजम्बालमग्नः प्रधिः ॥ २ ॥

एतौ श्रीमुरारेः।

उपर्यंशुमतः सिद्धाश्चरन्तो यस्य सानुषु।
छत्राण्यातपसंत्रासादवाचीनानि बिभ्रति ॥ ३ ॥

भर्तृचिन्तापरा यत्र वासकालङ्कृताः स्त्रियः।
गृह्णते मुकुरभ्रान्त्या चन्द्रमासन्नवर्तिनम् ॥ ४ ॥

यद्दरीषु सुरस्त्रीणां हारमुक्ता रतोत्सवे।
शीर्णास्तारानुषङ्गेण व्यज्यते स्तनकुङ्कुमैः ॥ ५ ॥

सूक्तिसहस्रादेते।

कैलासः।

स्वस्तिमानस्ति कैलासः स्फाटिको धरणीधरः।
नभःप्रयाणे स्वःस्त्रीणां दीर्घदर्पणतां गतः ॥ ६ ॥

यो धरित्रीभरश्रान्तः क्षीरगौरो रसातलात्।
विश्रान्तुं सफणाशृङ्गः शेषाहिरिव निर्गतः ॥ ७ ॥

भूगोलप्रतिबिम्बस्य महादर्शो निशाकरः।
यः शैलः शङ्खधवलो विधोस्तस्यापि दर्पणः ॥ ८ ॥

मन्ये हिमांशुः प्रान्तेऽपि यदि स्याद्ग्रहणागमे ।
तं लभेत कथं राहुर्यच्छिलाखण्डपाण्डुरम् ॥ ९ ॥

राजशेखरस्यैते ।

सोऽयं कैलासशैलः स्फटिकमणिभुवामंशुजालैः स्फुरद्भि-
 श्छाया पीताऽपि यत्र प्रतिकृतिभिरुपस्थाप्यते पादपानाम् ।
यत्रोपान्तोपसर्पत्तपनकरधृतस्यापि पद्मस्य मुद्रा-
 मुद्दामानो दिशन्ति त्रिपुरहरशिरश्चन्द्रलेखामयूखाः ॥ १० ॥

गिरिः कैलासोऽयं दशवदनकेयूरविलस-
 न्मणिश्रेणीपत्राङ्कुरमकरमुद्राङ्कितशिलः ।
अमुष्मिन्नारुह्य स्फटिकमयसर्वाङ्गविमले
 निरीक्षन्ते यक्षाः फणिपतिपुरस्यापि चरितम् ॥ ११ ॥

एतौ श्रीमुरारेः ।

हिमवान् ।

पुरः प्रालेयशैलोऽयमस्मिन् मकरकेतने ।
मृतसञ्जीवनी दुर्गा महौषधिरजायत ॥ १२ ॥

श्रीमुरारेः ।

श्रीकण्ठश्वशुरः स एष भगवान्मेनापतिः पर्वतः
 पुत्रीमानुमया पुनः किमपरं हेरम्बमातामहः ।
यस्यायं महिमा यदत्र शमिनः श्यामाकमुष्टिंपचा-
 स्तास्वेवाश्रमभूषु दिव्यवपुषः क्रीडन्ति कामाज्ञया ॥ १३ ॥

राजशेखरस्य ।

विन्ध्यः ।

अखर्वपर्वगर्तेषु विच्छिन्नो यस्य वारिधिः ।
हो स एव मुनेः पाणिरधस्ताद्विन्ध्यभूभृतः ॥ १४ ॥

कस्यापि ।

सद्यःस्यन्दनचक्रभङ्गचकितब्रध्नाश्व[हेषो]त्तरं
श्च्योतन्निर्झरवर्धिताम्बरसरिन्निमज्जदैरावतम्।
किं [चां] भाषितचन्द्रमण्डलशशं शृङ्गोत्तरस्थैः शशै-
र्मेरोर्वर्धितमत्सरः प्रववृधे विन्ध्यो गिरिर्व्योमनि ॥ १५ ॥

सूक्तिसहस्रात्।

अवाप्तैर्द्राघिम्णा परिचयमुदन्वत्तटभुवा-
मसौ भाति श्यामद्युतिभिरुदकैर्मेखलभुवः।
अगस्त्यस्याकार्षीद्वचनमिति कोपादुदधिना
गृहीतः केशेषु प्रसभमिव विन्ध्याक्षितिधरः॥ १६ ॥

करिकबलनशिष्टैः शाखिशाखाग्रपत्रै-
ररुणसरणयोऽमी सर्वतो भीषयन्ते।
चरितशबरसेनादत्तगोशृङ्गचण्ड-
ध्वनिचकितवराहव्याकुला विन्ध्यपादाः ॥ १७ ॥

कमलाकरस्य।

विन्ध्यक्षोणीधरपरिसरोत्सङ्गसङ्गल्लवङ्ग-
श्रेणीसंवर्गणरणरणद्भृङ्गवाचालिताशाः।
पम्पाझम्पारसिकशबरीपीनवक्षोजकुम्भ-
क्षुभ्यद्ध्रीचीपरिचयचमत्कारिणो वान्ति वाताः॥ १८ ॥

मदनस्य।

सह्यः।

गुञ्जत्कुञ्जकुटीरकौशिकघटाघूत्कारवत्कीचक-
स्तम्बाडम्बरमूकमौकुलिकुलः सह्याह्वयोऽयं गिरिः।
एतस्मिन् प्रचलाकिनां प्रचलतामुद्वेजिताः कूजितै-
रुद्वेल्लन्ति पुराणरोहणतरुस्कन्धेषु कुम्भीनसाः॥ १९ ॥

भवभूतेः।

१. हेषो. क, ख, च. २, वा, क, ख, च.

श्रीपर्वतः ।

शैलः सोऽयं गिरिशनिलयः श्रीगिरिर्नाम सिद्धैः
कुञ्जे कुञ्जे कृतवसतिभिः सेवितः सिद्धयोगैः ।
यस्य व्यक्तं शिरसि परमं ज्योतिरुद्वीक्षमाणाः
संगच्छन्ते जननमरणस्कन्धहीनाः शिवेन ॥ २० ॥

सूक्तिसहस्रात् ।

मलयाचलः ।

माद्यद्दिग्गजगण्डभित्तिकषणैर्भिन्नस्रवच्चन्दनः
क्रन्दत्कन्दरगह्वरो जलनिधेरास्फालितो वीचिभिः ।
पादालक्तकरक्तमौक्तिकशिलः सिद्धाङ्गनानां गतैः
सेव्योऽयं मलयाचलः किमपि मे चेतः करोत्युत्सुकम् ॥ २१ ॥

श्रीहर्षस्य ।

रमयति मलयाचलोऽयमस्मानुपनमता पवनेन मानिनीनाम् ।
दयितविनयकूटसाक्षिणीभिः स खलु सखीभिरदुष्करप्रसादः ॥ २२ ॥

मुरारेः ।

मैनाकः ।

अम्भोधौ विहरन्तमन्तरहितैः कीर्तिं वहन्तं गुणै-
स्तं मैनाकमवज्रगर्वविषयौ पक्षौ दधानं नुमः ।
आसन्ने सुरलोकमानुषजगत्पातालपारात्यये
यः पाथोनिधिलङ्घिनः पथि मरुत्सूनोर्व्यनैषीत् क्रमम् ॥ २३ ॥

माल्यवान् ।

चटुचटुलकरेणुस्पर्शलीलानिमील-
न्नयनयुगमतङ्गारब्धनिद्राविनोदम् ।
शुकहरितनितम्बं पश्य वंशीनवान्तै-
स्तरलमखिलपृथ्वीमाल्यवन्माल्यवन्तम् ॥ २४ ॥

राजशेखरस्

मौलौ जलदजालेन सान्द्रधम्मिल्लशालिना ।
बलाकाकुसुमैर्जातः सान्वयो माल्यवान् गिरिः ॥ २५ ॥

मदनस्य ।

नाधन्यानां निवासं विदधति गिरयः शेखरीभूतचन्द्राः
शृङ्गैर्ज्योत्स्नाप्रवाहं धृतमिव तुहिनं दिङ्मुखेषु क्षिपन्तः ।
येषामुच्चैस्तरूणामपिहतगतिना वायुना कम्पितानां-
माकाशे विप्रकीर्णः कुसुमचय इवाभाति ताराग्रहौघः ॥ २६ ॥

भट्टबाणस्य ।

॥ इति श्रीमदारोहकभगदत्तजल्हणविरचितायां सूक्तिमुक्तावल्यां सर्वपर्वतवर्णनम् ॥

# समुद्रवर्णनपद्धतिः ( १०४ )

——: ० :——

ग्रावाणो मणयो हरिर्जलचरो लक्ष्मीः पयोमानुषी
मुक्तौघाः सिकताः प्रवाललतिका शैवालमम्भस्सुधा ।
तीरे कल्पमहीरुहः किमपरं नामाम्बुधेर्वर्ण्यते
दूरात् कर्णरसायनं निकटतस्तृष्णापि नो शाम्यति ॥ १ ॥

कस्यापि ।

उद्गर्जज्जलकुञ्जरेन्द्ररभसस्फालानुबन्धोद्धतः
सर्वाः पर्वतकन्दरोदरभुवः कुर्वन् प्रतिध्वानिनीः ।
उच्चैरुच्चरति ध्वनिं श्रुतिपथो[न्माथी] यथाऽयं तथा
प्रायः प्रेङ्खदसङ्ख्यशङ्खधवला वेलेयमागच्छति ॥ २ ॥

श्रीहर्षस्य ॥

दत्ते यत्किलिकिञ्चितैकगुरुतामेणीदृशां वारि[णां]
वैधुर्यं विदधाति दम्पतिरुषां यच्चन्द्रिकार्द्रं नभः ।
यत्पीयूषभुजां च मन्मथसुहृन्नित्यं [वे॑य]स्सम्पदां
यल्लक्ष्मीरधिदैवतं च जलधेस्तच्चित्रमाचेष्टितम् ॥ ३ ॥

राजशेखरस्य ।

यन्मध्ये दनुजाः सुराश्च निचितोरत्नैर्वराटैश्च यत्
व्याप्तिर्व्योम्नि च भूतले च वसतिर्वह्नेश्च तोयस्य च ।
दानादानमपां घनेषु च नदीस्रोतस्सु चाधःस्थितं
पीयूषं च विषं च यत्तदुदधेश्चित्रं चरित्रं महत् ॥ ४ ॥

उत्तंसीकृतचन्द्रमा[ः]सभुजगान्वीचीन् परावर्तयन्
ज्योत्स्नाभस्मविलेपने निरवधिस्फीते महिम्नि स्थितः ।
प्रेङ्खच्छङ्खकरोटिकोटिहननैः स्वास्सिन्धुमुद्घोषय-
न्नत्यन्तं पथि गर्जिताट्टहसितो रुद्रं हसत्यर्णवः ॥ ५ ॥

सूक्तिसहस्रात् ।

१. णी. क. ख. च. २. चय.

आकण्ठदष्टशिरसाऽप्यविभाव्यपार्श्व-
पृष्ठोदरेण चिरमृग्भिरुपास्यमानः।
नाभीसरोरुहजुषा चतुराननेन
शेते किलात्र भगवानरविन्दनाभः॥ ६॥

लक्ष्मीरस्य हि यादः कृष्णोरःस्थापि सुभटभुजवसतिः।
इन्दुः स च मृडचूडामणिरपि जगतामलङ्कारः॥ ७॥

यथा दूरापातित्रिदिवयुवतीनेत्रसुलभा-
मपां भर्ता हारावलिवलयलक्ष्मीं वितनुते।
तथाऽयं माणिक्यस्फटिककनकग्रावशिखरै-
रशून्यात्मा सेतुर्विलसति महानायक इव॥ ८॥

एते मुरारेः।

एतस्माज्जलधेर्जलस्य कणिकाः काश्चिद्गृहीत्वा ततः
पाथोदाः परिपूरयन्ति जगतीं रुद्धाम्बरा वारिभिः।
भ्राम्यन्मन्दरकूटकोटिघटनाभीतिभ्रमत्तारकां
प्राप्यैकां जलमानुषीं त्रिभुवने श्रीमानभूदच्युतः॥ ९॥

जलमानुषीरुद्रस्य।

किं ब्रूमो जलधेः श्रियं स हि खलु श्रीजन्मभूमिः स्वयं
वाच्यः किं महिमाऽपि यस्य हि नवद्वीपं महीति श्रुतिः।
त्यागस्तस्य स कोऽपि बिभ्रति जगद्यस्यार्थिनोऽप्यम्बुदाः
शक्तिः काऽपि तथा हि यस्य भवति क्षोभेण कल्पान्तरम्॥ १०॥

कस्यापि।

॥ इति श्रीमदारोहकभगदत्तजल्हणविरचितायां सूक्तिमुक्तावल्यां समुद्रपद्धतिः॥

# नदीवर्णनपद्धतिः ( १०५ )



गङ्गा।

उत्कलिकाबाहुल्यं तत्तत्स्वाभाविकं द्रवत्वं च।
स च निरुपाधिस्नेहस्तेनेशस्य प्रिया गङ्गा ॥ १ ॥

मालतीमाधवस्य।

देवस्याम्बुजसंभवस्य भवनादम्भोधिमागामिका
सेयं मौलिविभूषणं भगवतो भर्गस्य भागीरथी।
उद्घातानपहाय विग्रहमितः स्रोतःप्रतीपानपि
स्रोतस्तीव्रतरत्वरा गमयती द्राग्ब्रह्मलोकं जनान् ॥ २ ॥

बलिद्विषत्पादनखांशुराजिभिः पुरारिमौलीन्द्रमरीचिवीचिभिः।
हिमाद्रिनिष्यन्दजलैः पदे पदे विवर्धते वैबुधसैन्धवी रुचिः ॥ ३ ॥

एतौ श्रीमुरारेः।

अजाङ्घ्रिनिर्दत्तरजश्चयाऽपि
कपालिना बद्धरसाऽपि कामम्।
ततोऽप्यधोधः पतिताऽपि नित्यं
गङ्गा कुसङ्गाऽपि पुनाति लोकान् ॥ ४ ॥

कियद्दूरे तीरद्रुमकुसुमसौरभ्यरभस-
भ्रमद्भृङ्गीगीतध्वनिहृतकुरङ्गीपरिगतम्।
पयो मन्दाकिन्याः सुरपुरपुरन्ध्रीकुचतटी-
विटङ्काध्यारोहप्रवरमणिसोपानसरणी ॥ ५ ॥

मातः शैलसुतासपत्नि वसुधाशृङ्गारहारावलि
स्वर्गारोहणवैजयन्ति भवतीं भागीरथीं प्रार्थये।
त्वत्तीरे वसतस्त्वदम्बु पिबतस्त्वद्वीचिषु प्रेङ्खत-
स्त्वन्नाम स्मरतस्त्वदर्पितदृशस्स्यान्मे शरीरव्ययः ॥ ६ ॥

---

१. उद्वीचि. क. ख. च.

देवि त्वत्सैकतेषु त्रिषवणविशदश्रोत्रियश्रेणिसाम्ना-
माम्नायैर्मांसलेषून्मृदुलदललसद्वेतसीशाद्वलेषु ।
मूर्छादाहं कदाऽहं स्मरदहनपदद्वन्द्वमन्दारधूली-
खेलद्वाचालपुष्पंधयकुलखुरलीखेलनं मानयिष्ये ॥ ७ ॥

अमुष्मिन् संसारे परिकलितसारेतरतया
तदा विद्योत्कर्षः परिणतिमुपैति श्रुतिविदाम् ।
यदा मन्दाकिन्या मधुरवमरालीकलकल-
प्रणालीवाचाले परिसरतटे यान्ति दिवसाः ॥ ८ ॥

काकैर्निष्कुषितं श्वभिः कबलितं वीचीभिरान्दोलितं
स्रोतोभिश्चलितं तटान्तमलिनं गोमायुभिर्लोडितम् ।
दिव्यस्त्रीकरचारुचामरमरुत्संवीज्यमानः कदा
द्रक्ष्येऽहं परमेश्वरि त्रिपथगे भागीरथि स्वं वपुः ॥ ९ ॥

त्वत्तीरे तरुकोटरान्तरगतो गङ्गे विहङ्गोऽप्यहं
त्वन्नीरे नरकान्तकारिणि वरं मत्स्योऽथवा कच्छपः ।
नैवान्यत्र मदान्धसिन्धुरघटासंघट्टघण्टारण-
त्कारत्रस्तसमस्तवैरिवनितालब्धस्तुतिर्भूपतिः ॥ १० ॥

भेरीभाङ्कारस्य ।

सरयूः ।

यूपाङ्कुरप्रकरदन्तुरतीररेखासंख्यायमानमनुसन्ततिसप्ततन्तुः ।
इक्ष्वाकुराजमहिषीपदपट्टलक्ष्मीर्देव्या भुवो भगवती सरयूरियं नः ॥ ११ ॥

श्रीमुरारेः ।

यमुना ।

कालिन्दीयं द्विरददलिताम्भोजिनीरेणुरम्या
यस्याः कृष्णः शिशिरपयसस्तीरकेदारचारी ।
गायन्तीनां किमपि मधुरं बालगोपालिकानां
लीलालोलः कमलकलिकाः कर्णपूरीचकार ॥ १२ ॥

देव्या भूमेर्मृगमदमयं मण्डनं सिद्धसिन्धोः
　सध्रीचीयं जयति यमुना या तटैकाग्रवृत्तीन् ।
प्रेमोत्कर्षादिव पितृपतेर्भ्रातुराच्छिद्य हस्ता-
　द्वाधोन्मुक्तं गमयति पितुर्मण्डलं भास्करस्य ॥ १३ ॥

श्रीमुरारेः ।

सेयं सुभ्रु पुरः कलिन्दतनया गीर्वाणसिन्धोः सखी
　वासः कालियपन्नगस्य यमुना दृग्गोचरे वर्तते ।
वन्दस्वार्यमणीमिमां दुहितरं वैवस्वतस्यानुजां
　यस्याः स्वर्णपरीक्षणक्षमदृषत्तापी स्वसा सोदरी ॥ १४ ॥

राजशेखरस्य ।

नर्मदा ।

एषा सा विन्ध्यमध्यस्थलविपुलशिलोत्सङ्गरङ्गत्तरङ्गा
　संभोगश्रान्ततीराश्रयशबरवधूशर्मदा नर्मदा च ।
यस्याः सान्द्रद्रुमालीललिततरमिलत्सुन्दरीसन्निरुद्धैः
　सिद्धैः सेव्यन्त एते मृगमृदितदलत्कन्दलाः कूलकच्छाः ॥ १५ ॥

त्रिविक्रमभट्टस्य ।

हेलोन्मूलितनर्तितप्रतिहतव्यावर्तितप्रेरित-
　व्यक्तस्वीकृतनिह्नुतप्रकटितप्रोद्धूततीरद्रुमाः ।
एते मेखलकन्यकाप्रणयिनः पातालमूलस्पृशः
　सन्त्रासं जनयन्ति बन्धभिदुरा वारां प्रवाहाः पुरः ॥ १६ ॥

धर्मस्य ।

उद्देशोऽयं कनकसिकताकोमलैकान्तकान्ता-
　लीलावासीकृततरुतलः कामिभिर्नर्मदायाः ।
किंचैतस्मिन् सुरतसचिवास्तन्वि ते वान्ति वाता
　येषामग्रे सरति कलिताकण्ठकोपो मनोभूः ॥ १७ ॥

भट्टेन्दुराजस्य ।

१. द्वे. क. पाठभेदः. द्वै. क. ख.

तापी ।

एते पल्लिपुरन्ध्रिनिर्भरजलक्रीडाहृताम्भःकण-
क्षोदक्षालितलग्नपान्थवनितानिश्वासतीव्रातपाः ।
वान्ति स्वैरविहारकुञ्जरकरच्छिद्रोदराघूर्णन-
प्रारब्धोच्चमृदङ्गनादमुखरास्तापीनिकुञ्जानिलाः ॥ १८ ॥

भट्टसोमेश्वरस्य ।

गोदावरी ।

पातुं गौतमि वारि तावकमिदं पीयूषनिर्दूषणं
शङ्के पङ्कजबान्धवो वितनुतेऽजस्रं सहस्रं करान् ।
तैरेव त्वयि सञ्चरिष्णुभिरिति श्लाघ्यैः कृतार्थीकृत-
स्तीर्थानां निवहः पुनाति भुवनान्येतानि किं स्तूयसे ॥ १९ ॥

मातर्गौतमकीर्तिकल्पलतिके कल्लोलडोलायितै-
रम्भःसंभृतमेतदेत्य मरुता दिक्चक्रमाक्रामता ।
स्पर्शादस्य दुरन्तदोषगुरुता सर्वस्य निर्वास्यते
नो चेद्भूरि भरं सहेत भुवनाभोगं न भोगीश्वरः ॥ २० ॥

पृथ्वीधरस्यैतौ ।

वैतण्डश्रवणप्रचण्डपवनव्याधूतरोधोलता-
पुष्पश्रेणिपतत्परागपटलीजम्बालिताम्बुप्लवा ।
जागर्ति स्फुटजूर्तिपान्थपरिषन्निर्वापमुष्टिंधया
छाया[2] पादपपक्ष्मला[3] नयनयोर्मोदाय गोदावरी ॥ २१ ॥

कलिङ्गस्य ।

उपपरिसरं गोदावर्याः परित्यजताध्वगाः
सरणिमपरो मार्गस्तावद्भवद्भिरवेक्ष्यताम् ।
इह हि विहितो रक्ताशोकः कयाऽपि हताशया
चरणनलिनन्यासोदञ्चन्नवाङ्कुरकञ्चुकः ॥ २२ ॥

भट्टेन्दुराजस्य ।

१. नि. ह. ख. २ ग्राह्या. क. ख. च. ३. जा. क. ख. च.

कावेरी ।

कावेरी कबरीव भामिनि भुवो देव्याः पुरो दृश्यतां
पूगैर्नागलताश्रितैरुपदिशत्याश्लेषविद्यामिव ।
कर्णाटीजनमज्जनेषु जघनैर्यस्याः पयः प्लावितं
पीत्वा नाभिगुहाभिरूर्मिततिभिः प्राचीं दिशं नीयते ॥ २३ ॥

राजशेखरस्य ।

ताम्रपर्णी ।

रत्नप्रसूरिति समस्ततरङ्गिणीषु
वारांनिधेर्भगवतः सुभगं कलत्रम् ।
अस्मिन्नियं तव नितम्बिनि ताम्रपर्णी
चक्षुःपथं भजतु मौक्तिककामधेनुः ॥ २४ ॥

रोधोरेखा चन्दनारण्यहृद्या
वारि स्वाद्यं नालिकेराम्भसोऽपि ।
यच्चाप्यद्भ्यः संभवो मौक्तिकानां
तेनाम्भोधेर्वल्लभा ताम्रपर्णी ॥ २५ ॥

राजशेखरस्यैतौ ।

सामान्यनदी ।

जडस्वच्छस्वादुप्रकृतिरुपहूतेन्द्रियगणो
गुणो यद्यप्यासामयमयुतसिद्धो विजयते ।
तथाऽप्युत्कर्षाय स्फुरति सरितामाश्रमसदा-
मिदानीं वानीरद्रुमकुसुमजन्मा परिमलः ॥ २६ ॥

मुरारेः ।

इह समदशकुन्ताक्रान्तवानीरमुक्ता-
प्रकरसुरभिशीतस्वच्छतोया वहन्ति ।
फलभरपरिणामश्यामजम्बूनिकुञ्ज-
स्खलनमुखरभूरिस्रोतसो निर्झरिण्यः ॥ २७ ॥

भवभूतेः ।

इह शिखरकरालक्षोणिभिद्गण्डशैल-
स्खलनदलनगर्जत्फेनिलो बुद्बुदौघः ।
पवनधृतशिरीषश्रेणिरेणुप्रणाली-
सुरभिसलिलदक्षा द्वीपवत्यो वहन्ति ॥ २८ ॥

उत्सङ्गे(ङ्गैः) सैकतानां शकुनिशतपदन्यासरेखाङ्कितानां
जम्बूषण्डानि नद्यो दधति परिणमल्लम्बिलम्बालकानि ।
यत्तोयान्दोलदोलः पुलकयति तनुं तीरकस्तूरिकैण-
प्रक्रान्तग्रन्थिपर्णग्रसनपरिमलोत्कन्धरो गन्धवाहः ॥ २९ ॥

स्कन्धासक्तैरिह हि विपिने शुष्कशैवालजालैः
प्रावृट्पूरोच्छ्रयमभिदधत्युच्छ्रिताः शाखिनोऽपि ।
येषां मूलेष्वसरलजटास्फालवाचालवीचि-
क्षोभत्रासात्तरलशफरा निर्झरिण्यो वहन्ति ॥ ३० ॥

मदनस्यैतौ ।

॥ इति श्रीमदारोहकभगदत्तजल्हणविरचितायां सूक्तिमुक्तावल्यां सर्वनदीवर्णनपद्धतिः ॥

# सरोवर्णनपद्धतिः ( १०६ )

तेनाखानि जलावगाहनरसव्यासक्तपौराङ्गना-
पर्यस्यत्कबरीविशीर्णकुसुमस्मेरोर्मिमालं सरः ।
यस्मिन्नच्छतया निधाय नयने मर्त्यैः सकौतूहलं
लक्ष्यन्ते भुजगाधिराजनगरीवामभ्रुवां विभ्रमाः ॥ १ ॥

उमापतिधरस्य ।

अन्यः कः क्षारवार्धे त्वमिव नियमितो वानरैर्वा नरैर्वा
विप्रेणैकेन कोऽन्यः करकुहरपुटीपात्रमात्रे निपीतः ।
जल्पन्नित्थं पृथूर्मिध्वनिभिरवतरत्फेनकूटाट्टहासैः
स्पर्धां धत्ते पयोधेरधिकमधिपुरं निर्मितो यत्तटाकः ॥ २ ॥

चित्तपस्य ।

उन्मीलल्लीलनीलोत्पलदलदलनामोदमेदस्विपूर-
क्रोडक्रीडद्विजालीगरुदुदितमरुत्स्फालवाचालवीचिः ।
एतेनाखानि शाखानिवहनवहरित्पर्णपूर्णद्रुमाली-
व्यालीढोपान्तशान्तव्यथपथिकदृशां दत्तरागस्तटाकः ॥ ३ ॥

वृद्धो वार्धिरयं तरङ्गवलिभं बिभ्रद्वपुः पाण्डुरं
हंसालीपलितेन यष्टिकलितस्तावद्वयोबृंहिमा ।
बिभ्रच्चन्द्रिकया च कंविकचया योग्यस्फुरत्सङ्गतं
स्थाने स्नानविधायिधार्मिकशिरोनत्याऽपि नित्यादृतः ॥ ४ ॥

श्रीहर्षपण्डितस्यैतौ ।

अयमुपगतकृष्णः कृष्णसाराक्षिपातै-
र्यमक(विकसि ?)तनवनीलाम्भोजवक्रश्चकास्ति ।
जलयुवतिकुचानुभासितोत्तुङ्गकुम्भ-
स्थलमदकलगर्जन्नीरनागस्तटाकः ॥ ५ ॥

मदनस्य ।

१. तृ. क. ख. च.

प्रचण्डवातोपरमेन निश्चलं प्रसन्नमन्तर्जलदृष्टतारकम्।
सहैव दृष्ट्या पतितं महीतले सरो नभःखण्डमिव व्यराजत ॥ ६ ॥

कुमारदासस्य।

नो लावण्यविदूषितो न विषवान्नो [मं]न्दरक्षोभितः
पीतो यो व्यथते न बाडवशतैर्यश्चा[ति] वेलोदकः।
कर्ता मेघनतेरिति प्रतिनरं बुद्धिर्यतो जायते
जातः कोऽप्यपरः पयोनिधिरसौ मन्ये तटाकच्छलात् ॥ ७ ॥

श्रीवैद्यभानुपण्डितस्य।

तेऽमी केलिकृतावतारतरुणीपीनस्तनालोकन-
त्रस्ताम्भोगजगर्जितर्जितजनस्तोमास्तटाकोत्तमाः।
ये रोलम्बकदम्बडम्बरमिलद्वर्षाम्बुवाहभ्रम-
त्रासो[ड्डी]नमरालपक्षविधुतैरम्भोरुहैरावृताः ॥ ८ ॥

कस्यापि।

एतद्भीमपराक्रमेण रचितं संसारसारं सरः
पाथोनाथकथापहस्तनकलावैचक्षणे दीक्षितम्।
यन्माहात्म्यविलोकनाद्भुतरसाद्धूताम्बरश्रीशिरः-
स्रस्तं कुण्डलमम्बुबिम्बितरविव्याजेन विद्योतते ॥ ९ ॥

विश्वेश्वरस्य।

वापिका।

क्वास्ते शीतांशुरंशूनमृतपरिणतान् व्याकिरन् स्वर्वधूनां
क्वाऽसौ पीयूषपानामधरमधुरिमा कुत्र वाचः कवीनाम्।
इत्थं भूयो निमज्जद्घटनिवहमुखोद्गारिभाङ्काररराव-
व्याजादुद्गर्जतीव स्फुरदसमरसोल्लासिका वापिकेयम् ॥ १० ॥

हरिहरस्य।

॥ इति श्रीमदारोहकभगदत्तजल्हणविरचितायां सूक्तिमुक्तावल्यां सरोवर्णनपद्धतिः ॥

---

१. यं. क. ख. च. २. पि. क. ख. च. ३. न्थी. क. ख. च.

# नगरीवर्णनपद्धतिः ( १०७ )



विललास जलाशयोदरे क्वचन द्यौरनुबिम्बितेव या।
परिखाकपटस्फुटस्फुरत्प्रतिबिम्बानवलम्बिताम्बुनि ॥ १ ॥

अश्रान्तश्रुतिपाठपूतरसनाविर्भूतभूरिस्तवा–
जिह्मब्रह्ममुखौघविघ्नितनवस्वर्गक्रियाकेलिना।
पूर्वं गाधिसुतेन सामिघटिता मुक्ता नु मन्दाकिनी
यत्प्रासाददुकूलवल्लिरनिलान्दोलैरखेलद्दिवि ॥ २ ॥

सममेणमदैर्यदापणे तुलयन् सौरभलोभनिश्चलम्।
पणिता न जनारवैरवैदपि गुञ्जन्तमलिं मलीमसम् ॥ ३ ॥

श्रीहर्षपण्डितस्यैते।

कनककलशश्रेणी यत्र प्रभाकरचुम्बनै–
रतिखरकराघातैर्मध्यन्दिने शिथिलीकृता।
द्रवति भजते दार्ढ्यं सिक्ता समीरणकम्पित–
ध्वजपटसमानीतस्वर्गापगाजलबिन्दुभिः ॥ ४ ॥

वैद्यभानुपण्डितस्य।

ते चण्डीशमुरारिचण्डमहसां यस्मिन् लसन्त्यद्भुताः
प्रासादाः पृथुशातकुम्भकलशज्योत्स्नाविलिप्ताम्बराः।
तत्रोपान्तचरत्क्षपाकरसुधासंसिक्तवंशध्वज–
प्रोद्यत्पल्लवजाललालसहयव्यग्रोऽरुणस्ताम्यति ॥ ५ ॥

विश्वेश्वरस्य।

जननीतिमुदितमनसा सततं सुस्वामिना कृतानन्दा।
सा नगरी नगतनया गौरीव मनोहरा भाति ॥ ६ ॥

त्रिविक्रमभट्टस्य।

स्फुरत्तुषारांशुमयूखजालैर्विनिह्नुताः स्फाटिकसौधपङ्क्तीः।
आरुह्य नार्यः क्षणदासु यस्यां नभोगता देव्य इव व्यराजन् ॥ ७ ॥

माघस्य।

स्थिता[स्तु] यत्रोपरि भूमिकुट्टिमस्थलीषु तुङ्गासु निरन्तरा[श्म]सु।
त्यजन्ति मार्गे तुरगा वियत्यपि ध्रुवं निरालम्बगतेः श्रमं रवेः ॥ ८ ॥

निशासु यत्र प्रतिबिम्बवर्त्मना समागतश्चारुदृशां निशाकरः।
विलासडोलायितकुण्डलाहतः कपोललावण्यजले निमज्जति ॥ ९ ॥

बिल्हणस्यैतौ।

यत्सौधशृङ्गारसरोजरागरत्नप्रभाविच्छुरितः शशाङ्कः।
जगाम रोषादिव लोहितत्वं पौराङ्गनावक्त्रकृतावमानः ॥ १० ॥

नाथकुमारस्य।

नक्तं शशाङ्कोपलकुट्टिमेषु यस्यामुडूनि प्रतिबिम्बितानि।
पुष्पन्धयाः पुष्पधिया धयन्तः सुधामरन्दैर्मुदमुद्वहन्ति ॥ ११ ॥

सोमकवेः।

यत्रोन्मुखं चातकबृन्दमभ्रभ्रमेण सौधस्थितधूपधूमे।
वेल्लत्पताकाग्रगृहीतमुक्तैर्नभोनदीबिन्दुभिरेति तृप्तिम् ॥ १२ ॥

वस्तुपालस्य।

औष्मायमाणनवयौवनमुग्धभावाः
शृङ्गारसागरमनोज्ञतरङ्गलेखाः।
कन्दर्पकेलिरसलब्धयशःपताकाः
पण्याङ्गनाः पुरमिमामधिवासयन्ति ॥ १३ ॥

नाथकुमारस्य।

मन्ये विशालायतवेशवीथीव्याजेन देवः सहकारबाणः।
गम्भीरसंभोगमयापवर्गप्रवेशमार्गं रचयाञ्चकार ॥ १४ ॥

१ रीप्ति. क. पाठभेदः २ सु. क. ख. च. ३ तोप. ग. ४ ऊ. क. पाठभेदः।

प्रत्यष्टमि प्रतिचतुर्दशि देवयात्राव्याजेन दिक्षु च विदिक्षु च सञ्चरन्त्यः ।
एणीदृशः प्रणयकन्दलितैः कटाक्षैरातन्वते रतिपतेरिह दीर्घमायुः ॥ १५ ॥

सर्वज्ञवासुदेवस्यैतौ ।

यस्मिन् पुरे निवसतामयमेव लाभो यत्प्रातरेव सुदृशो गृहवेदिकासु ।
धम्मिल्लभारनियमोन्नतबाहुमूलसन्दर्शनेन नयनानि कृतार्थयन्ति ॥ १६ ॥

बिल्हणस्य ।

उद्वसन्नगरम् ।

एतच्छान्तविचित्रचत्वरपथं विश्रान्तवैतालिक-
श्लाघाश्लोकमगुञ्जिमञ्जुमुरजं विध्वस्तगीतध्वनि ।
व्यावृत्ताध्ययनं निवृत्तसुकविक्रीडासमस्यं नम-
द्विद्वद्वादपथं कथं पुरमिदं मौनव्रते वर्तते ॥ १७ ॥

राजशेखरस्य ।

मुखरमुरजं पौरस्त्रीभिर्न लास्यमुपास्यते
सरसमधुरं नाट्यागारे न कूजति वल्लकी ।
अहह पिहितद्वारं कस्मादिदं परितः पुरं
[विरतसुरत]व्यापारत्वात्प्रसुप्तमिवाखिलम् ॥ १८ ॥

बिल्हणस्य ।

द्वारवती ।

श्रियः पदं द्वारवतीति नाम्ना पुरी परीता लवणार्णवेन ।
अस्त्यावृतेवामरराजधानी निस्त्रिंशनीलेन नभस्तलेन ॥ १९ ॥

वाराणसी ।

प्लवमानैरपारोऽयं जनैः संसारसागरः ।
द्वीपे वाराणसीनाम्नि विश्रान्तैरिह तीर्यते ॥ २० ॥

मुरारेः ।

१. सुखरतरत. क. ख. च. ग.

यद्वाचंयमवृत्तयः किमपरं नीवारमुष्टिंपचाः
सत्यं रूपमुपासते च कृतिनो द्राक् संवदन्ते च नः।
नित्यासन्नतयात्तखण्डपरशोर्वाराणसीवासिनः
संभोगैरपि सुभ्रुवां तदजरं विन्दन्ति नि(न?)न्दन्ति च ॥ २१ ॥

राजशेखरस्य।

ये तृष्णालहरीपरीतमनसस्ते मानवा निर्भरं
देशेऽन्यत्र वसन्तु हन्त सहसाऽवज्ञाय वाराणसीम्।
अस्माभिः पुनरत्र शङ्करपुरीमध्ये स्थिरं स्थीयते
स्थातव्यं त्रिदिवापगाजलमिलद्गण्डूषसन्तोषिभिः ॥ २२ ॥

भेरीभाङ्कारस्य।

प्रयागः।

प्रयागस्सर्वतीर्थेभ्यस्तीर्थमुच्चैस्तरामयम्।
संसारस्य परं पारमिहस्थैरवलोक्यते ॥ २३ ॥

आयुर्वायुव्यथितनलिनीपत्रमित्रं किमन्यत्
सम्पच्छम्पाद्युतिसहचरी स्वैरचारी कृतान्तः।
कस्मादस्मिन् भ्रमसि तमसि त्वं प्रयाहि प्रयागं
पौनःपुन्यं भुवि भगवती स्वर्धुनी ते धुनीते ॥ २४ ॥

भेरीभाङ्कारस्य।

उज्जयिनी।

खेलं सञ्चरितुं तरङ्गतरलभ्रूलेखमालोकितुं
रम्यं स्थातुमनादरार्पितमनोमुद्रञ्च संभावितुम्।
संत्यज्योज्जयिनीं जनैर्विवदितुं हृद्यं च हे मानवाः
प्रत्यङ्गार्पणसुन्दरं च न जनो जानाति रन्तुं परः ॥ २५ ॥

१, लेखं, क. ख. च.

अयोध्या ।

वृन्तैरिव क्रतुसहस्रभुवां फलाना-
 मालोक्य यूपनिकरैर्मधुरामयोध्याम् ।
राज्ञामिह प्रभवतां च विचिन्त्य [1]सिद्धिं
 देवश्शचीसहचरोऽपि न रोचते नः ॥ २६ ॥

मुरारेः ।

अलका ।

कैलासाचलकर्णिकेयमलका नेत्रैकपेया पुरी
 देवस्य द्रविणप्रभोः किमपरं शृङ्गाररसारस्यभूः ।
अस्यामस्तमिते हि राक्षसपतौ यक्षाङ्गनानाममी
 वर्तन्ते प्रतिचत्वरं प्रतिगृहं प्रत्यापणं चोत्सवाः ॥ २७ ॥

राजशेखरस्य ।

इति श्रीभगदत्तजल्हणविरचितायां सूक्तिमुक्तावल्यां नगरवर्णनपद्धतिः



१, वृ. क. ख. च

# भैरवादिस्तवनपद्धतिः ( १०८ )



तत्र महाभैरवः—

सौवर्णो गिरिरासनं भगवती विश्वंभरा भाजनं
भूतान्योदनमामिषाण्यनिमिषक्रोडाहिकूर्माधिपाः।
चन्द्रार्कावपि सार्द्रशुष्कवटकौ मैरेयमम्भोधयो
देवः कल्पदिनावसानसमये भोक्ता महाभैरवः ॥ १ ॥

कस्यापि।

आदिकूर्मः।

भ्रमति गिरिराट् पृष्ठे गर्जत्युपश्रुति सागरो
दहति विततज्वालाजालैर्जगन्ति विषानलः।
स तु विनिहितग्रीवाकाण्डः कटाहपुटान्तरे
स्वपिति भगवान् कूर्मो निद्राभरालसलोचनः ॥ २ ॥

शरयैकस्य।

आदिवराहः।

अस्ति श्रीस्तनपत्रभङ्गमकरीमुद्राङ्कितोरःस्थलो
देवः सर्वजगत्पतिर्मधुवधूवक्त्राब्जचन्द्रोदयः।
क्रीडाक्रोडतनोर्नवेन्दुसदृशे दंष्ट्राङ्कुरे यस्य भू-
र्भाति स्म प्रलयाब्धिपल्वलतलोत्खातैकमुस्ताकृतिः ॥ ३ ॥

हनुमतः।

पृ( द ? )ष्ठात् स्थूलतरा दंष्ट्रा ततः पोत्रं ततो हनुः।
ततः स्कन्धस्ततः पृष्ठं हे वराहस(कि?)मीहि(त?)म् ॥ ४ ॥

वराहमिहिरस्य।

इति श्रीभगदत्तजल्हणदेवाविरचितायां सूक्तिमुक्तावल्यां भैरवादिस्तवनम्।

---

१ अनुक्रमणिकायां 'भैरवकूर्मादीनां स्तवनम् अथ सर्वपदार्थसंस्तुतिर्विविधा' इति अथशब्दश्रवणेन सर्वपदार्थसंस्तुतेर्भैरवादिस्तवनात्पार्थक्यमाश्रित्यायं विभाग आदृतः। वस्तुतः—शीर्षण्यलेखस्तु सर्वपदार्थसंस्तुतिरित्येवोपलभ्यते, तत् भैरवादिस्तवनस्य न पृथक्पद्धतिता, तथासति 'त्रयस्त्रिंशत्पद्धतीनामिदं शतम्' इति संख्यावर्णनस्य कविकाव्यप्रशंसायां सामान्यकविविशेषकविभेदेन द्वैविध्यमाश्रित्य सांगत्यं बोध्यम्।

# सर्वपदार्थसंस्तुतिः ( १०९ )



आकाशम् ।

किं ब्रूमो जलधेरनन्तमहिमस्थानस्य किं ब्रूमहे
किं ब्रूमो व्रतिनस्तथा परिकरः(ततः?) पीतस्स एवार्णवः ।
आस्तां तावदियं द्वयोरपि कथा तद्वर्ण्यतामम्बरं
यस्मिन् सोऽपि मुनिः प्रतीतिविषयः खद्योतपोतायते ॥ १ ॥

कस्यापि ।

ब्रूमः किं नभसो निसर्गमहतस्तत्तद्विभूत्यद्भुतं
यस्यान्तर्भुवनान्यमूनि दधति क्षुद्राणुभिस्तुल्यताम् ।
किं चान्यद्भुवनत्रयैकनयनं देवो निधिस्तेजसां
यस्मिन् विस्मयधाम्नि सोऽपि तरणिः खद्योतवत् द्योतते ॥ २ ॥

श्रीभोजदेवस्य ।

तद्ब्रह्माण्डमिह क्वचित्क्वचिदपि क्षोणी क्वचिन्नीरदा-
स्ते द्वीपान्तरशालिनो जलधयः क्वापि क्वचिद् भूधराः ।
आश्चर्यं गगनस्य कोऽपि महिमा सर्वैरमीभिः स्थितैः
दूरे पूरणमस्य शून्यमिति यन्नामापि नाच्छादितम् ॥ ३ ॥

येषां पांसुकणैः कुलाद्रिनिचया विप्रुड्भिरम्भोधयो
दीपैर्द्वादशभानवः प्रवहतां तुल्यास्त एतेऽनिलाः ।
कल्पान्ते गगनस्य कुक्षिकुहरे दुर्लक्ष्यसंचारिणः
पश्याश्चर्यमहो स्वभावमहतो नान्तः क्वचिल्लभ्यते ॥ ४ ॥

कयोरप्येतौ ।

कुमारः ।

कठोरपारावतकण्ठमेचकं वपुर्वृषस्कन्धसुबन्धुरांसकम् ।
प्रसन्नसिंहस्तिमितं च वीक्षितं ध्वनिश्च माङ्गल्यमृदङ्गमङ्गलः ॥ ५ ॥

दृष्टिस्तृणीकृतजगत्त्रयसत्वसारा दूरोद्धता नमयतीव गतिर्धरित्रीम् ।
कौमारकेऽपि गिरिवद्गुरुतां दधानो वीरो रसः किमयमेत्युत दर्प एव ॥ ६ ॥

त्रातुं लोकानिव परिणतः कायवानस्त्रवेदः
क्षात्रो धर्मः श्रित इव तनुं ब्रह्मकोशस्य गुप्त्यै।
सामर्थ्यानामिव समुदयः सञ्चयो वा गुणाना-
माविर्भूय स्थित इव जगत्पुण्यनिर्माणराशिः ॥ ७ ॥

भवभूतेरेते।

मृगया।

द्विधा कृत्वा क्षीणं निजसहजशत्रुं शशधरं
दधानं तुण्डेन स्फुटविकटदंष्ट्राद्वयमिषात्।
यदेतस्माद्भानोरिव निबिडभीतिव्यतिकरं
करञ्जीकुञ्जानां करितिमिरमन्तः प्रविशति ॥ ८ ॥

कस्यापि।

किं स्यादञ्जनपर्वतः स्फटिकयोर्द्वंद्वं दधद्दीर्घयो-
रम्भोमेदुरमेघ एष किमुत श्लिष्यद्बलाकाद्वयः।
शून्यः किन्तु करेण कुञ्जर इति भ्रांतिं समुत्पादयन्
दंष्ट्राद्वन्द्वकरालकालवदनः कोलः कुतोऽप्यागतः ॥ ९ ॥

किमश्वः पार्श्वेषु प्लवनचतुरः किन्तु नृपतिः
शरान्मुञ्चन्नुच्चैश्चलतरकराकृष्टधनुषा।
किमालोलः कोलः परिहृतशरश्शौर्यरसिको
न जानीमस्तेषां क इह निपुणो वर्ण्यत इति ॥ १० ॥

त्रिविक्रमभट्टस्यैतौ।

भयभ्रष्टप्रेयोविरहनिरहंकारहरिणी-
मुखालोकोन्मीलद्गुरुकरुणरुग्णां सहचरीम्।
विलोक्य म्लेच्छन्तीमलमलमिति प्राक् प्रणिहिता
शरव्याल्लुब्धानां हृदयमपराद्धं न तु शराः ११ ॥

श्रीमुरारेः।

व्याघ्रानभीरभिमुखोत्पतितान् गुहाभ्यः
फुल्लासनाग्रविटपानिव वातरुग्णान् ।
शिक्षाविशेषलघुहस्ततया निमेषा-
त्तूणीचकार शरपूरितवक्त्ररन्ध्रान् ॥ १२ ॥

लक्षीकृतस्य हरिणस्य हरिप्रभावः
प्रेक्ष्य स्थितां सहचरीं व्यवधाय देहम् ।
आकर्णकृष्टमपि कामितया स धन्वी
बाणं कृपामृदुमनाः प्रतिसंजहार ॥ १३ ॥

अपि तुरगसमीपादुत्पतन्तं मयूरं
न स रुचिरकलापं बाणलक्षीचकार ।
सपदि गतमनस्कश्चित्रमाल्यानुकीर्णे
रतिविगलितबन्धे केशपाशे प्रियायाः ॥ १४ ॥

मेदश्छेदकृशोदरं लघु भवत्युत्थानयोग्यं वपुः
सत्त्वानामुपलक्ष्यते विकृतिमच्चित्तं भयक्रोधयोः ।
उत्कर्षः स च धन्विनां यदिषवः सिद्ध्यन्ति लक्ष्ये चले
मिथ्या हि व्यसनं वदन्ति मृगयामीदृग्विनोदः कुतः ॥ १५ ॥

कालिदासस्यैते ।

एतस्मिन् मृगयां गतेऽपि धनुषा बाणे समारोपितेऽ-
प्याकर्णान्तगतेऽपि मुष्टिविगतेऽप्येणाङ्गलग्नेऽपि च ।
न त्रस्तं न पलायितं न चलितं नोत्कण्ठितं नोत्प्लुतं
मृग्या यद्वशिनं करोति दयितं कामोऽयमित्याशया ॥ १६ ॥

अनङ्गभीमस्य ।

स्वेच्छाविहाररसिकस्य वनस्थलीषु
काकुत्स्थतः किमपि तस्य लघुत्वमासीत् ।
यस्माद्दशाननजयी रघुराजपुत्रः
पञ्चाननं तु निजघान धनुर्धरोऽयम् ॥ १७ ॥

बिल्हणस्य ।

उद्यानम्।

क्वचिच्चटुलकोकिलाकलितनूतनचूताङ्कुरं
कुरङ्गकुलसेवितं प्रकटलोलमूलं क्वचित्।
क्वचित्प्रवरसञ्चरत्सुरवधूपदैः पावनं
वनं नयति विक्रियामिह मनो मुनीनामपि ॥ १८ ॥

पटलमलिकुलानामुन्नमन्मेघनीलं
भ्रमदुपरि तरूणां पुष्पितानां विलोक्य।
मृदुमदकलकेकानिर्भरो नृत्तसक्त-
स्तरलयति कलापं मन्दमन्दं मयूरः ॥ १९ ॥

स्कन्धशाखान्तरालेषु पश्य जीमूतपङ्क्तयः।
लम्बमाना विलोक्यन्ते चलद्वलति(लगुलि?)का इव ॥ २० ॥

त्रिविक्रमभट्टस्य।

दृश्यन्ते मधुमत्तकोकिलवधूनिर्धूतचूताङ्कुर-
प्राग्भारप्रपतत्परागसिकतादुर्गास्तटीभूमयः।
याः कृच्छ्रादतिलङ्घ्य लुब्धकभयात्तैरेव रेणूत्करै-
र्धारापातिभिरस्ति लुप्तपदवीनिश्शङ्कमेणीकुलम् ॥ २१ ॥

प्रियङ्गुश्यामाङ्गो य इह विहरत्यम्बुजवने
विनिद्रे व्यागुञ्जन्मधुप इति तं जल्पतु जनः।
अहं शङ्के पङ्केरुहकुहरवासव्यसनिनीं
श्रियं भृङ्गच्छद्मा मुररिपुरुपेतो रमयितुम् ॥ २२ ॥

एतौ मुरारेः।

जम्बूनां कुसुमोदरे नवमधुन्याबद्धपानोत्सवाः
कीराः पक्वफलाशया मधुकरीं चुम्बन्ति मुञ्चन्ति च।
एतेषामपि जातकिंशुकदलैरेभिः समानत्विषां
पुष्पभ्रान्तिभृतः पिबन्ति सहसा चञ्चूषु भृङ्गाङ्गनाः ॥ २३ ॥

वसुकस्य।

निष्यन्दश्चन्दनानां शिशिरयति लतामण्डपं कुट्टिमाना-
मारार्द्धारागृहाणां ध्वनिमनुतनुते ताण्डवं नीलकण्ठः।
यन्त्रोन्मुक्तश्च वेगाच्चलति विटपिनां पूरयन्नालवाला-
नापातोत्पीडहेलाहृतकुसुमरजःपिञ्जरोऽयं जलौघः॥ २४॥

श्रीहर्षस्य।

अमन्यतासौ कुसुमेषु गर्भगं परागमन्धङ्करणं वियोगिनाम्।
स्मरेण मुक्तेषु पुरा पुरारये तदङ्गभस्मेव शरेषु सङ्गतम्॥ २५॥

विनिद्रपत्रालिगतालिकैतवान्मृगाङ्कचूडामणिवर्जनार्जितम्।
दधानमाशासु चरिष्णु दुर्यशः स कौतुकी तत्र ददर्श कैतकम्॥ २६॥

विचिन्वतीः पान्थपतङ्गहिंसनैरपुण्यकर्माण्यलिकज्जलच्छलात्।
व्यलोकयच्चम्पककोरकावलीः स शम्बरारेर्बलिदीपिका इव॥ २७॥

एते श्रीहर्षपण्डितस्य।

जीर्णोद्यानम्।

विपर्यस्तं सौधं कुलमिव महारम्भरचनं
सरः शुष्कं साधोर्हृदयमिव नाशेन सुहृदः।
फलैर्हीना वृक्षा विगुणविधियोगादिव नया-
स्तृणैश्छन्ना भूमिर्मतिरिव कुनीतेरविदुषः॥ २८॥

क्षताङ्गीनां तीक्ष्णैः परशुभिरुदग्रक्रमभृतां
रुजा कूजन्तीनामविरतकपोतोपरुदितैः।
स्वनिर्मोकच्छेदैः परिचितपरिक्लेशकृपथाः
श्वसन्तः शाखानां व्रणमिव निबध्नन्ति फणिनः॥ २९॥

विशाखदेवस्यैतौ।

आश्रमवर्णनम्।

बालेयतण्डुलविलोपकदर्थिताभि-
रेताभिरग्निशरणेषु सधर्मिणीभिः।
उत्त्रासहेतुमपि दण्डमुदस्यमान-
माघ्रातुमिच्छति मृगे मुनयो हसन्ति॥ ३०॥

तैर्मेधाजननव्रतप्रणयिभिर्व्यूहैर्बटूनामियं
सिक्ता नित्यवसन्तविभ्रमवती रम्या पलाशावली।
एतस्यां हरिणारिपाणिजस्रणिश्रेणिश्रियः कोरकाः
गोपायन्ति तपोवनं वनकरिक्रीडाकराकर्षणात्॥ ३१॥

एतौ श्रीमुरारेः।

नीवाराः शुकगर्भकोटरमुखभ्रष्टास्तरूणामधः
प्रस्निग्धाः क्वचिदिङ्गुदीफलभिदः सूच्यन्त एवोपलाः।
विश्वासोपगमादभिन्नगतयः शब्दं सहन्ते मृगा-
स्तोयाधारपथाश्च वल्कलशिखानिष्यन्दरेखाङ्किताः॥ ३२॥

वल्मीकाग्रनिमग्नमूर्तिरुरगत्वग्ब्रह्मसूत्राम्बरः
कण्ठे जीर्णलताप्रतानवलयेनात्यर्थसंपीडितः।
अंसव्यापिशकुन्तनीडनिचितं बिभ्रज्जटामण्डलं
यत्र स्थाणुरिवाचलो मुनिरसावभ्यर्कबिम्बं स्थितः॥ ३३॥

प्राणानामनिलेन वृत्तिरुचिता सत्कल्पवृक्षे द्रुमे
तोये हेमसहस्रपत्रसुभगे धर्माभिषेकक्रिया।
ध्यानं रत्नशिलातलेषु विबुधस्त्रीसन्निधौ संयमो
यत्काङ्क्षन्ति तपोभिरन्यमुनयस्तस्मिंस्तपस्यन्त्यमी॥ ३४॥

कालिदासस्यैते।

वासोऽर्थं दययैव नातिपृथवः कृत्तास्तरूणां त्वचो
[मैं][1]ग्राल[क्ष्यं][2]जरत्कमण्डलु नभःस्वच्छं पयो नैर्झरम्॥
दृश्यन्ते त्रुटितोज्झिताश्च वटुभिर्मौञ्ज्यः क्वचिन्मेखला
नित्याकर्णनया शुकेन च पदं साम्नामिदं पठ्यते॥ ३५॥

श्रीहर्षस्य।

बध्वा पद्मासनानि स्थिरतरतनवः श्वाससंरोधदुःखै-
रात्मानं पीडयन्तो मुकुलितनयनाः पादपानां तलेषु।
प्रीतैरालोक्यमाना वटुभिरतितरां वेष्टिता हासवद्भिः
कौ(का?)पेये नानुकारं दधति च कपयो योगभाजां मुनीनाम्॥ ३६॥

भास्करवर्मणः।

---

१. भ, क, ख, च, २. क्ष, क, ख, च,

अथ सामान्यर्षिवर्णनम् ।

तेजसा तपसो दीप्तः स्निग्धश्च करुणागुणात् ।
समं सन्दर्शितादित्यचन्द्रोदय इवार्णवः ॥ ३७ ॥

शिरःप्रदेशलम्बिन्या कुर्वन् रुद्राक्षमालया ।
फलिता इव तीर्थाम्भस्सेकपुष्पजटा लताः ॥ ३८ ॥

कुमारदासस्यैतौ ।

पूरयित्वेव सर्वाङ्गमतिरिक्ताः सिराततीः ।
जटारूपेण बिभ्राणैः शिरोभिर्गहनं सदः ॥ ३९ ॥

अविद्याबीजविध्वंसादयमार्षेण चक्षुषा ।
कालौ भूतभविष्यन्तौ वर्तमानमिवाविशत् ॥ ४० ॥

एतौ मुरारेः ।

एते व्योमनि शोषयन्ति हरिणत्रासाच्चिरं चीवरे
सन्ध्याकर्मविधौ कमण्डलुमिमे पश्यन्ति रिक्तं भृतम् ।
भिक्षन्ते च फलान्यमी करपुटीपात्रेण चानोकहा-
नेषामर्घविधौ च सन्निधिगताः पुष्प्यन्त्यकाण्डे लताः ॥ ४१ ॥

राजशेखरस्य ।

शार्दूली स्नेहगर्भं मुकुलितनयना लेढि शावं हरिण्याः
बन्धुप्रीत्या शिखण्डी तिरयति फणिनामातपं कीर्णबर्हः ।
सिंही रक्षत्यपत्यं स्वकमिव कलभं निर्गतायाः करिण्या
मैत्र्या येषां निवासे गिरिशिखरदरीशालिनस्ते जयन्ति ॥ ४२ ॥

भदन्तगोपदत्तस्य ।

परशुरामः ।

उत्पत्तिर्जमदग्नितः स भगवान् देवः पिनाकी गुरुः
वीर्यं यत्तु न तद्गिरां पथि ननु व्यक्तं हि तत्कर्मभिः ।
त्यागस्सप्तसमुद्रमुद्रितमहीनिर्व्याजदानावधिः
सत्यं ब्रह्मतपोनिधेर्भगवतः किं किं न लोकोत्तरम् ॥ ४३ ॥

ज्योतिर्ज्वालाप्रचयजटिलस्सन्निकर्षे कुठार-
स्तूणीरोंऽसे वपुषि च जटाचापचीराजिनानि ।
पाणौ बाणः स्फुरति वलयीभूतलोलाक्षसूत्रो
वेषः शोभां व्यतिकरवतीमुग्रशान्तस्तनोति ॥ ४४ ॥

एतौ भवभूतेः ।

अगस्त्यः ।

रविरथपथरोधमेधमानं स्थगयति विन्ध्यमवन्ध्ययाऽऽज्ञया यः ।
उदधिमधिकरं करोति रोषादपि स मुनिर्मुनयस्तथाऽपरेऽपि ॥ ४५ ॥

सर्वज्ञलोष्टस्य ।

निपीते येनाब्धौ स्तिमितगुरुभिः पक्षपटलैः
प्रयत्नादुड्डीय प्रतिपदमपव्यस्तपतिताः ।
विशन्तः कौलीरं कुहरमशरण्याः शिखरिणः
क्षणं दृष्टास्तस्य स्तुतिषु न गिरां साहसरसः ॥ ४६ ॥

ध्रुवमिह चतुरम्भोनिधिचरितापोशनकर्मणि मुनीन्द्रे ।
भक्ष्यंमन्यानि किमपि चकम्पिरे सप्त भुवनानि ॥ ४७ ॥

एतौ मुरारेः ।

जयति कलशजन्मा सत्त्वसत्यप्रतिष्ठः
सलिलनिधिमपासीदेकहस्तोदरेण ।
कमठभुजगपृथ्वीपद्मनाभादि मज्ज-
च्चुलुकगमविचिन्वन् यस्त्रिलोकीं बभार (?) ॥ ४८ ॥

कूर्मबार्हतस्य ।

किं ब्रूमो हरिमस्य विश्वमुदरे किं वा फणां भोगिनः
शेते यत्र हरिः स्वयं जलनिधेः सोऽप्येकदेशस्थितः ।
आश्चर्यं कलशोद्भवो मुनिरसौ यस्यैकहस्तेऽम्बुधि-
र्गण्डूषीयति पङ्कजीयति फणी भृङ्गीयति श्रीपतिः ॥ ४९ ॥

विश्वामित्रः ।

यः क्षत्रदेहं परितक्ष्य टङ्कैस्तपोमयैर्ब्राह्मणमुच्चकार ।
परोरजोभिः स्वगुणैरगाधः स गाधिपुत्रोऽपि गृहानुपैति ॥ ५० ॥

सुराधीशक्रोधाज्जगदपरथा कर्तुमपरे
पुराणब्रह्माणो भुवनपितरः सप्त च कृताः ।
धृतस्तुष्टेनामी बहिरपि च वैश्वानरपथा-
त्कथा पौराणी यच्चरितमिति ह स्म प्रथयति ॥ ५१ ॥

एतौ मुरारेः ।

क्षत्रब्रह्ममहानिधिः क्षितिभुजां जेता मुनीनां च यः
पाणी यस्य परं पवित्रिततलौ चाप[स्रुचोर्धा]रणात् ।
विश्वामित्र इति त्रिलोकतिलकं तं वेत्सि नास्मद्गुरुं
यस्मिं(योऽन्य ?) श्चित्रशिखण्डिनां भगवता धात्रा कृतः सप्तमः ॥ ५२ ॥

न्यस्यान्यान्दक्षिणस्यां दिशि गगनमुनीन् सप्त कॢप्तर्क्षपक्षा-
न्कव्यं हव्यं च कृत्वा त्रिदशजनहृते सर्वयागाङ्गवर्गे ।
वासिष्ठीं शापमुद्रां सपदि विदलयन् यो महासत्रबन्धे
मध्येव्योम त्रिशङ्कोः शतमखमुखस्वर्गसर्गं चकार ॥ ५३ ॥

नारदः ।

वीराणां शस्त्रसङ्घट्टे करिणां दन्तघट्टने ।
व्याघ्राणां नखनिर्भेदे नारदः परितुष्यति ॥ ५४ ॥

लावकतित्तिरिकुक्कुटमेषैर्महिषैश्च या रणक्रीडा ।
द्रुहिणाच्युतकलियोनेस्ताः प्रीत्यै नारदस्य मुनेः ॥ ५५ ॥

यन्नारीतनुरच्युतः स भगवान् कन्दर्पदर्पापहो
यच्चाभूद्गिरिशः पतिश्च मरुतां यत्फेनपुञ्जायुधः ।
सौम्यं यच्च विमुच्य रूपमभवच्चण्डी हिमाद्रेः सुता
तत्सर्वं बत नारदस्य ललितं युद्धैकलीलारुचेः ॥ ५६ ॥

राजशेखरस्यैतौ

१. लानां. क. ख. ग. च. २. मु. क. ख.

जीमूतवाहनः ।

जीमूतवाहन इति त्रिजगत्प्रसिद्धो
विद्याधराधिकगुणोऽधिपतिर्बभूव ।
दत्वा कवाटमिव येन निजं शरीरं
तार्क्ष्यस्य वक्त्रभवने फणिनो निरुद्धाः ॥ ५७ ॥

भेरीभाङ्कारस्य ।

आच्छिद्योरगमण्डलीकवलनाकाङ्क्षारसं पत्रिणां
भर्तुर्येन शरीरदानविधिना मन्ये जगद्रक्षितम् ।
नो चेत्तेन गरुत्मता कवलिते शेषे निरालम्बना
क्व क्षोणी क्व पयोधराः क्व गिरयः क्वैते दिशां नायकाः ॥ ५८ ॥

लोष्टसर्वज्ञस्य ।

विश्वामित्रश्च मांसं श्वपच इव पुराऽभक्षयद्यन्निमित्तं
नाडीजङ्घो निजघ्ने कृततदुपकृतिर्यत्कृते गौतमेन ।
पुत्रोऽयं कश्यपस्य प्रतिदिनमुरगा[न्त्ति] तार्क्ष्यो यदर्थं
प्राणांस्तानेष साधुस्तृणमिव कृपया यः परार्थं ददाति ॥ ५९ ॥

श्रीहर्षस्य ।

अथ तौर्यत्रिकम् ।

तत्रादौ गीतम्—

गीतस्य माहात्म्यवशादभीष्टं वरं हरात्प्राप स रावणोऽपि ।
यत्कौतुकाद्गोपकुलस्य मध्ये बभूव कृष्णोऽपि स गोपरूपः ॥ ६० ॥

वनभुवि विचरंस्तृणोदकार्थी क्षततनुरुग्रशिलीमुखप्रहारैः ।
पशुरपि वितरत्यसून् यदर्थं कथमिव न स्तुतिपात्रमत्र गीतम् ॥ ६१ ॥

वाचं यः सरसप्रसन्नमधुरामौदार्यलेखोज्ज्वलां
नानालङ्करणप्रपञ्चरुचिरां कान्तां मनोहारिणीम् ।
गेयं सद्ग्रमकादिभिः परिचितं कर्तुं प्रगल्भश्च य-
स्तं प्राहुर्जनरञ्जनैकचतुरं वाग्गेयकारं बुधाः ॥ ६२ ॥

सोमेश्वरदेवस्यैतौ ।

१. चतुरां क. ख. च.

प्रियविरहविषादस्यौषधं योषितानां
विविधविधुरचिन्ताकूतविश्रान्तिहेतुः ।
अयममृततरङ्गः कर्णयोः केन सृष्टो
मधुररसनिधानं निःस्वनः पञ्चमस्य ॥ ६३ ॥

अयं हि प्रथमो रागः समस्तजनरञ्जने ।
यस्य नास्ति द्वितीयोऽपि स कथं पञ्चमो भवेत् ॥ ६४ ॥

त्रिविक्रमभट्टस्यैतौ ।

स्थानं प्राप्यादधानं प्रकटितगमकं मन्द्रतारव्यवस्थं
निर्ह्रादिन्या विपञ्च्या मिलितमलिरुतेनेव तन्त्रीस्वनेन ।
एते दन्तान्तरालस्थिततृणकबलच्छेदशब्दं नियम्य
व्याजिह्माङ्गाः कुरङ्गाः स्फुटललितपदं गीतमाकर्णयन्ति ॥ ६५ ॥

श्रीहर्षस्य ।

नाट्यम् ।

जीमूतस्तनितविशंकिभिर्मयूरैरुद्ग्रीवैरनुरसितस्य पुष्करस्य ।
निर्ह्रादिन्युपहतमध्यमस्वरोत्था मायूरी मदयति गर्जना मनांसि ॥ ६६ ॥

कालिदासस्य ।

व्यक्तिर्व्यञ्जनधातुना दशविधेनाप्यत्र लब्धाऽमुना
विस्पष्टो धृतमध्यलम्बितपरिच्छिन्नस्त्रिधाऽयं लयः ।
गोपुच्छप्रमुखाः क्रमेण यतयास्तिस्रोऽपि सम्पादिता-
स्तत्त्वौघानुगताश्च नाट्यविधयः सम्यक्त्रयो दर्शिताः ॥ ६७ ॥

श्रीहर्षस्य ।

नादवृद्धिक्षयज्ञश्च ग्रहमोक्षेऽप्यलक्षितः ।
न्यासोपन्यासताल[ ज्ञ ]स्तलकोणप्रहारवित् ॥ ६८ ॥

अङ्गदोषपरित्यक्तश्चतुर्मार्गकृतश्रमः ।
ज्ञाता कुलकवाद्यस्य रञ्जको वादकः स्मृतः ॥ ६९ ॥

१. ध्वनिरव. क. ख. च.

यथावद्दानाद्धर्मः कीर्तिः सिद्धिर्भवेज्जयः ।
मनसः परितुष्टिश्च भुक्तिर्मुक्तिरपि ध्रुवम् ॥ ७० ॥

सोमेश्वरस्य ।

नृत्यम् ।

इन्द्राभ्यर्थनया पूर्वं भरताय चतुर्मुखः ।
प्रमोदाय महेन्द्रस्य नाट्यं समुपदिष्टवान् ॥ ७१ ॥

तस्यैव ।

देवानामिदमामनन्ति कवयः कान्तं क्रतुं चाक्षुषं
रुद्रेणेदमुमाहृतव्यतिकरे स्वाङ्गे विभक्तं द्विधा ।
त्रैगुण्योद्भवमत्र लोकचरितं नानारसं दृश्यते
नाट्यं भिन्नरुचेर्जनस्य भविति ह्येकं समाराधनम् ॥ ७२ ॥

अङ्गैरन्तर्निहितवचनैः सूचितः सम्यगर्थः
पादन्यासो लयमनुगतस्तन्मयत्वं रसेषु ।
शाखायोनिर्मृदुरभिनयः षड्विकल्पोऽनुवृत्तो
भावो भावे दधति विषयान् रागबन्धः स एव ॥ ७३ ॥

वामे सन्धिस्तिमितवलयं न्यस्य हस्तं नितम्बे
कृत्वा श्यामाविटपसदृशं स्रस्तमुक्तं द्वितीयम् ।
पादाङ्गुल्या लुलितकुसुमे कुट्टिमे पातिताक्षं
नृत्तादस्याः स्थितमतितरां कान्तमृज्वायताक्षम् ॥ ७४ ॥

कालिदासस्यैते ।

सारङ्गीसन्नताङ्ग्या जगदपि विजितं ताण्डवोत्ताण्डिताङ्ग्या
भ्रूभङ्गैः रागसङ्गैर्धनुरनुकुरुते सज्यमेषा स्मरस्य ।
आस्तामास्तां न चैतद्धतबत किमियं लासिका बाहुभङ्गै-
रुत्साहोज्जृम्भमाणा हतमधिहृदयं खण्डखण्डं करोति ॥ ७५ ॥

वामनागस्य ।

१ क्षयम् क. ख. च. २ वे, क, ख च.

वात्स्यायन[स्य]।

त्यागी वृषः सुभग इत्युपलभ्यमानः
कल्यः कलासु सुकृती दृढभक्तिराढ्यः।
स्त्रीणां मतो नववयाः शुचिरिङ्गितज्ञः
क्रीडारतश्च मधुरश्च महार्हवेषः ॥ ७६ ॥

असाध्यायाः सुखं सिद्धिः सिद्धायाश्चानुरञ्जनम्।
रक्तायाश्च रतिः सम्यक् कामशास्त्रप्रयोजनम् ॥ ७७ ॥

जातिस्वभावगुणदेशजधर्मचेष्टाभावेङ्गितेषु विकलो रतितन्त्रमूढः।
लब्ध्वाऽपि[1] हि स्खलति यौवनमङ्गनानां किं नालिकेरफलमवाप्य कपिः करोति ७८

आन्ध्री प्रीतिनिबन्धनैकनिपुणा लाटी विदग्धप्रिया
कर्णाटी सुरतोपचारचतुरा नारी शुचिश्चोलिका।
आभीरी पुरुषायितप्रियरता लज्जान्विता गूर्जरी
काश्मीरी रतिलालसा निधुवने धृष्टा महाराष्ट्रकी ॥ ७९ ॥

पुष्पदन्तस्य।

अङ्गुष्ठे पदगुल्फजानुजघने नाभौ च वक्षःस्थले
कक्षे कण्ठकपोलदन्तवसने नेत्रालिके मूर्धनि।
शुक्लाशुक्लविभागतो मृगदृशामङ्गेष्वनङ्गस्थिति-
रूर्ध्वाधोगमनेन वामपदगा पक्षद्वये वर्तिनी[2] ॥ ८० ॥

श्यामा कफप्रकृतिका बडबा मृगी वा
गन्धर्वयक्षरजनीचरसत्त्विका वा।
बालाऽथवाऽभिनवयौवनभूषिताङ्गी
सा भामिनी भवमुदां परमं रहस्यम् ॥ ८१ ॥

विलसदमलदीपे पुष्पदामावकीर्णे
प्रसृतसुरभिधूपे धाम्नि कामी सुवेषः।
सह सहचरवर्गैर्वामपार्श्वे निवेश्य
स्त्रियमुपहितभूषां भावयेन्नर्मगोष्ठीम् ॥ ८२ ॥

---

१ लब्धो. क. ख. च. २ लक्षयेत्. क. पाठभेदः

अध्वक्लान्ततनुर्नवज्वरवती नृत्यश्लथाङ्गी तथा
मासैकप्रसवा दधाति सुरते षण्मासगर्भाऽसुखम् ।
विख्याता विरहस्य सङ्गमविधौ क्रुद्धप्रसन्ने ऋतु-
स्नाने नूतनसङ्गमे मधुमदे रागास्पदं योषितः ॥ ८३ ॥

दारिद्र्या[दं]सहिष्णुतामलिनताकार्पण्यभावाज्ञता-
पारुष्यैरतिनिष्ठुरात्प्रणयतो भूषानिरोधादपि ।
मिथ्यादोषविशङ्कनादतिशयाद्योगाद्वियोगात्तथा
कार्कश्याद्वपुषो व्रजन्ति सततं वैराग्यमुच्चैः स्त्रियः ॥ ८४ ॥

स्वातन्त्र्यं पितृमन्दिरे च वसतिर्यात्रोत्सवे सङ्गति-
र्गोष्ठी पूरुषसन्निधावनियमो वासो विदेशे तथा ।
संसर्गः सह पुंश्चलीभिरसकृद्वृत्तेर्निजायाः क्षतिः
पत्युर्वार्धकमीप्सितं प्रवसनं नाशस्य हेतुः स्त्रियाः ८५ ॥

कोक्कोकस्य ।

रूपान्वितं करणवेदिनमल्परोषं सत्याभिधायिनमनिष्ठुरमिष्टगन्धम् ।
स्त्रीगुह्यरक्षणपरं सुरतेऽनुकूलं जन्मान्तरेष्वपि नरं प्रमदाः स्मरन्ति ॥ ८६ ॥

वल्लभस्य ।

नरः कलासु कुशलो वाचालश्चाटुकारकः ।
असंस्तुतोऽपि नारीणां चित्तमाश्वेव विन्दति ॥ ८७ ॥

कामयन्ते विरज्यन्ते रञ्जयन्ते त्यजन्ति च ।
कर्षयन्त्यपि सर्वार्थान् ज्ञायन्ते केन योषितः ॥ ८८ ॥

वत्सः प्रस्रवणे मेध्यः श्वा मृगग्रहणे शुचिः ।
स्त्रीमुखं रतिसम्पर्के शकुनिः फलपातने ॥ ८९ ॥

नातः परतरं किंचिदस्ति रागस्य वर्धनम् ।
नखदन्तक्षतोत्थानां कर्म[णां] गतयो यथा ॥ ९० ॥

शास्त्राणां विषयस्तावद्यावन्मन्दरसा नराः ।
रतिचक्रे प्रवृत्ते तु नैव शास्त्रं न च क्रमः ॥ ९१ ॥

---

१. दि क. ख. च. २. णो. क ख. च.

कृत्याकृत्यविहीनं तु युक्तायुक्तविवर्जितम् ।
वाच्यावाच्यविनिर्मुक्तं संभोगं निस्त्रपश्चरेत् ॥ ९२ ॥

वात्स्यायनस्यैते ।

ज्योतिषम् ।

अप्रदीपा यथा रात्रिरनादित्यं यथा नभः ।
तथाऽसांवत्सरो राजा भ्रमत्यन्ध इवाध्वनि ॥ ९३ ॥

न तत्सहस्रं करिणां वाजिनां वा चतुर्गुणम् ।
करोति देशकालज्ञो यदेको दैवचिन्तकः ॥ ९४ ॥

समाः षष्टिर्द्विघ्ना मनुजकरिणां पञ्च च निशा
हयानां द्वात्रिंशत् खरकरभयोः पञ्च च कृतिः ।
विरूपा सैवायुर्वृषमहिषयोर्द्वादश शुनः
स्मृतं छागादीनां दशकसहिताः षट् च परमम् ॥ ९५ ॥

वराहमिहिरस्यैते ।

प्रासादकूपसरसीषु सहस्रमेक-
मायुर्युगं पुरवरेषु महत्सु विद्यात् ।
ग्रामेषु चायुतमुदीरितमुत्तमेषु
वृक्षेषु पञ्च च शतान्यपि कीर्तितानि ॥ ९६ ॥

म्लेच्छा हि यवनास्तेषु सम्यक्छास्त्रमिति स्थितम् ।
ऋषिवत्तेऽपि पूज्यन्ते किं पुनर्दैवविज्जनः ॥ ९७ ॥

किंचित्सन्ध्यामतिक्रम्य किंचिदुद्भिन्नतारकम् ।
विजयो नाम योगोऽयं सर्वकार्यार्थसिद्धिदः ॥ ९८ ॥

रवौ गगनमध्यस्थे मुहूर्तेऽभिजिदाह्वये ।
भिनत्ति सकलान्दोषांश्चक्रमादाय केशवः ॥ ९९ ॥

वल्लभस्यैते ।

शकुनम् ।

दधिमधुघृतलाजपुष्पाक्षतोदुम्बराश्वत्थमुक्तामणिच्छत्र-
दूर्वाङ्कुरादर्शकन्याध्वजस्यन्दनाष्टापदाक्षा नृपाः ।

श्रीतरुर्भद्रपीठानिसस्यानिमत्स्याहयाहंसचाषौवृषःकेसरीदक्षिणा
वर्तशङ्खाब्जसिद्धार्थकाः ।
रोचना स्वस्तिकस्तोरणं कीचका वेणवो वार्वधूः
सिक्तगन्धो गजस्तोयलम्बाम्बुदः पूर्णकुम्भोऽद्रिरिन्दुः ।
फलान्यार्द्रमांसं सितं चामरं गौस्सवत्साङ्गना
पुत्रिणी मानुषं वर्धमानं सहस्रं नराणां प्रयुक्तानि यानानि
धन्वन्तरिर्वामनो ब्राह्मणो भूमिरभ्युद्धृता ।
सिद्धमन्नं वराहश्च तोयोत्थितस्त्रिणयनमधुसूदनस्कन्दपद्मा-
सना लोकपालाः सुराः खंदिशोऽग्निःसरांसि स्रवन्त्यः समुद्रः
सुखो मारुतो ज्यौतिषं धर्मशास्त्राणि तीर्थानि धर्मकामश्रिता वाल-
खिल्यादयो वेदिनां सन्निधिः कौस्तुभं काञ्चनं माणिभद्रः सुमेरुः
प्रियङ्गुप्रदीपौ वचामोदकादितिररुन्धतिसावित्र्युमाकाशगङ्गा-
शचीदेवसेना स्वधाशान्तिलक्ष्मीसरस्वत्युपर्युक्षमस्वस्तिशब्दावषट्-
कार ओंकारपुण्याहधर्मक्रियाचेत्यष्टोत्तरं मङ्गलानां शतम् ।
दर्शनात् स्पर्शनात् कीर्तनाच्चाशुभानि व्यपोह्यार्थसिद्धिं दिश-
न्त्युत्तमाः ॥ १०० ॥

वाग्भटात् ।

कार्पासौषधकृष्णधान्यलवणक्लीबास्थितैलं वसा-
पङ्काङ्गारगुडाहिवर्मशकृतः क्लेशायसव्याधिताः ।
वान्तोन्मत्तजटीन्धनानि च तृणक्षुत्क्षामतक्रादयो
मुण्ड्यभ्यक्तविमुक्तकेशपलिताः काषायिणश्चाशुभाः ॥ १०१ ॥

वराहमिहिरस्य ।

सामुद्रिकम् ।

अङ्गानि धीपटुत्वं शक्तिर्दशनाः शनैर्विशीर्यन्ते ।
निखिलेन्द्रियाणि येषां चिरायुषस्ते नरा ज्ञेयाः ॥ १०२ ॥

विभवसहं द्विरपत्यं जनलाभः प्रभुत्वमव्याजम् ।
वयांसि भवन्ति प्रथमे प्रायः स्वल्पायुषां पुंसाम् ॥ १०३ ॥

अतिकृष्णेष्वतिगौरेष्वतिपीनेष्वतिकृशेषु मनुजेषु ।
अतिदीर्घेष्वतिलघुषु प्रायेण न विद्यतेऽपत्यम् ॥ १०४ ॥

यद्दन्तुरो विमूर्खो रोमचितो वा यदल्पायुः ।
यन्मेदुरस्सदार्ढ्यस्तदद्भुतं जृम्भते भुवने ॥ १०५ ॥

बुद्धियुतो यद्दीर्घो ह्रस्वो यज्जायते मूर्खः ।
पिङ्गः शुचिः [1]सुशीलः काणाक्षो यत्तदाश्चर्यम् ॥ १०६ ॥

चपलः स्थूलो रूक्षः [2]परुषो घनमांसलः शिरानिचितः ।
स पुमान् [3]वैतरणाख्यः समुद्रमपि शोषयत्यखिलम् ॥ १०७ ॥

यस्य शरीरं पुष्टिं गृह्णात्यन्येन येन केनापि ।
स नरो दुन्दुभिकाख्यः कलयति कल्याणवैकल्यम् ॥ १०८ ॥

शुभलक्षणमप्येकं बाह्यं न विलोक्यते स्फुटं यस्य ।
अथ दृश्यते पुनः श्रीस्तस्य तदस्ति ध्रुवं[चान्तः] ॥ १०९ ॥

[4]वक्त्रानुगतं रूपं रूपानुगतं नृणां भवति चित्तम् ।
चित्तानुगतं सत्त्वं सत्त्वानुगता गुणाः प्रायः ॥ ११० ॥

दुर्लभराजस्यैते ।

श्रान्तस्य यानमशनं च बुभुक्षितस्य
पानं तृषा[5]र्तपथिकस्य भयेषु रक्षा ।
एतानि यस्य पुरुषस्य भवन्ति काले
धन्यं वदन्ति खलु तं नरलक्षणज्ञाः ॥ १११ ॥

वराहमिहिरस्य ।

स्वकीयवंशस्थशरीरभाजनं (?) वशीकरोत्युक्तिगुणैः सभाजनम् ।
दयाक्षमासत्यसम[त्वदृग्युतो] जनेषु पूज्यः स नरो न रोगभाक् ॥ ११२ ॥

यो रुणद्धि सततं [हृ[6]]दि वेगान् क्रोधलोभमदनप्रभृतीनाम् ।
प्रेत्य चेह च हि तस्य समीपं स्वागतैव सकला गुणसम्पत् ॥ ११३ ॥

लब्धमर्थमपि यः परित्यजेद्दुर्लभं प्रति च यः प्रयत्नवान् ।
मन्दबुद्धिनियतश्च यः पुमांस्तस्य रेणुरचिता रथोद्धता ॥ ११४ ॥

श्रीवैद्यभानुपण्डितस्य ।

---

१. कु. क. ख. च. २. पु. क. ख. च. ३. पै. क. ख. च. ४. चक्रा. क. ख. च. ५ परिगत. क. पाठभेदः ।
६. य. क. ख. च.

नित्यं हिताहारविहारसेवी समीक्ष्यकारी विषयेष्वसक्तः ।
दाता समः सत्यपरः क्षमावानाप्तोपसेवी च भवत्यरोगः ॥ ११५ ॥

अर्थेष्वलभ्येष्वकृतप्रयत्नं कृतादरं नित्यमुपायवत्सु ।
जितेन्द्रियं नानु[त]पन्ति रोगास्तत्कालयुक्तं यदि ना(चा?)स्ति दैवम् ॥११६॥

वाग्भटस्यैतौ ।

अकालमृत्युं परिहृत्य जीवितं ददाति यो देहसुखं च देहिनाम् ।
न तेन धात्रास्ति समः कुतोऽधिको न जीविताद्दानमिहातिरिच्यते ॥११७॥

यथेक्षुहेतोः सलिलं प्रसेचितं तृणानि वल्लीरपि तन्निषिञ्चति ।
तथा क्रिया धर्मनिमित्तमार्जिता सुखार्थलाभेऽपि न धर्महापिका ॥ ११८ ॥

कैरणादस्यैतौ ।

अशीतेनाम्भसा स्नानं पयःपानं नवाः स्त्रियः ।
एतद्वो मानवाः पथ्यं स्निग्धमुष्णं च भोजनम् ॥ ११९ ॥

अश्विनीकुमारयोः ।

आयुर्घृते गुडे रोगा नित्यं मृत्युर्विदाहिषु ।
आरोग्यं कटुतिक्तेषु बलं माषे पयस्सु च ॥ १२० ॥

आत्रेयस्य ।

किं शोधनेन वमनेन च भेषजेन
किं वा रसायनदिनर्तुहितोपचारैः ।
स्वातन्त्र्यमेकमपहाय नरस्य नाधिं
व्याधिं निहन्ति जगतस्त्रितयेऽपि किंचित् ॥ १२१ ॥

सुरम्या यामिन्यः शशधरसुधाधौतककुभः
स्रजो नानाकाराः परिमलमिलन्मत्तमधुपाः ।
प्रभूतं ताम्बूलं रतिसमयसज्जा प्रियतमा
निरातङ्कं चेतो यदि वद किमन्यद्वृषयति ॥ १२२ ॥

---

१. च. क. पाठभेदः.

श्रुतचरितसमृद्धे कर्मदक्षे दयालौ
भिषजि निरनुबन्धं देहरक्षां निवेश्य ।
भवति विपुलतेजःस्वास्थ्यकीर्तिप्रभावः
स्वकुशलफलभोगी भूमिपालश्चिरायुः ॥ १२३ ॥

वल्लभदेवस्यैतौ ।

अथ भोजनम् ।

पयःस्मिता मण्डकमण्डनाम्बरा वटाननेन्दुः पृथुलड्डुकस्तनी ।
पदं रुचेर्भोज्यभुजां भुजिक्रिया प्रिया बभूवोज्ज्वलकूरहारिणी ॥ १२४ ॥

यदादिहेतुः सुरभिः समुद्भवे भवेद्यदाज्यं सुरभि ध्रुवं ततः ।
वधूभिरेभ्यः प्रवितीर्य पायसं रसौघकुल्यातटसैकतीकृतम् ॥ १२५ ॥

यदप्यपीता वसुधालयैस्सुधा तदप्यदः स्वादु ततोऽनुमीयते ।
अपि क्रतूषर्बुधदग्धगन्धिने स्पृहां यदस्मै दधते सुधान्धसः ॥ १२६ ॥

घृतप्लुते भोजनभाजने पुरः स्फुरत्पुरन्ध्रिप्रतिबिम्बिताकृतेः ।
युवा निधायोरसि लड्डुकद्वयं नखैर्लिलेखाथ ममर्द निर्दयम् ॥ १२७ ॥

अमीभिराकण्ठमभोजि तद्गृहे तुषारधारामृदितेव शर्करा ।
हयद्विषद्भष्कयणीपयस्सुतं सुधाह्रदात्पङ्कमिवोद्धृतं दधि ॥ १२८ ॥

त्वया विधातर्यदकारि चामृतं कृतं च यज्जीवनमम्बु साधु तत् ।
वृथेदमारम्भि तु सर्वतोमुखस्तथोचितः कर्तुमिदंपिबस्तव ॥ १२९ ॥

षडेते हर्षपण्डितस्य ।

भुञ्जीत क्षितिपाधिपो नृपवरैः सौधेषु रत्नोपलैः
स्निग्धेषु[1] प्रतिबिम्बतुल्यघटनैर्बिम्बैः स्वकीयैर्वृतः ।
दिक्पालैरिव पङ्क्तिभुक्तिरसिकैरासेव्यमानोऽङ्गना-
पाणिप्रेरितचारुचामरचयाक्रान्तश्रमप्रक्रमः[3] ॥ १३० ॥

भोजनं देहि राजेन्द्र शाकसूपघृतान्वितम् ।
माहिषं च शरच्चन्द्रचन्द्रिकाधवलं दधि ॥ १३१ ॥

परमारजगद्देवस्य ।

१. सिद्धे. २. कूल. ३. मम्. क. पाठभेदाः

कामं प्रदीपयति रूपमभिव्यनक्ति
सौभाग्यमावहति वक्त्रसुगन्धितां च ।
ऊर्जां करोति कफजांश्च निहन्ति रोगां-
स्ताम्बूलमेकमपरान् स्वगुणान् करोति ॥ १३२ ॥

युक्तेन चूर्णेन करोति रागं रागक्षयं पूगफलातिरिक्तम् ।
चूर्णाधिकं वक्त्रविगन्धिकारि पत्राधिकं साधु करोति गन्धम् ॥ १३३ ॥

वराहमिहिरस्य ।

प्रत्युषसि भोजनान्ते युवतीनां सङ्गमे रतेर्विरमे ।
राजनि विदुषां संसदि ताम्बूलं नात्ति यः स पशुः ॥ १३४ ॥

ताम्बूलं कटुतिक्तमुष्णमधुरं क्षारं कषायान्वितं
वातघ्नं कफनाशनं कृमिहरं दुर्गन्धनिर्णाशकम् ।
स्त्रीसंभाषणभूषणं रुचिकरं शोकस्य विच्छेदकं
ताम्बूलस्य सखे त्रयोदश गुणाः स्वर्गेऽपि ते दुर्लभाः ॥ १३५ ॥

पर्णाग्रं पर्णपृष्ठं च चूर्णपत्रं तथैव च ।
रात्रौ खदिरताम्बूलं हरेरपि हरेच्छ्रियम् ॥ १३६ ॥

॥ इति श्रीमदारोहकभगदत्तजल्हणदेवविरचितायां सूक्तिमुक्तावल्यां सर्वपदार्थवर्णनम् ॥



# नीतिपद्धतिः ( ११० )

बोद्धा युवा[1] रक्षितमन्त्रतन्त्रैः[2] सत्वेन संवर्मितचित्तवृत्तिः ।
देशं बलं कालमवेक्ष्य[3] कर्ता तस्येन्द्रवज्राहतिरप्यपार्था ॥ १ ॥

श्रीवैद्यभानुपण्डितस्य ।

श्रेयः प्रसूते विपदो रुणद्धि यशांसि दुग्धे मलिनं प्रमार्ष्टि ।
संस्कारशौचेन परं पुनीते शुद्धा हि बुद्धिः किल कामधेनुः ॥ २ ॥

राजशेखरस्य ।

नातिनीचैर्न चाप्युच्चैर्भवितव्यं फलार्थिभिः ।
स्तोकं नत्वा पिबन्नम्भः कुम्भः प्राप्नोति पूर्णताम् ॥ ३ ॥

मा स्म सन्धिं विजानन्तु मा स्म जानन्तु विग्रहम् ।
आख्यातं यदि शृण्वन्ति भूपास्तेनैव पण्डिताः ॥ ४ ॥

लक्ष्मीधरस्यैतौ ।

आत्मनाशाय नोन्नत्यै छिद्रेण परिपूर्णता ।
भूयो भूयो घटीपात्रं निमज्जत्किं न पश्यसि ॥ ५ ॥

जोयिकस्य ।

वरं दारिद्र्यमन्यायप्रभवाद्विभवादपि ।
कृशताऽभिमता देहे पीनता तु न दोषतः ॥ ६ ॥

भास्करस्य ।

विरुद्धैरपि वस्तव्यं साधुभिर्धर्मदर्शिभिः ।
न[4] हि दोषाश्च साधूनामसतां च गुणैस्समाः ॥ ७ ॥

असत्यां च(त्यात्म?) गुणे शस्त्रं हस्ताभ्यां विनिवार्यते ।
एषाऽपि न गतिः क्षेम्या न चान्या विद्यते क्वचित् ॥ ८ ॥

बहूनामल्पसाराणां समवायो हि दारुणः ।
तृणैरावेष्ट्यते रज्जुर्यया नागोऽपि बध्यते ॥ ९ ॥

---

१. बद्धायुधो. २. त्व. ३. मपेक्ष्य. क. पाठभेदाः ४. दोषा अपिहि साधूनामिति सुभाषितावल्यां पाठः

बहूनामप्यमित्राणां य इच्छेत्कर्तुमप्रियम् ।
आत्मा तेन गुणैर्योज्यस्तत्तेषां महदप्रियम् ॥ १० ॥

प्रियं ब्रूयादकृपणः शूरः स्यादविकत्थनः ।
दाता नापात्रवर्षी स्यात् प्रगल्भः स्यादनिष्ठुरः ॥ ११ ॥

चरेद्धर्मानकपटो मुञ्चेत् स्नेहमनातुरः ।
अनृशंसश्चरेदर्थांश्चरेत्काममनुद्धतः ॥ १२ ॥

भगवतो व्यासस्यैते ।

चित्तरत्नमसंक्लिष्टमान्तरं धनमुच्यते ।
यस्य तद्दूषितं दोषैस्तस्य सर्वा विपत्तयः ॥ १३ ॥

रविगुप्तस्य ।

यदृच्छासिद्धिषु प्रेम गुरुपूजास्वनादरः ।
व्याधिद्वयमिदं लक्ष्म्याः क्षितौ ख्यातमनौषधम् ॥ १४ ॥

सुहृद्भिराप्तैरसकृत्परीक्षितं स्वयं च बुद्ध्या परिचिन्तितात्ययम् ।
करोति कार्यं खलु यः स बुद्धिमान् स एव लक्ष्म्या यशसश्च भाजनम् ॥१५॥

भर्तृमेण्ठस्यैतौ ।

सति पुण्यप्रकर्षेऽपि श्रीनिबन्धः समुद्यमः ।
किं वणिग्विपणिक्षिप्ता हन्त्यजीर्णं हरीतकी ॥ १६ ॥

कस्यापि ।

लज्जेव मधुमत्तस्य कदर्यस्येव धर्मधीः ।
अवलिप्तस्य विद्येव नश्यति श्रीः प्रमादिनः ॥ १७ ॥

आपद्यपि दुरन्तायां नैव गन्तव्यमक्रमे ।
राहुरप्यक्रमेणैव पिबन्नप्यमृतं मृतः ॥ १८ ॥

क्षेमेन्द्रस्यैतौ ।

अभिद्रोहेण भूतानामर्जयन् गत्वरीः श्रियः ।
उदन्वानिव सिन्धूनामापदामेति पात्रताम् ॥ १९ ॥

भारवेः ।

सम्पदा सुस्थितंमन्यो भवति स्वल्पयाऽपि यः ।
कृतकृत्यो विधिर्मन्ये न वर्धयति तस्य ताम् ॥ २० ॥ माघस्य ।

१, मनादरम्. क. पाठभेदः

नयान्तरेण साध्येऽर्थे दण्डं नारभते सुधीः।
सरज्जुकुम्भस्तोयार्थी कूपे झम्पां करोति कः॥ २१॥

आपदस्सन्ति महतां महतामेव सम्पदः।
इतरेषां मनुष्याणां नापदो न च सम्पदः॥ २२॥

कयोरप्येतौ।

पतति[1] व्यसने दैवाद्दारुणे दारुणात्मनि।
संवर्मयति वज्रेण धैर्यं हि महतां मनः॥ २३॥

अरिषड्वर्ग एवायमस्यास्तात पदानि षट्।
तेषामेकमपि च्छिन्दन् खंजयेच्छ्रमरीं श्रियम्॥ २४॥

एतौ श्रीमुरारेः।

ज्वलति चलितेन्धनोऽग्निर्विप्रकृतः पन्नगः फणां कुरुते।
प्रायः स्वं महिमानं क्षोभात् प्रतिपद्यते जन्तुः॥ २५॥

कालिदासस्य।

आलस्यात् सुसहायोऽपि न गच्छत्युदयं जनः।
हस्ताग्रास्फालितो भूमौ तोयार्द्र इव कन्दुकः॥ २६॥

हरिभट्टस्य।

द्रविणस्य नापराधस्तिष्ठति[न]चिरं यदल्पसत्त्वेषु।
न हि सलिलस्य स दोषो विगल[ति] यद्विगुणपात्रस्थम्॥ २७॥

रत्नाकरस्य।

अप्रतिकृत्यात्मानं सहसाऽनर्थेषु न प्रवर्तेत।
शिरसि धृतेऽमृतकिरणे विषमघसद्विषमनेत्रो[ऽपि]॥ २८॥

निजवर्गोऽप्यतिवृद्धिं गमितः कालात् प्रभावमपहरति।
हिमकाले हिमधाम्नो धाम तिरोदधति तुहिनानि॥ २९॥

दुर्गतिरपि रचिताञ्जलिरुपसर्पति को न दृष्टसामर्थ्यम्।
अहिपतिराभरणमभूत् कण्ठाहितकालकूटस्य॥ ३०॥

---

१. पतिते. क. पाठभेदः.

क्लेशस्याङ्गमदत्वा सुखमिह हि सुखानि नोपलभ्यन्ते ।
मधुभिन्मथनायस्तैराश्लिष्यति बाहुभिर्लक्ष्मीम् ॥ ३१ ॥

अलमप्रियाण्युदित्वा रुचिरार्थाः किमिह न स्थिता वाचः ।
अमृत[^२मिति]वचसि सत्यपि विषमिति हि किमुच्यते वारि ॥ ३२ ॥

सुकृतं धनस्य बीजं व्यवसायः सलिलमिह वृतिर्नीतिः ।
फलमुपनीय नराणां [कृत्वा^३] स्वमपैति काले [न] ॥ ३३ ॥

यत्पतनकर्महेतुस्तद्भुवि सलिले च तिष्ठति गुरुत्वम् ।
अन्विष्यते गुणार्थिभिरभ्युन्नतिसाधनं गरिमा ॥ ३४ ॥

सप्तैते वल्लभदेवस्य ।

क्वचिदपि वस्तुविशेषे दोषोऽपि गुणेन तुल्यतामेति ।
खण्डनमेव हि मण्डनमधरदले भवति रमणीनाम् ॥ ३५ ॥

कार्यगतेर्वैचित्र्यान्नीचोऽपि क्वचिदलं न जातु महान् ।
कांस्येनैवादर्शः क्रियते राज्ञामपि न हेम्ना ॥ ३६ ॥

रविगुप्तस्यैतौ ।

गुणवानस्मि विदेशः क इव ममेत्येष दुरभिमानलवः ।
अञ्जनमक्ष्णि विराजति विन्यस्तं न पुनरधरमणौ ॥ ३७ ॥

स्तब्धप्रकृतिर्लोके बहुमानमुपैति नातिशयनम्रः ।
स्फुटमत्रोदाहरणं पयोधराः कुवलयाक्षीणाम् ॥ ३८ ॥

प्रकाशवर्षस्यैतौ ।

रिक्ताः कर्माणि पटवस्तृप्तास्त्वलसा भवन्ति ये भृत्याः ।
तेषां जलौकसामिव पूर्णानां रिक्तता कार्या ॥ ३९ ॥

अर्गटस्य ।

आलस्यं स्त्रीसेवा सरोगता जन्मभूमिवात्सल्यम् ।
सन्तोषो भीरुत्वं षड् व्याघाता महत्त्वस्य ॥ ४० ॥

१. निष्टि. क. ख. च. २. मपि क. ख. च. ३. त्यक्त्वाखमु. क. ख. च. ४. त्राता. क. ख. च. ५ मपि. क. ख. च.

अन्तःकरणशून्योऽपि तृणपूलकपूरुषः।
सत्कृतः क्षेत्रपतिना समर्थो मृगवारणे ॥ ४१ ॥

उपस्थिते विप्लव एव पुंसां सारेतरत्वं ह्यनुमीयतेऽन्तः।
अवाति वायौ न हि तूलराशेर्गिरेश्च कश्चित् प्रतिभाति भेदः ॥ ४२ ॥

सामोपायनयप्रपञ्चपटवः प्रायेण ये भीरवः
शूराणां व्यवसाय एव हि परं संसिद्धये कारणम्।
विष्फूर्जद्विकटाटवीगजघटाकुम्भैकसंचूर्णन-
व्यापारैकरसस्य सन्ति विजये सिंहस्य के मन्त्रिणः ॥ ४३ ॥

व्यसनैरेवाघ्राताः शृण्वन्ति वचांसि पापमित्राणाम्।
उद्भूतारिष्टानामपथ्यमेवाधिकं स्वदते ॥ ४४ ॥

काकः काञ्चनपञ्जरे विनिहितः पद्माकरे कौशिकः
श्राद्धे श्वा विनियोजितो हुतवहे हव्यः पलाण्डुः कृतः।
सर्वं तेन कृतं किमत्र बहुना मद्यं महाशान्तये
येनाज्ञानवता महीयसि पदे नीचः समारोपितः ॥ ४५ ॥

द्वारे रुद्धमुपेक्षते कथमपि प्राप्तं चिरान्नेक्षते
विज्ञप्तो गजमीलितानि कुरुते स्वल्पेऽपराधे दमः।
निर्यातस्य करोति दोषगणनां तद्विद्विषामग्रतः
स स्वामी यदि सेव्यते पितृवने किं नः पिशाचैः कृतम् ॥ ४६ ॥

केषामप्येते।

संग्रहं नाकुलीनस्य सर्पस्येव करोति यः।
स एव श्लाघ्यते मन्त्री सम्यग्गारुडिको यथा ॥ ४७ ॥

विक्रमभट्टस्य।

सुलभाः पुरुषा राजन् सततं प्रियवादिनः।
अप्रियस्य च पथ्यस्य वक्ता श्रोता च दुर्लभः ॥ ४८ ॥

श्रीयशोवर्मदेवस्य।

१. मरुतले. ग.

शमव्यायामाभ्यां प्रतिविहिततन्त्रस्य नृपतेः
परं प्रत्यावापः फलति कृतसेकस्तरुरिव ।
बहुव्याजं राज्यं न सुकरमराजप्रणिधिभि-
र्दुराराधा लक्ष्मीरनवहितचित्तं छलयति ॥ ४९ ॥

राजशेखरस्य ।

जाने ज्वालाजटालेभ्यः कटाहेभ्यः पिबन्ति ते ।
तैलं तृष्णातरलिताः कुनृपो यैर्निषेवितः ॥ ५० ॥

सेव्यन्ते क्षितिजाः क्षुद्रा यदेतत्कूपलङ्घनम् ।
प्रकोपो निधनं येषां स्मितमात्रं त्वनुग्रहः ॥ ५१ ॥

तिष्ठन्ति त्रिभवेष्वेव राज्ञां धूर्ताः प्रियंवदाः ।
व्यसनानिलपातेषु तूलवद्यान्ति ते दिशः ॥ ५२ ॥

यैरेव पात्यते मुग्धः स्वामी दुर्जनसङ्कटे ।
जडोऽयमिति तैरेव दूरस्थैरुपहस्यते ॥ ५३ ॥

क्षेमेन्द्रस्यैते ।

विद्वेष्टि भक्तसङ्घातं न व्यंजनमपेक्षते ।
मांसं परिहरत्येव मन्दः परिण[तिं]विना ॥ ५४ ॥

कस्यापि ।

अह्नि भास्करमिच्छन्ति रात्रावमृततेजसम् ।
अह्नि रात्रौ च राजानमिच्छन्ति गुणिनं प्रजाः ॥ ५५ ॥

सूक्तिसहस्रात् ।

स्वेच्छया कुरुते स्वामी यत्किंचन यतस्ततः ।
तच्च प्रतिचिकीर्षन्तो दुःखं जीवन्ति मन्त्रिणः ॥ ५६ ॥

अर्थिता विभवस्त्यागः स्वातन्त्र्यमुचितज्ञता ।
इति पञ्चगुणोपेतमाश्रयेदाश्रयं नरः ॥ ५७ ॥

कयोरप्येतौ ।

आपत्स्वेव हि महतः शक्तिरभिव्यज्यते न सम्पत्सु ।
अगरोस्तदा न गन्धः प्रागस्ति यथाऽग्निपतितस्य ॥ ५८ ॥

वल्लभदेवस्य ।

चतुस्समुद्रीपरिखे नृपाणामन्तःपुरे वासितकीर्तिदारे ।
दानं दया सूनृतमातिथेयी चतुष्टयी रक्षणसौविदल्लाः ॥ ५९ ॥

श्रीहर्षपण्डितस्य ।

बहिः सर्वाकारप्रगुणरमणीयं व्यवहरन्
पराभ्यूहस्थानान्यपि तनुतराणि स्थगयति ।
जनं विद्वानेकः सकलमतिसन्धाय कपटै-
स्तटस्थः स्वानर्थान् घटयति च मौनं च भजति ॥ ६० ॥

भवभूतेः ।

अप्राज्ञेन च कातरेण च गुणः स्यात् सानुरागेण कः
प्रज्ञाविक्रमशालिनोऽपि हि भवेत् किं भक्तिहीनात्फलम् ।
प्रज्ञाविक्रमभक्तयस्समुदिता येषां गुणा भूतये
ते भृत्या नृपतेः कलत्रमपरे सम्पत्सु चापत्सु च ॥ ६१ ॥

ऐश्वर्यादनपेतमीश्वरमयं लोकोऽर्थतः सेवते
तं गच्छन्त्यनु ये विपत्तिषु पुनस्ते तत्प्रतिष्ठाशया ।
भर्तुर्ये प्रलयेऽपि पूर्वसुकृतासङ्गेन निस्सङ्गया
भक्त्या कार्यधुरं वहन्ति बहवस्ते दुर्लभास्त्वादृशाः ॥ ६२ ॥

मुहुर्लक्ष्योद्भेदा मुहुरधिगता भावगहना
मुहुस्संपूर्णाङ्गी मुहुरतिकृशा कार्यवशतः ।
मुहुर्नश्यद्बीजा मुहुरपि बहिः प्रापितफला-
प्यहो चित्राकारा नियतिरिव नीतिर्नयविदः ॥ ६३ ॥

विशाखदत्तस्यैते ।

शूराणां नयशास्त्रसारविदुषामन्यैरभेद्यात्मनां
धीराणामुपधाविशुद्धमनसां सद्वंशिनां मन्त्रिणाम् ।
बुद्ध्या यः प्रविचार्य मन्त्रमवनीनाथः करोत्यादरात्
सिद्ध्यत्यस्य समीहितं किमपि तद्वस्तु त्रिलोक्यामपि ॥ ६४ ॥

कस्यापि ।

अविज्ञानाद्राज्ञो भवति मतिहीनः परिजन-
स्ततस्तत्प्राधान्याद्व्रजति न समीपे बुधजनः ।
बुधैस्त्यक्ते राज्ये भवति हि न नीतिर्गुणवती
विनष्टायां नीतौ सनृपमवशं नश्यति कुलम् ॥ ६५ ॥

कस्यापि ।

नालस्यप्रसरो जडेष्वपि कृतावासस्य कोशे रुचि-
र्दण्डे कर्कशता मुखे च मृदुता मित्रे महान् प्रश्रयः ।
आमूलं गुणसंहतिर्व्यसनिता द्वेषश्च दोषाकरे
यस्यैषा स्थितिरम्बुजस्य वसतिर्युक्तैव तत्र श्रियः ॥ ६६ ॥

जयवर्धनस्य ।

॥ इति श्रीभगदत्तजल्हणविरचितायां सूक्तिमुक्तावल्यां नीतिपद्धतिः ॥



# विद्यापद्धतिः ( १११ )

अर्धाङ्गुलपरीणाहजिह्वाग्रायासभीरवः ।
सर्वाङ्गक्लेशजननमबुधाः कर्म कुर्वते ॥ १ ॥

हलायुधस्य ।

विद्यां प्राप्य कृतं येन विद्वेषकलुषं मनः ।
तेनात्मा हन्त मूर्खेण स्नात्वा पांसूत्करैर्वृतः ॥ २ ॥

रसायनी जराजीर्णश्चिररोगी च यो भिषक् ।
धातुवादी दरिद्रश्च किं तया ह्यस्य विद्यया ॥ ३ ॥

स्पृहणीया सती तावद्विद्या सन्तोषशालिनी ।
यावन्न पार्थिवास्थानपण्यस्थाने प्रसारिता ॥ ४ ॥

शीलं परहितासक्तिरनुत्सेकः क्षमा धृतिः ।
अलोभश्चेति विद्यायाः परिपाकोज्ज्वलं फलम् ॥ ५ ॥

क्षेमेन्द्रस्यैते ।

दत्तं समस्तमपि तिष्ठति यत्तथैव
ज्ञातिर्न यद्विभजते ह्रियते न चोरैः ।
जन्मान्तरेऽपि यदुपैति नरेण सार्धं
विद्याधनं यदि तदस्ति धनैः किमन्यैः ॥ ६ ॥

नानुद्योगवता न चाप्रवसता मानं न चालम्बता
नालस्योपहतेन नान्यमनसा नाचार्यविद्वेषिणा ।
[नं] भ्रूभङ्गविलाससुस्मितमुखीं सीमन्तिनीं ध्यायता
लोके ख्यातिकरः सतामभिमतो विद्यागुणो लभ्यते ॥ ७ ॥

कयोरप्येतौ ।

१ स्ति. रु. पाठभेदः २. च. क. ख. च. ३. स. क. ख. च.

वरं शरावहस्तस्य चण्डालागारवीथिषु ।
भिक्षार्थमटनं राम न मौर्ख्यहतजीवितम् ॥ ८ ॥

वासिष्ठरामायणात ॥

शीलं नैव बिभर्ति कीर्तिममलां धत्ते न धर्मे धियं
मात्सर्येण मनीषिणां प्रतनुते पारुष्यदोषं गिरा ।
तर्कोक्त्या परलोककर्म नयति प्रायेण सन्दिग्धतां
यस्तस्याफलशास्त्रपाठनपटोर्मूढस्य किं विद्यया ॥ ९ ॥

क्षेमेन्द्रस्य ।

॥ इति श्रीमदारोहकभगदत्तजल्हणविरचितायां सूक्तिमुक्तावल्यां विद्यापद्धतिः ॥



# दैवपद्धतिः ( ११२ )



अम्भोधिः स्थलतां स्थलं जलधितां धूलीलवः शैलतां
मेरुर्मृत्कणतां तृणं कुलिशतां वज्रं तृणक्लीबताम् ।
वह्निः शीतलतां हिमं दहनतामायाति यस्येच्छया
लीलादुर्ललिताद्भुतव्यसनिने तस्मै नमः कर्मणे ॥ १ ॥

यत्सेव्यो विकलः कलाशतविदां नालोकयत्याननं
यन्मौर्ख्येण मनीषिणां विहसता न स्तोत्रमाकर्ण्यते ।
यच्च स्वास्थ्यमपथ्यभोजनजुषां यत्संपदः पापिनां
तत्सर्वं पुरुषार्थपाटनपटोर्धातुर्विलासायितम् ॥ २ ॥

माण्डव्यस्तपसि स्थितः किल मुनिः शूलेऽर्पितश्चोरवत्
कापट्यात् स च चक्रिचोरनृपतिः सर्वं गतः कीर्त्यते(?) ।
चण्डालत्वमवाप दैवविहितं देवोऽपि धर्मः स्वयं
वन्ध्यं सर्वविपर्ययेण कुरुते दैवी गतिः पौरुषम् ॥ ३ ॥

लक्ष्मीकौस्तुभपारिजातसहजः सूनुः सुधाम्भोनिधे-
र्दैवेन प्रणयप्रसादविधिना मूर्ध्ना धृतः शंभुना ।
अद्याप्युज्झति नैव दैवविहितं क्षैण्यं क्षपावल्लभः
केनान्येन विलङ्घ्यते विधिगतिः पाषाणलेखासखी ॥ ४ ॥

ग्रीवाभरणतां लेभे कालकूटः पिनाकिनः ।
कण्ठोच्छित्त्यै सुधा राहोर्भवितव्यतयाऽभवत् ॥ ५ ॥

क्षेमेन्द्रस्य ।

धनिषु मुधा किमु धावत तूष्णीमाध्वं न साध्विदं चलितम् ।
विधिलिखिताक्षरमालं फलति कपालं न भूपालः ॥ ६ ॥

नश्यति जनाद्भुजङ्गो विद्रवति जनोऽपि दूरतरमुरगात् ।
पश्य विधेस्तात्पर्यं येन तयोरपि च सङ्गमं कुरुते ॥ ७ ॥

वल्लभदेवस्यैतौ ।

---

१. चरि. क. पाठभेदः ।

द्वीपादन्यस्मादपि मत्ये(ध्या?)दपि जलनिधेर्दिशोऽप्यन्तात् ।
आनीय झटिति घटयति विधिरभिमतमभिमुखीभूतः ॥ ८ ॥

श्रीहर्षस्य ।

देशाद्देशान्तरं यातु पापपुण्यमयः पुमान् ।
पुन[स्तत्र] प्रतीक्षन्ते सम्पदो विपदोऽपि च ॥ ९ ॥

प्रल्हादनस्य ।

करोतु नाम नीतिज्ञो व्यवसायमुदारधीः ।
फलं पुनस्तदेवास्य यद्विधेर्मनसि स्थितम् ॥ १० ॥

भगवतो व्यासस्य ।

यन्मनोरथशतैरगोचरो यत्स्पृशन्ति न गिरः कवेरपि ।
स्वप्नवृत्तिरपि यत्र दुर्लभा लीलयैव विदधाति तद्विधिः ॥ ११ ॥

अलङ्कारश्शङ्काकरनरकपालं परिजनो
विशीर्णाङ्गो भृङ्गी वसु च वृष एको बहुवयाः ।
अवस्थेयं स्थाणोरपि भवति सर्वामरगुरो-
र्विधौ वक्रे मूर्ध्नि स्थितवति वयं के पुनरमी ॥ १२ ॥

कयोरप्येतौ ।

॥ इति श्रीभगदत्तजल्हणविरचितायां सूक्तिमुक्तावल्यां दैवपद्धतिः ॥



१. त्रीं च, क. ख. च.

# पुरुषकारपद्धतिः ( ११३ )



दलन्त्युदितचेतसां रिपुतमस्समूहास्समं
भवन्त्यपि च यद्वशादनिशमर्थसार्थोदयाः।
तमद्भुतपराक्रमं क्रमनमत्कुलक्ष्माधरं
जगज्जितरसोर्जितं पुरुषकारमेव स्तुमः ॥ १ ॥

शान्तिस्वस्त्ययनेन शाम्यति नृणां यत्सर्वमौत्पातिकं
यत्पथ्याशनमाशु रोगनिचयानुन्मूलयत्युत्कटान्।
सद्यः सिद्धरसायनेन पुरुषस्तारुण्यमाप्नोति यत्
तेनार्थः पुरुषार्थ एव जगतामेकातपत्रायते ॥ २ ॥

आत्मा जन्म(यत्न?)शतैर्धनार्जनधिया मिथ्या किमायास्यते
पङ्गोः श्रीर्गृहमेति लङ्घितभुवो दैवेच्छया निर्धनाः।
इत्येताः पुरुषार्थमूलहतयः कैश्चित्समुत्सारिता
मुग्धानामलसोत्कटाः प्रतिपदं कुर्वन्ति चित्तभ्रमम् ॥ ३ ॥

पाण्डित्यं यदि नाम दैवविहितं तत्किं वृथाऽध्यापनै-
रायुश्चेन्निहितं विधातृलिखितं तत् किं प्रयत्नाशनैः।
राज्यं चेद्विधिनिर्मितं तदनिशं किं मन्त्रतन्त्रोद्यमै-
र्धाता चेत्सुगतिप्रदस्तदफलैः किं तीर्थसार्थभ्रमैः ॥ ४ ॥

वदन्त्यविदितोत्साहं दैवं दैवं सदैव ये।
तेषां विनष्टचेष्टानां दूरे धर्मार्थसम्पदः ॥ ५ ॥

हत्वा नन्दं स्वजनसहितं सप्तभिर्वासरैर्य-
श्चाणक्येन प्रततमतिना चन्द्रगुप्तोऽभिषिक्तः।
आश्चर्येण प्रसृतयशसा कीर्त्यमानेन शास्त्रं
तेन न्यस्ता किमपि वदतो दैववादस्य मुद्रा ॥ ६ ॥

१. तेजसां २. शान्त्या. क. पाठभेद. ३. न्ति. क. ख.।

हठोद्दलननिश्चलैः कठिनकण्ठपीठोद्धृतैः
स्रवद्रुधिरसर्पिषा परिवृतैर्मुखश्रीफलैः ।
श्रियं हुतहुताशनः किल दशाननः प्राप्तवान्
न पौरुषधृतिं विना भवति वाञ्छिताप्तिः क्वचित् ॥ ७ ॥

क्षेमेन्द्रस्यैते ।

॥ इति श्रीभगदत्तजल्हणविरचितायां सूक्तिमुक्तावल्यां पुरुषकारपद्धतिः ॥

## साहसपद्धतिः ( ११४ )

उपशोभैव सहायास्सिद्धिर्वीरस्य साहसे वसति ।
दलयति कुलानि करिणां किल हरिणपरिग्रहः सिंहः ॥ १ ॥

नित्यानि नश्वरीभिर्लभ्यन्ते निर्मलानि मलिनाभिः ।
तनुभिर्यशांसि धीरैरवसरतुलिताभिरतुलानि ॥ २ ॥

वल्लभदेवस्यैतौ ।

साहसी भवति यः पुमान् क्षितौ तस्य दैववशतः श्रियो न चेत् ।
संभवन्ति विपुलास्तथाऽप्यहो किं नु कीर्तिरमला विहन्यते ॥ ३ ॥

स्वर्गस्तस्य गृहाङ्गणत्यहिपुरं भूमीगृहत्यम्बुदा
उल्लोचन्ति जग[न्निवासति]शिरोगेहन्ति धात्रीभृतः ।
द्वीपानि प्रघणन्ति वारिनिधयः क्रीडातटाकन्त्यहो
यस्य स्यादसमानपौरुषनिधेर्लोकोत्तरं साहसम् ॥ ४ ॥

पृथ्वी तावदियं समुद्रपरिखा तावन्निरालम्बनं
व्योमैतन्ननु तावदेव विषमः पातालयात्रागमः ।
दत्वा मूर्ध्नि पदं समुद्यमभिदो दैवस्य कीर्तिप्रियैः
वीरैर्यावदहो न संशयतुलामारोप्यते जीवितम् ॥ ५ ॥

केषामप्येते ।

॥ इति श्रीभगदत्तजल्हणविरचितायां सूक्तिमुक्तावल्यां साहसपद्धतिः ॥

---

१ न्ति वासित. रु. ख. ग. घ. त.

# श्रीवर्णनपद्धतिः ( ११५ )



तावच्छीतमृदुस्पर्शः परे स्वे च जने जनः ।
वात्ययेव हिमं यावन्न श्रिया परुषीकृतः ॥ १ ॥

श्रीमानजननिन्द्यश्च शूरश्चाप्यविकत्थनः ।
समदृष्टिः प्रभुश्चेति दुर्लभाः पुरुषास्त्रयः ॥ २ ॥

वासिष्ठरामायणादेतौ ।

श्रीपरिचयाज्जडा अपि भवन्त्यभिज्ञा विदग्धचरितानाम् ।
उपदिशति कामिनीनां यौवनमद एव ललितानि ॥ ३ ॥

काकतालीययोगेन यदनात्मवति क्षणम् ।
करोति प्रणयं लक्ष्मीस्तदस्यास्स्त्रीत्वचापलम् ॥ ४ ॥

रविगुप्तस्यैतौ ।

कृष्णः क्रीडितवान् गोभिरिति गोतुल्यबुद्धिषु ।
पक्षपातवती लक्ष्मीरहो देवी पतिव्रता ॥ ५ ॥

श्रीः सपत्नीमिव द्वेष्टि दृष्टिं सत्पथदर्शिनीम् ।
तां विना यत्र तत्रैव पतन्त्यन्धा इवेश्वराः ॥ ६ ॥

अयं प्रभुरयं भृत्य इति या जगतः स्थितिः ।
फलं विजयते तत्र श्रीप्रसादाप्रसादयोः ॥ ७ ॥

सर्वासामपि देवीनां मध्ये श्रीर्दैवदेवता ।
यां विना न भवन्त्येव तासां पूजादिकाः क्रियाः ॥ ८ ॥

सर्वासामेव नारीणां मध्ये श्रीः सुभगा खलु ।
स्पृहयन्ति महान्तोऽपि यां स्वेच्छाचारिणीमपि ॥ ९ ॥

प्राणेभ्यो न प्रियं वस्तु जगतीत्यनृतं खलु ।
लक्ष्मीकृते यतः प्राणान् गणयन्ति तृणं नराः ॥ १० ॥

निर्दयत्वमहङ्कारस्तृष्णा कार्कश्यभाषणम् ।
नीचपात्रप्रियत्वं च पञ्च श्रीसहचारिणः ॥ ११ ॥

लक्ष्मीर्निर्लक्षणस्येति युक्तमुक्तं न सूरिभिः ।
लक्ष्मीसमागमादन्यल्लक्षणं स्यात् परं हि किम् ॥ १२ ॥

हेमसूरेरेते ।

लक्ष्मीकौस्तुभपारिजातसुरभे धन्वन्तरे पुत्रकाः
सोमाश्वामृतकालकूटमदिरे ऐरावत श्रूयताम् ।
गच्छन्त्या प्रसभं खलाननुदिनं साधूंस्त्यजन्त्याऽनया
दग्धोऽहं वडवानलेन न तथा लक्ष्म्या दुहित्रा यथा ॥ १३ ॥

आलस्यं स्थिरतामुपैति भजते चापल्यमुद्योगितां
मूर्खत्वं मितभाषितां वितनुते मौग्ध्यं भवेदार्जवम् ।
पात्रापात्रविचारमात्रविरहो गच्छत्युदारात्मतां
मातर्लक्ष्मि तव प्रसादवशतो दोषा अपि स्युर्गुणाः ॥ १४ ॥

पद्मानामिव साऽऽसनांशगुण(णि ?)ता या संश्रयार्हा श्रियः
सा श्रीर्भद्रगजेन्द्रमूर्तिरिव या दानेन विभ्राजते ।
दानं तन्नवचन्द्रवद्यदनिशं मानेन संवर्धते
मानोऽसौ तृणवन्न यः परिचयम्लानः शनैः शुष्यति ॥ १५ ॥

लक्ष्मीः सर्पति नीचमर्णवपयस्सङ्गादिवाम्भोजिनी-
संसर्गादिव कण्टकाकुलपदा न क्वापि धत्ते पदम् ।
चैतन्यं विषसन्निधेरिव नृणामुच्चाटयत्यञ्जसा
धर्मादाननियोजनेन गुणिभिर्ग्राह्यं तदस्याः फलम् ॥ १६ ॥

कोपस्तेज इति स्थितिर्ग्रहमिति क्रीडेति दुश्चेष्टितं
माया च व्यवहारकौशलमिति स्वच्छत्वमित्यज्ञता ।
दौर्जन्यं स्फुटवादितेति धनिनामग्रे बुधैर्यद्दृशा-
द्दोषोऽपि व्यपदिश्यते गुणतया तस्यै नमोऽस्तु श्रियै ॥ १७ ॥

केषामप्येते ।

तीक्ष्णादुद्विजते मृदौ परिभवत्रासान्न सन्तिष्ठते
मूर्खं द्वेष्टि न गच्छति प्रणयितामत्यन्तविद्वत्स्वपि ।
शूरेभ्योऽभ्यधिकं बिभेत्युपहसत्येकान्तभीरूनहो
श्रीर्लब्धप्रसरेव वेशवनिता दुःखोपचर्या भृशम् ॥ १८ ॥

विशाखदेवस्य ।

॥ इति श्रीभगदत्तजल्हणविरचितायां सूक्तिमुक्तावल्यां श्रीवर्णनपद्धतिः ॥

---

## दानपद्धतिः ( ११६ )



भित्वाऽपि भूमिमधिरोहति रत्नराशि-
राकाशतोऽपि नमदम्बुधराः स्रवन्ति ।
वाञ्छाफलं फलति वाञ्छितकाल एव
कालप्रधानगुणरत्नधनस्य दाता ॥ १ ॥

चन्द्रगोमिनः ।

मेरोर्मूर्ध्नि रथेन मार्गपतितान् रत्नोपलान् खण्डयन्
कुर्वन् जर्जरितोर्मि सप्तचरणैराकाशगङ्गाजलम् ।
यज्ज्योतींष्यभिभूय भाति तमसामुच्छित्तये भास्कर-
स्तत्राप्याह मनस्समाधिविहितं दानं निमित्तं मुनिः ॥ २ ॥

भगदत्तभास्करस्य ।

गौरवं प्राप्यते दानान्नतु वित्तस्य संग्रहात् ।
स्थितिरुच्चैः पयोदानां पयोधीनामधः पुनः ॥ ३ ॥

दातुरुन्नतचित्तस्य गुणयुक्तस्य चार्थिनः ।
दुर्लभः खलु संयोगः सद्बीजक्षेत्रयोरिव ॥ ४ ॥

सङ्गतः श्रेयसां पारं स एको भुवि जीवति ।
प्रणतः पूरिताशेषु भवत्यर्थी च योऽर्थिषु ॥ ५ ॥

तेजस्व्यपि विना दानं वैरिभिः परिभूयते ।
नीयतेऽस्तं दिनान्तेन तिग्मांशुः सङ्कुचत्करः ॥ ६ ॥

औ[दार्य]मेकमेकत्र गुणानां राशिरेकतः ।
वि[फलस्तु]गुणग्राम औ[दार्य]परिवर्जितः ॥ ७ ॥

गतासोरुपरि क्षिप्तमम्भः कुम्भशतं वृथा ।
तृषामूर्च्छितचित्तस्य चुलुकोऽप्यमृतायते ॥ ८ ॥

प्रत्याख्यानमपि श्रेयः श्रेयोऽनुनयपेशलम् ।
न तु दानमसत्कारपारुष्यमलिनीकृतम् ॥ ९ ॥

केषामप्येते ।

प्रियः प्रजानां दातैव न पुनर्द्रविणेश्वरः ।
आगच्छन् वाञ्छ्यते लोकैर्वारिदो न तु वारिधिः ॥ १० ॥

प्रह्लादनस्य ।

जीवति स जीवलोके यस्य गृहाद्यान्ति नार्थिनो विमुखाः ।
भृतकवदितरजनोऽसौ दिवसान् पूरयति कालस्य ॥ ११ ॥

पश्यति यदि वितथमधः परभागो ददत एव भुवनेषु ।
वर्षन्तस्तरणेरपि तेजस्तिरयन्ति जीमूताः ॥ १२ ॥

वल्लभदेवस्यैतौ ।

किं रत्नोज्ज्वलमौलिना यदि शिरः सत्सु प्रणामानतं
कर्पूरक्रमुकादिभिः किममलं सत्यं मुखाब्जे यदि ।
किं हारेण च चन्दनेन हृदये तत्त्वं यदि भ्राजते
किं कान्तैर्मणिकङ्कणैर्यदि सदा दानोदकार्द्रः करः ॥ १३ ॥

क्षेमेन्द्रस्य ।

शूरैः किं क्रियते स्फुरन्ति पशवः सिंहादयोऽप्युत्कटा
विद्वांसः शुकशारिका इव पठन्त्याशु श्रुतं यत्किल ।
ध्यानाधीनसमाधिरुद्धमरुतः स्वार्थस्थिरोद्योगिन-
स्त्यागं(गी?) नित्यपरोपकारसुकृतः प्राप्यः क्व कल्पद्रुमः ॥ १४ ॥

१. त्रित्य. क. ख. च. २. पर्यं त्व. क. ख. च. ३. त्रित्य. क ख. च.

शूराः सन्ति सहस्रशः सुचरितैः पूर्णं जगत् पण्डितैः
सङ्ख्या नास्ति कलाविदां बहुतरैः क्रान्ता वनान्तश्रियः।
त्यक्तुं यः कुलवित्तमुन्नतमतिः शक्नोति जीवाधिकं
सोऽस्मिन् भूमिविभूषणं शुभमतिर्भव्यो भवेद्दुर्लभः॥ १५॥

दानं यत्प्रथमोपकारिषु ननु न्यासः स एवार्प्यते
दाने याचनमौल्यमेव दधते तत्किं न भोगाश्रयात्।
पात्रे यत्फलविस्तरप्रियतया तद्वार्धुषिक्यं न किं
तद्दानं यदुपेत्य निष्प्रणयिनि क्षीणे जने दीयते॥ १६॥

केषामप्येते।

पूर्वजन्मसुकृतव्ययलब्धाः सम्पदो विपद एव विमृष्टाः।
पात्रपाणिकमलार्पणमासां तासु शान्तिकविधिः परिदृष्टः॥ १७॥

याचमानजनमानसवृत्तेः पूरणाय बत जन्म न यस्य।
तेन भूमिरतिभारवतीयं न द्रुमैर्न गिरिभिर्न समुद्रैः॥ १८॥

श्रीहर्षपण्डितस्यैतौ।

आर्तदुः[ख्यै] परित्राणदु[र्गतो]दि यथाक्रमम्।
पात्रमाहुर्दयालूनामलाभे गुणवानिति॥ १९॥

भगवतो व्यासस्य।

इति श्रीभगदत्तजल्हणदेवविरचितायां सूक्तिमुक्तावल्यां दानपद्धतिः।

---

१ खि. क. ख. च. २ दुःशीला. क. ख. च.

# कुलस्त्रीपद्धतिः (११७)



प्रोषितायाः प्रयान्त्यस्तं प्रजा धर्मो यशस्सुखम् ।
निवृत्ताया निवर्तन्ते अहोबध्नन् (?) कुलाङ्गनाः ॥ १ ॥

भगवतो व्यासस्य ।

आभोगभूषणवती कुचकुम्भसम्प-
दन्तर्विकारमधुराणि विलोकितानि ।
अङ्गान्यनङ्गपिशुनानि कुलाङ्गनानां
धीरात्मनामपि मनः परितापयन्ति ॥ २ ॥

लज्जावशावनतमन्थरदृष्टिपातं
यैश्चुम्बितं कुलवधूवदनारविन्दम् ।
तेषामनेकपुरुषव्रणिताधरेषु
सक्तिः कथं भवतु वेश्यवधूमुखेषु ॥ ३ ॥

नातः परं कुलमतः परतो न शीलं
नातः परं च करणस्य पदं मृगाक्ष्याः ।
यद्बाष्पबिन्दुरपराधवतोऽपि पत्यु-
रुत्सङ्गितेन चरणेन तयाऽपनिन्ये ॥ ४ ॥

चतुर्थेऽह्नि स्नातां त्रिदिनैर्विरहापाण्डुरमुखीं
रजोमुक्तां तन्वीं विशददशनां स्वच्छवदनाम् ।
हरिद्राहीबेरप्रचुरपटुगन्धप्रणयिनीं
मदन्यः को भुङ्क्ते च्युतकुसुमशेषामिव लताम् ॥ ५ ॥

केषामप्येते ।

स्वस्थानास्थितमार्जितोपकरणं प्रोन्मृष्टभूदर्पणं
बन्धुस्निग्धगुणज्ञविश्रमपदं पूजापरं यद्गृहम् ।
भर्तुः कर्मकरी[दिवा] सुरभिता सर्वाङ्गभूषा निशि
प्रेमार्द्रा प्रियवादिनी कुलवधूर्धन्यैः सती लभ्यते ॥ ६ ॥

१ कनानि. क. पाठभेदः. २ त्र्यहविरहपाण्डुकृत. ग. ३ अधिकचपलस्वच्छनयनाम्. ग.

नानान्ना बहु साधिता रसवती देवाग्निकार्योचितः
संभारो रचितो विशुद्धवसने कालोचिते योजिते ।
स्नानं नाथ विधीयतामतिथयः सीदन्ति नान्या त्वरा
धन्यं बोधयते शनैरिति पतिं मध्याह्नसुप्तं सती ॥ ७ ॥

दीपकस्यैतौ ।

अद्वैतं सुखदुःखयोरनुगतं सर्वास्ववस्थासु यो
विश्रामो हृदयस्य यत्र रजसा यस्मिन्नहार्यो रसः ।
कालेनावरणात्ययात्परिणते यत्स्नेहसारे स्थितं
भद्रं तस्य सुमानुषस्य कथमप्येकं हि तत्प्राप्यते ॥ ८ ॥

भवभूतेः ।

॥ इति श्रीभगदत्तजल्हणविरचितायां सूक्तिमुक्तावल्यां कुलस्त्रीपद्धतिः ॥

---

## कुलवधूवृत्तम् ( ११८ )



शुश्रूषस्व गुरून् कुरु प्रियसखीवृत्तिं सपत्नीजने
भर्तुर्विप्रकृताऽपि रोषणतया मा स्म प्रतीपं गमः ।
भूयिष्ठं भव दक्षिणा परिजने भाग्येष्वनुत्सेकिनी
यान्त्येवं गृहिणीपदं युवतयो वामाः कुलस्याधयः ॥ १ ॥

कालिदासस्य ।

हेलामात्रविसूत्रितत्रिभुवनाः कर्णाञ्चलोत्तंसिता-
स्तारुण्यस्य मदस्य च प्रणिधयो लज्जार्धसङ्कोचिताः ।
तीक्ष्णा हीरकसूचयो मुनिमनोमाणिक्यवेधोद्धताः
कल्पन्तां प्रमदाय वः कुलवधूलीलाकटाक्षच्छटाः ॥ २ ॥

भट्टवामननागस्य ।

निर्व्याजं दयिते ननान्दृषु नता श्वश्रूषु भक्ता भव
स्निग्धा बन्धुषु वत्सला परिजने स्मेरा सपत्नीष्वपि ।
पत्युर्मित्रजने सनर्मवचना खिन्ना च तद्वैरिषु
स्त्रीणां संवननं नतभ्रु तदिदं वीतौषधं भर्तृषु ॥ ३ ॥

अभ्युत्थानमुपागते गृहपतौ तद्भाषणे नम्रता
तत्पादार्पितदृष्टिरासनविधिस्तस्योपचर्या स्वयम् ।
सुप्ते तत्र शयीत तत्प्रथमतो जह्याच्च शय्यामपि
प्राच्यैः पुत्रि निवेदितः कुलवधूसिद्धान्तधर्माश्र(श)यः ॥ ४ ॥

राजशेखरस्यैतौ ।

भक्तिः प्रेयसि संश्रितेषु करुणा श्वश्रूषु नम्रं शिरः
प्रीतिर्ज्ञातिषु गौरवं गुरुजने क्षान्तिः कृतागस्यपि ।
आम्नातः कुलयोषितां व्रतविधिः सोऽयं विधेयो पुन-
र्भर्तुर्दयिता इति प्रियसखीबुद्धिः सपत्नीष्वपि ॥ ५ ॥

बिल्हणस्य ।

यद्देवेभ्यो यच्च पित्रादिकेभ्यः कुर्याद्भर्ताऽभ्यर्चनं सत्क्रियातः ।
तस्यार्धं वै सा फलं नान्यचित्ता नारी भुङ्क्ते भर्तृशुश्रूषयैव ॥ ६ ॥

मार्कण्डेयपुराणात् ।

॥ इति श्रीभगदत्तजल्हणविरचितायां सूक्तिमुक्तावल्यां कुलवधूवृत्तपद्धतिः ॥

---

१. यः क. पाठभेदः

# अपत्यपद्धतिः ( ११९ )

इन्दोः कलाकलापेन पङ्क्तिक्रमनिवेशिना ।
सर्वदुःखापनोदाय बालकानां कृता भुजाः ॥ १ ॥

लोकान्तरसुखं पुण्यं तपोदानसमुद्भवम् ।
सन्ततिः शुद्धवंश्या हि परत्रेह च शर्मणे ॥ २ ॥

कालिदासस्य ।

किं तेन जातमात्रेण मातुर्यौवनहारिणा ।
आरोहति न यः स्वस्य वंशस्याग्रे ध्वजो यथा ॥ ३ ॥

अन्तःकरणतत्वस्य दम्पत्योः स्नेहसंश्रयात् ।
आनन्दग्रन्थिरेकोऽयमपत्यमिति बध्यते ॥ ४ ॥

आलक्ष्य दन्तमुकुलाननिमित्तहासै-
रव्यक्तवर्णरचनावचनप्रवृत्तीन् ।
अङ्काश्रयप्रणयिनस्तनयान् वहन्तो
धन्यास्तदङ्गरजसा मलिनीभवन्ति ॥ ५ ॥

एते भवभूतेः ।

संपदि यस्य न हर्षो विपदि विषादो रणे [ध्यै][1] धीरत्वम् ।
तं भुवनत्रयतिलकं जनयति जननी सुतं विरलम् ॥ ६ ॥
पुत्रास्पदं कृतमिति तत्[2]कर्मणि योजयेन्न दुष्पुत्रम् ।
हवनविधौ हव्यभुजस्तिलं प्रशंसन्ति न तु तैलम् ॥ ७ ॥

वल्लभदेवस्य ।

अम्बायाश्च पितुश्च सद्गुणगणो यस्मिन्नभिव्यज्यते
तस्मिन् स्वप्रतिबिम्बितेव निखिला सैवाकृतिः सा द्युतिः ।
सा वाणी विनयस्स एव सहजः पुण्यानुभावस्स च
श्लाघायाः सदनं सुखस्य वसतिस्तेनैव पुत्री पिता ॥ ८ ॥

कस्यापि ।

---

१ च. क. ख. प. पि. क. पाठभेद. २ स; क. पाठभेदः

आयातो भवतः पितेति सहसा मातुर्निशम्योदितं
धूलीधूसरितो विहाय शिशुभिः क्रीडारसं सुद्रुतम्।
दूरात् स्मेरमुखः प्रसार्य ललितं बाहुद्वयं बालको
नाधन्यस्य पुरः समेति परया प्रीत्या रणद्घर्घरम्॥ ९॥

[ भट्टोत्कटस्य[2] ?। ]

रागस्यास्पदमित्यवैमि न हि मे ध्वंशीति न प्रत्ययः
कृत्याकृत्यविचारणासु विमुखं को वा न वेत्ति क्षितौ।
इत्थं निन्द्यमपीदमिन्द्रियवशं प्रीत्यै भवेद्यौवनं
भक्त्या याति यदित्थमेव पितरौ शुश्रूषमाणस्य मे॥ १०॥

तिष्ठन् भाति पितुः पुरो भुवि यथा सिंहासने किं तथा
यत्संवाहयतः सुखं हि चरणौ तातस्य किं राज्यके।
किं भुक्ते भुवनत्रये धृतिरसौ भुक्तोज्झिते या गुरो-
रायासः खलु राज्यमुज्झितगुरोस्तन्नास्ति कश्चिद्गुणः॥ ११॥

श्रीहर्षस्यैतौ।

संसारे यदुदेति किञ्चन फलं तत्कृच्छ्रसाध्यं नृणां
किं त्वेतत्सुखसाध्यमस्ति युगलं सम्यग्यदि ज्ञायते।
यल्लक्ष्मीसमुपार्जनं पुलकिनां रक्तस्य रङ्गायतां
त( य ? )त्कान्तारतिनिस्तरङ्गमनसामुत्पद्यते नन्दनः॥ १२॥

मदनस्य।

द्वित्राणि स्खलता पदानि दधता धात्रीकरालम्बिना
स्वभ्यस्तं पुनरेव जानुगमनं निश्शङ्कमातन्वता।
उद्भिन्नामलदन्तकुड्मलमुखेनाव्यक्तवाग्वादिना
या प्रीतिः स्वसुतेन चेतसि सखे वक्तुं न सा पार्यते॥ १३॥

भट्टार्दनस्य।

॥ इति श्रीभगदत्तजल्हणदेवविरचितायां सूक्तिमुक्तावल्यां पुत्रपद्धतिः॥

---

१ पैरे. क. ख. च. २ खोखटस्य. क. ख. च.

# मित्रपद्धतिः ( १२० )



उपनमितं पुण्यचयैः संपूर्णं रक्षितं च यत्नेन ।
संपदि विपदि त्राणं भवति निधानं च मित्रं च ॥ १ ॥

कस्यापि ।

किमिह कपालकमण्डलुवल्कलसितरक्तपटजटापटलैः ।
व्रतमिदमु[१]ज्ज्वलमनसां प्रतिपन्ना[र्थस्य] निर्वहणम् ॥ २ ॥

वल्लभदेवस्य ।

तस्य पुरः कथनीयं दुःखं दुःखान्वितेन पुरुषेण ।
यो वा शमयति दुःखं यो वा परितप्यते तेन ॥ ३ ॥

स्वामिनि गुणान्तरज्ञे गुणवति भृत्ये सुवर्तिनि कलत्रे ।
मित्रे चानुपचर्ये निवेद्य दुःखं सुखी भवति ॥ ४ ॥

ह्रेपयति प्रतिवचनैरादरमुपदर्शयन् खलीकुरुते ।
उत्कर्षयंश्च लघयति मूर्खसुहृत् सर्वदा वर्ज्यः ॥ ५ ॥

अहिते प्रतिषेधश्च हिते चानुप्रवर्तनम् ।
व्यसने चापरित्यागस्त्रिविधं मित्रलक्षणम् ॥ ६ ॥

केषामप्येते ।

दर्शितानि कलत्राणि गृहे भुक्तमशङ्कितम् ।
कथितानि रहस्यानि सौहार्दं किमतःपरम् ॥ ७ ॥

भगवतो व्यासस्य ।

शोकारातिभयत्राणं प्रीतिविस्रम्भभाजनम् ।
केन रत्नमिदं सृष्टं मित्रमित्यक्षरद्वयम् ॥ ८ ॥

---

१. सुव्रत. च. २. र्तिं. क. ख. त्राप्तिं. च.

माधुर्यादतिशैत्यतः शुचितया सन्तापशान्त्या तृषः
स्थाने मित्रमिदं परं[1] पय इति क्षीरस्य नीरस्य च।
तत्राप्यर्णसि वर्णना स्फुरति मे यत्सङ्गतौ वर्धते
क्षीरं येन पुरैव चास्य सुहृदः क्वाथे स्वयं क्षीयते ॥ ९ ॥

कयोरप्येतौ।

कोऽपि क्वापि कुतोऽपि कस्यचिदहोचेतस्यकस्माज्जनः
केनापि प्रविशत्युदुम्बरफलप्राणिक्रमेण क्रमात्।
एतस्मिन्नपि पाटिते विघटिते विस्फोटिते त्रोटिते
निष्पिष्टे परिगालिते विदलिते निर्यात्यसौ वा न वा ॥ १० ॥

माहिलस्य।

इति श्रीभगदत्तजल्हणविरचितायां सूक्तिमुक्तावल्यां मित्रपद्धतिः।



१ पयः ख.

# गुणपद्धतिः ( १२१ )



गुणेषु यत्नः क्रियतां किमाटोपैः प्रयोजनम् ।
विक्रीयन्ते न घण्टाभिर्गावः क्षीरविवर्जिताः ॥ १ ॥

क्षेमेन्द्रस्य ।

पङ्कान्वयमपि सरसिजमारोहति नीलकण्ठमूर्धानम् ।
पश्यत गुणमहिमानं चरणादपि मृज्यते पङ्कः ॥ २ ॥

वल्लभदेवस्य ।

स्वल्पेनैव हि कश्चिद्गुणेन जगति प्रसिद्धिमुपयाति ।
एकेन करेण गजः करी न सूर्यः सहस्रेण ॥ ३ ॥

प्रकाशावर्षस्य ।

गुणे कुर्वादरं भ्रातन वित्तेषु कदाचन ।
सुलभं गुर्णि नां वित्तं दुर्लभा धनिनां गुणाः ॥ ४ ॥

गुणेषु यत्नसाध्येषु यत्ने चात्मनि संस्थिते ।
परोऽपि गुणिनां धुर्य इति जीवन् सहेत कः ॥ ५ ॥

निर्मलानां कुतो रन्ध्रं कदाचिदपि जायते ।
विधीयते गुणैरेव तच्च मुक्तामणेरिव ॥ ६ ॥

गुणेष्वनादरं भ्रातर्भूरिश्रीरपि मा कृथाः ।
गुणच्छेदात् स पूर्णोऽपि घटः कूपे पतत्यधः ॥ ७ ॥

गुणयुक्तोऽप्यधो याति रिक्तः कूपघटो यथा ।
निर्गुणोऽप्यब्भृतः पश्य जनैः शिरसि धार्यते ॥ ८ ॥

ये केचिद्गुणरेणुरूषितधियो धन्याः सुखं शेरते
ते विज्ञातपरिश्रमाः शिशुभिरप्यज्ञातलिप्यक्षरैः ।
अस्माकं तु करस्थितामलकवल्लोकत्रयं पश्यता-
मेभिर्दग्धगुणैर्घुणैरिव तनुः शंभोस्त(स?)मुत्कीर्यते ॥ ९ ॥

१ संपूर्णोऽपि गुणोच्छेदात्. क. पाठभेदः

को जानाति गुणान् परेषु निहिता[न् जानातु] को वक्ति तान्
वक्तुं व्यक्तममून् कथञ्चिदथवा को नाम नासूयति ।
नैवासूयति कश्चिदेव यदि वा जायेत कस्तादृशो
यस्तै[र्हि]ष्याति सोऽस्ति चेत् कथमसौ मर्त्येष्वहो गण्यते ॥ १० ॥

कालिन्द्या दलितेन्द्रनीलशकलश्यामां[भ]सोऽन्तर्जले
मग्नस्याञ्जनपुञ्जमेचकनिभस्याहेः कुतोऽन्वेषणम् ।
ताराभाः फणचक्रवालमणयो न स्युर्यदि द्योतिनो
यैरेवोन्नतिमाप्नुवन्ति गुणिनस्तैरेव यान्त्यापदम् ॥ ११ ॥

पङ्कात्तामरसं शशाङ्क उदधेरिन्दीवरं गोमयात्
काष्ठादग्निरहेः फणादपि मणिर्गोपित्ततो रोचना ।
कौशेयं कृमितः सुवर्णमुपलाद्दूर्वाऽपि गोरोमतः
प्राकाश्यं स्वगुणोदयेन गुणिनो गच्छन्ति नो जन्मना ॥ १२ ॥

ये काकिणीमपि महा[पॅण]हिण्डमान-
रण्डाकरण्डशरणा न गुणा लभन्ते ।
ते तन्तुकोविदकुविन्दकरारविन्द-
मैत्रीमवाप्य नृपतीनपि क्षोभयन्ति ॥ १३ ॥

केषामप्येते ।

॥ इति श्रीभगदत्तजल्हणदेवविरचितायां सूक्तिमुक्तावल्यां गुणपद्धतिः ॥

---

१ नादाति. क. ख. च. २ र्हि. क. ख. च. ३ फणि. क. ख. च.

# कलापद्धतिः (१२२)



नीचापि सा प्रकाश्यैव जीव्यते कलया यया ।
वर्तमानः सतां स्थित्या भण्डकैर्नोपहस्यते ॥ १ ॥

धर्मस्य कला ज्येष्ठा भूतदयाख्या परोपकारश्च ।
दानं क्षमाऽनसूया सत्यमलोभः प्रसादश्च ॥ २ ॥

अर्थस्य सदोत्थानं नियमात् परिपालनं क्षयज्ञानम् ।
स्थाने त्यागः पटुताऽनुद्वेगः स्त्रीष्वविश्वासः ॥ ३ ॥

कामस्य वेषशोभा पेशलता चारुता गुणोत्कर्षः ।
प्रीतिः प्रणयो लीला चित्तज्ञानं च कान्तानाम् ॥ ४ ॥

मोक्षस्य विवेकरतिः प्रशमस्तृष्णाक्षयश्च सन्तोषः ।
सङ्गत्यागश्च लयः साम्यं परमं प्रकाशश्च ॥ ५ ॥

मात्सर्यपरित्यागः प्रियवादित्वं च धैर्यमक्रोधः ।
नैराश्यं च परार्थे सुखस्य सिद्धाः कलाः पञ्च ॥ ६ ॥

सत्सङ्गः कामजयः शौचं गुरुसेवनं सदाचारः ।
श्रुतममलं यशसि रतिर्मूलकलाः सप्त शीलस्य ॥ ७ ॥

ओजः सत्वं बुद्धिर्व्यवसायो नीतिरिङ्गितज्ञानम् ।
प्रागल्भ्यं सुसहायः कृतज्ञता मन्त्ररक्षणं त्यागः ॥ ८ ॥

जनरागप्रतिपत्तिर्मित्रार्जनमानृशंस्यदुः(म?)स्तम्भः ।
आश्रितजनवात्सल्यं दश सप्त कलाः प्रभावस्य ॥ ९ ॥

मौनमलौल्यमयाञ्चा मानस्य च जीवितं कलात्रितयम् ।
एताः कला विदग्धैः स्वगताः कार्याश्चतुःषष्टिः ॥ १० ॥

१. चोद्यो. क. पाठभेदः

शक्तिविरोधे गमनं तत्प्रणतिर्वा बलोदये वैरम् ।
आर्तस्य धर्मचर्या दुःखे धैर्यं सुखेष्वनुत्सेकः ॥ ११ ॥

विभवेषु संविभागः सत्सु रतिर्मन्त्रसंशये प्रश्नः ।
निन्द्येषु पराङ्मुखता भैषजमेतत्कलादशकम् ॥ १२ ॥

एकादश क्षेमेन्द्रस्य ।

॥ इति श्रीभगदत्तजल्हणदेवविरचितायां सूक्तिमुक्तावल्यां कलापद्धतिः ॥

---

## सेवापद्धतिः ( १२३ )

सेवादुःखाभिभूतस्य याञ्चा दुःखाय भूयसे ।
दीर्घाध्वपरिखिन्नस्य शैलारूढिरिवाग्रतः ॥ १ ॥

भदन्तहरिभट्टस्य ।

सेवा श्ववृत्तिरुक्ता यैर्न तैः सम्यगुदाहृतम् ।
स्वच्छन्दं चरति क्व श्वा विक्रीतासुः क्व सेवकः ॥ २ ॥

कस्यापि ।

अविवेकिनि भूपे यः करोत्याशां समृद्धये ।
यास्याम्यहमनेनेति करोत्याशां स मृद्धये ॥ ३ ॥

चलेषु स्वामिचित्तेषु सुलभे पिशुने जने ।
यदि जीवन्त्यहो चित्रं क्षणमत्रानुजीविनः ॥ ४ ॥

समुद्रमिव भूपालमाश्रितास्तत्फलैषिणः ।
समूलं वा विनश्यन्ति भरं वा यान्ति सम्पदाम् ॥ ५ ॥

भगवतो व्यासस्यैते ।

प्रभूतं धनमालोक्य यो राज्ञां द्वारि तिष्ठति ।
स बद्धः सौनिकस्येव संशुष्यति न पुष्यति ॥ ६ ॥

वयमकुशलाः कर्णोपान्ते निवेशयितुं मुखं
कृतकवचनैर्भर्तुश्चेतो न वञ्चयितुं क्षमाः ।
प्रियमपि वचो मिथ्या वक्तुं जडैर्न च शिक्षितं
ननु बत गुणैः कैः स्तोष्यामो नरेश्वरवल्लभम् ॥ ७ ॥

कयोरप्येतौ ।

भेतव्यं नृपतेस्ततः [स]चिवतो राज्ञस्ततो वल्लभा-
दन्येभ्यश्च भवन्ति ये च भुवने लब्धप्रतिष्ठा विटाः ।
दैन्यादुन्मुखदर्शनापलपनैः पिण्डार्थमायास्यतः
सेवां लाघवकारिणीं कृतधियः स्थाने श्ववृत्तिं विदुः ॥ ८ ॥

विशाखदेवस्य ।

ईश्वरसेवा सुलभन्यक्कारा दुर्लभोत्कर्षा ।
चिरपरिचर्या विफला निर्माल्या निष्क्रमोऽपि निरयाय ॥ ९ ॥

ईश्वरमाराधयतो विगलितमानस्य लब्धमैश्वर्यम् ।
स्फुटमेव भवति लघिमा गरिमाऽपि कथं न जानीमः ॥ १० ॥

वल्लभदेवस्यैतौ ।

उन्नत्यै नमति प्रभुं प्रभुगृहान् द्रष्टुं बहिस्तिष्ठति
स्वद्रव्यव्ययमातनोति जडधीरागामिवित्तेच्छया ।
प्राणान् प्राणितुमेव मुञ्चति रणे क्लिश्नाति भोगेच्छया
सर्वं तद्विपरीतमेव कुरुते तृष्णान्धदृक् सेवकः ॥ ११ ॥

प्रणमत्युन्नतिहेतोर्जीवितहेतोर्विमुञ्चति प्राणान् ।
दुःखीयति सुखहेतोः को मूर्खः सेवकादन्यः ॥ १२ ॥

कयोरप्येतौ ।

आकांक्षिणं(णः ?) क्ष्मापतिमन्दिराणि प्रविश्य पातालसहोदराणि ।
अधोगतेर्नान्यदुपार्जयन्ति फलं भुजङ्गा इव वायुभक्ष्याः ॥ १३ ॥

सेवा वञ्चकधूर्तानां मन्यते न सतां जनः(मता ?) ।
या तिष्ठ(धिष्ठि ?)ता परोच्छिष्टा नष्टा स्त्री न सती(तां ?) नृणाम् ॥ १४ ॥

क्षेमेन्द्रस्य ।

पुरुषैर्धनलोभेन पण्यस्त्रीभिरिव स्वयम् ।
आत्मा संस्कृत्य संस्कृत्य परोपकरणीकृतः ॥ १५ ॥

भगवतो व्यासस्य ।

अनिद्रो दुःस्वप्नः प्रपतनमनद्रिद्रुमतटं
जराहीनः कम्पस्तिमिररहितस्त्रासससमयः ।
अनाघातं दुःखं विगतनिगडो बन्धनविधिः
सजीवं जन्तूनां मरणमवनीशाश्रयरसः ॥ १६ ॥

त्वं लज्जे मज्ज मज्ज क्वचिदपि परतस्तिष्ठ तिष्ठ प्रतिष्ठे
याहि द्रोणीं हिमाद्रेः पुनरपि तपसे भारति स्वस्ति तुभ्यम् ।
सोऽहं पुण्यक्षयेण प्रचुरपरिभवातङ्किनि भ्रष्टशङ्के
सेवापङ्के पतामि द्रविणकणधिया निष्कृपाणां नृपाणाम् ॥ १७ ॥

कयोरप्येतौ ।

श्रीभगदत्तजल्हणदेवविरचितायां सूक्तिमुक्तावल्यां सेवापद्धतिः ।

---

१ दपरः क. पाठभेदः

## धर्मपद्धतिः ( १२४ )

शिलामयेऽपि प्रासादे शिलैका किल देवता ।
पूज्यः पुण्यमहिम्नैव जडेष्वपि जडन्धरः ॥ १ ॥

आदित्यभट्टस्य ।

एकस्मिन्नप्यतिक्रान्ते दिने धर्मविवर्जिते ।
दस्युभिर्मुषितस्येव हृदयं दह्यते चिरम् ॥ २ ॥

व्यापृतेनापि मनसा धर्मः कार्यो निरन्तरम् ।
मेधिबद्धोऽपि हि भ्राम्यन् घासग्रासं करोति गौः ॥ ३ ॥

अरावप्युचितं कार्यमातिथ्यं गृहमागते ।
छेत्तुमप्यागते छायां नोपसंहरते तरुः ॥ ४ ॥

भगवतो व्यासस्यैते ।

संवर्तसलिलोद्वृत्तनिरङ्कुशविसर्पिणा ।
पुण्यं न क्लेदमायाति चतुःसागरवारिणा ॥ ५ ॥

प्रदीप्तकिरणाङ्गारैः सप्तभिर्भास्करानलैः ।
क्षितावादह्यमानायां पुण्यमेकं न दह्यते ॥ ६ ॥

अस्मिन् जरामरणमृत्युमहातरङ्ग-
मिश्रोदधौ महति संपरिवर्तमानः ।
पुण्यप्लवेन सुकृतेन नरास्तरन्तः
संप्राप्य तीरमभयं सुखमाप्नुवन्ति ॥ ७ ॥

आमुक्तपुष्पसुरभीकृतकेशपाशा
मुक्तालताप्रहसितस्तनभारखिन्नाः ।
पुण्येन कान्तधवलायतपक्ष्मलाक्ष्यो
दास्यो नृणामुपनमन्ति बलात्तरुण्यः ॥ ८ ॥

१. नमन्त्यबलास्त. क. पाठभेदः

अत्युच्छ्रितोन्नतासितध्वजपङ्क्तिचित्रै-
नागाश्वपत्तिरथसंक्षुभितैर्बलौघैः ।
उद्धूतचामरविराजितगात्रशोभाः
पुण्येन भूमिपतयो भुवि सञ्चरन्ति ॥ ९ ॥

भदन्तविशाखदेवस्य ।

प्रत्यग्रभास्करकरारुणशातकुम्भ-
रत्नावलीकिरणभास्वरभाजनेषु ।
यत् स्वादु हृद्यहितमन्नमनल्पमत्ति
काले जनः प्रिययुतस्तदुशन्ति धर्मात् ॥ १० ॥

भदन्तप्रज्ञाशान्तेः ।

निवर्तन्ते योधाः स्वभवनमथो यान्ति सचिवाः
समूहो यः स्त्रीणां पदमपि च नानुव्रजति सः ।
पुरे पौरास्ते च द्विपहयरथद्रव्यनिचयाः
सुखं तिष्ठन्त्यस्मिन् सुकृतमनुयात्येव पुरुषम् ॥ ११ ॥

कान्तारं न यथेतरो ज्वलयितुं दक्षो दवाग्निं विना
दावाग्निं न यथा परः शमयितुं शक्तो विनाऽम्भोधरम् ।
निष्णातः पवनं विना निरसितुं नान्यो यथाऽम्भोधरं
कर्मौघं सुकृतं विना किमपरं हन्तुं समर्थं तथा ॥ १२ ॥

हेमचन्द्रसूरेः ।

सौजन्यं करुणा परोपकरणं पूज्यप्रणामादरः
सत्यं निस्पृहताऽऽर्जवं मधुरता सत्संविभागः क्षमा ।
अद्वेषः परदोषमौनममदः पूर्वोपकारस्मृतिः
संक्षेपादनृशंसता च परमो धर्मः सतां सम्मतः ॥ १३ ॥

दृष्ट्वापि पापिनां दुःखं पापी पापं न मुञ्चति ।
शूलात्तचोरप्रेक्षायां वस्त्रं हरति तस्करः ॥ १४ ॥

क्षेमेन्द्रस्य ।

इति श्रीभगदत्तजल्हणविरचितायां सूक्तिमुक्तावल्यां धर्मपद्धतिः ॥

# अर्थप्रशंसापद्धतिः (१२५)



पतन्ति खड्गधारासु विशन्ति मकराकरे[1] ।
किं न कुर्वन्ति भुवने कष्टमर्थार्थिनो नराः ॥ १ ॥

एतदेवात्र सामर्थ्यं प्रत्यक्षेणोपलक्ष्यते ।
पुत्रदारादिसंबन्धः पुंसां धननिबन्धनः ॥ २ ॥

भगवतो व्यासस्यैतौ ।

अधनं खलु जीवधनं धनमर्धधनं महद्धनं धान्यम् ।
अतिधनमेतत्सुन्दरि विद्या च तपश्च कीर्तिश्च ॥ ३ ॥

कस्यापि ।

विद्वान् सुभगो मानी विश्रुतनामा कुलोन्नतः शूरः ।
वित्तेन भवति सर्वो वित्तविहीनस्तु सद्गुणोऽप्यगुणः ॥ ४ ॥

धनरहितं त्यजति जनो जनरहितं परिभवाः समायान्ति ।
परिभूतस्य शरीरं व्यसनविकारो महीभारः ॥ ५ ॥

तानीन्द्रियाण्यविकलानि तदेव नाम सा बुद्धिरप्रतिहता वचनं तदेव ।
अर्थोष्मणा विरहितः पुरुषः क्षणेन सोऽप्यन्य एव भवतीति विचित्रमेतत् ॥६॥

पण्डिताः कवयः शूराः कलावन्तस्तपस्विनः ।
वैद्यस्येव सवित्तस्य वीक्षन्ते मुखमातुराः ॥ ७ ॥

हेतुप्रमाणयुक्तं वाक्यं न श्रूयते दरिद्रस्य ।
अप्यतिपरुषमसत्यं पूज्यं वाक्यं समृद्धस्य ॥ ८ ॥

क्षेमेन्द्रस्य ।

जातिर्यातु रसातलं गुणगणैस्तत्राप्यधो गम्यतां
शीलं शैलतटात्पतत्वभिजनः संदह्यतां वह्निना ।
शौर्ये वैरिणि वज्रमाशु निपतत्वर्थोऽस्तु नः केवलं
येनैकेन विना गुणास्तृणलवप्रायाः समस्ता इमे ॥ ९ ॥

भर्तृहरेः ।

इति श्रीभगदत्तजल्हणविरचितायां सूक्तिमुक्तावल्यामर्थप्रशंसापद्धतिः ॥

---

१. रालयं क. पाठभेदः ।

# तृष्णापद्धतिः (१२६)

तृष्णे देवि नमस्तुभ्यं चतुःस्थानेषु रज्यसे ।
व्याधितेष्वनपत्येषु तपस्विषु जरत्सु च ॥ १ ॥

भट्टदेवविडङ्क[1]स्य ।

तृष्णाखनिरगाधेयं दुष्पूरा केन पूर्यते ।
या महद्भिरपि क्षिप्तैः पूरणैरेव खन्यते ॥ २ ॥

अकृतस्यागमो नास्ति कृते नाशो न विद्यते ।
अकस्मादेव लोकोऽयं तृष्णे दासीकृतस्त्वया ॥ ३ ॥

मनसः स[ततो[2]त्थान]मणो[3]नैराश्ययन्त्रितम् ।
आशास्पर्शैरदुष्पूरमहो ब्रह्माण्डकोटिभिः ॥ ४ ॥

भगवतो व्यासस्यैते ।

द्वारपालकराघातकिणीकृतगलोऽपि सन् ।
तथापि कुरुते सेवामहो तृष्णा गरीयसी ॥ ५ ॥

पिशाचीव विशत्यन्तश्छायेव न चलत्यलम् ।
वेश्येव भ्रमयत्याशा शोकं कन्येव वर्षति ॥ ६ ॥

धत्ते वन्ध्याऽपि पुत्राशां लुब्धोऽप्याशां धनोन्मुखः ।
[वि[4]]योगार्तः सर्वे[5]ष्वाशां जानात्या[शां[6]]न योग्यता[म्] ॥ ७ ॥

क्षेमेन्द्रस्य ।

आशावलम्बोपचिता न कस्य तृष्णालता नार्थ[9]फलं प्रसूते ।
दिने दिने लब्धरुचिर्विवस्वान् मी[7]नं च मे[8]षं च वृषं च भुङ्क्ते ॥ ८ ॥

रत्नाकरस्य ।

१. क. पाठभेदः. २. कणोत्कान, क. च. कणोत्थान. ख. ३. णुनै. क. ख. च. ४. नि क. ख. च. ५. सां, क. ख. च. ६. स. क. ख. च. ७. नीरं. क. ख. च. ८. मेघं. क. ख. च. ९. फलं. क. ख. च.

धन्यानां गिरिकन्दरोदरभुवि ज्योतिःपरं ध्यायता-
मानन्दाश्रुजलं पिबन्ति शकुना निःशङ्कमङ्के स्थिताः।
अस्माकं तु मनोरथोपरचितप्रासादवापीतट-
क्रीडाकाननकेलिमन्दिरसदामायुः परं क्षीयते ॥ ९ ॥

( भर्तृहरेः )।

स्तुवन्त्यश्रान्तास्याः क्षितिपतिमभूतैरपि गुणैः
प्रवाचः कार्पण्याद्यदि वितथवाचोऽपि पुरुषाः।
प्रभावस्तृष्णायाः स खलु सकलः स्यादितरथा
निरीहाणामीशस्तृणमिव तिरस्कारविषयः ॥ १० ॥

विशाखदेवस्य।

पदं करोत्यलङ्घ्येऽपि तृष्णाऽपि फलमीहते।
चिरं तिष्ठति नैकत्र तृष्णाचापलमर्कटी ॥ ११ ॥

अनावर्जितचित्ताऽपि ध्रुवं सर्वान् प्रधावति।
फलं न लभते किंचित्तृष्णा जीर्णेव कामिनी ॥ १२ ॥

भीषयत्यपि धीरेहमन्धयत्यपि सेक्षणम्।
खेदयत्यपि शान्तेहं तृष्णा कृष्णेव शर्वरी ॥ १३ ॥

क्षणमायाति पातालं क्षणं याति नभस्तलम्।
क्षणं भ्रमति दिक्कुञ्जे तृष्णा हृत्पद्मषट्पदी ॥ १४ ॥

रोगार्तिरङ्गना तृष्णा गभीरमपि मानसम्।
उत्तानतां नयत्याशु सूर्यांशव इवाम्बुजम् ॥ १५ ॥

नासिधारा न वज्रार्चिर्न तप्तायःकणार्चिषः।
तथा तीक्ष्णा यथा ब्रह्मन् तृष्णेयं हृदि संस्थिता ॥ १६ ॥

वासिष्ठरामायणात्।

आत्मज्ञानविवेकनिर्मलधियः कुर्वन्त्यहो दुष्करं
यन्मुञ्चन्त्युपभोगभाञ्ज्यपि धनान्येकान्ततो निःस्पृहाः।
न प्राप्तानि पुरा न संप्रति न च प्राप्तौ दृढप्रत्ययो
वाञ्छामात्रपरिग्रहाण्यपि वयं त्यक्तुं न तानि क्षमाः ॥ १७ ॥

कस्यापि।

वर्तते येन न विना नरो वाञ्छतु नाम तत्।
ततोऽधिकार्थप्रणयी पृष्टो दद्यात्किमुत्तरम् ॥ १८ ॥

व्यासस्य ।

लभ्यं लभ्यमिदं च लभ्यमधिकं तन्मूललभ्यं ततो
लभ्यं चापरमित्यनारतमहो लभ्यं धनं ध्यायसि।
नैतद्वेत्सि पुनर्भवं नतु चिरादाशापिशाची बलात्
सर्वग्रासमिदं करिष्यति महालोभान्धकारावृतम् ॥ १९ ॥

कृष्णमिश्रस्य ।

यद्दुर्गामटवीमटन्ति विकटं क्रामन्ति देशान्तरं
गाहन्ते गहनं समुद्रमतनुक्लेशां कृषिं कुर्वते।
सेवन्ते कृपणं पतिं गजघटासंघट्टदुःसञ्चरं
सर्पन्ति प्रधनं धनान्धितधियस्तल्लोभविस्फूर्जितम् ॥ २० ॥

रत्नघोषस्य ।

सुप्तव्यालिनि शैलरन्ध्रकुहरे दैत्यस्त्रियोऽन्वेषिताः
खातः सोऽपि निशासु निष्ठुरशिलाकूटो निधिश्रद्धया।
तृष्णे देवि तथा त्वयाऽस्मि नटितो जानन्नपि प्रत्यहं
किं लोकेन ममापि संप्रति यथा हास्येन रुद्धं मुखम् ॥ २१ ॥

इन्द्रकवेः ।

माने नेच्छति वारयत्युपशमे क्ष्मामालिखन्त्यां ह्रियां
स्वातन्त्र्ये परिवृत्त्य तिष्ठति करौ व्याधूय धैर्ये गते।
तृष्णे त्वामनुबध्नता फलमियत्प्राप्तं जनेनामुना
यः स्पृष्टो न पदा स एव चरणौ स्प्रष्टुं न सम्मन्यते ॥ २२ ॥

भर्तृहरेः ।

॥ इति श्रीभगदत्तजल्हणविरचितायां सूक्तिमुक्तावल्यां तृष्णापद्धतिः ॥

# दारिद्र्यपद्धतिः ( १२७ )

—:०:—

सहोदयव्ययाः पञ्च दरिद्रस्यानुजीविनः ।
ऋणं दौर्भाग्यमालस्यं बुभुक्षाऽपत्यसन्ततिः ॥ १ ॥

हेमचन्द्रसूरेः ।

अतो गरीयः किं नु स्यादशर्म नरकेष्वपि ।
यत्प्रियस्य प्रियं कर्तुमधमेन न शक्यते ॥ २ ॥

भगवतो व्यासस्य ।

महाब्धयो यान्ति निदाघतल्लतां भजन्ति [वल्लीतरु]हीनतां नगाः ।
व्रजन्ति चिन्तामणयोऽपि लोष्टतां जगत्यभाग्येन जनेन याचिताः ॥ ३ ॥

श्रीहर्षपण्डितस्य ।

पृथुकार्तस्वरपात्रं भूषितनिःशेषपरिजनं देव ।
विलसत्करेणुगहनं सम्प्रति सममावयोः सदनम् ॥ ४ ॥

कस्यापि ।

जनस्थाने भ्रान्तं कनकमृगतृष्णान्धितधिया
वचो वैदेहीति प्रतिजनमुदश्रु प्रलपितम् ।
कृता लङ्कभर्तुर्वदनपरिपाटीषु घटना
मयाप्तं रामत्वं कुशलवसुता नत्वधिगता ॥ ५ ॥

भट्टवाचस्पतेः ।

अयं शून्यो ग्रामः सुरसदनमेतन्नु पतितं
पुरः शुष्का वापी तरुरयमितः शीर्णविटपः ।
वयं चैते पान्थाः परिक्लिशदशाभाग्यगतयः
समानः संयोगः कटुरपि मनो मे रमयति ॥ ६ ॥

क्षुत्क्षामः कुलपुत्रको मम गृहं कृच्छ्रात् कुतोऽप्यागत-
स्तत्किं गेहिनि तेऽस्ति किंचिदशनं येनामुना याच्यते ।
वाचाऽस्तीत्यभिधाय नास्ति च पुनः प्रोक्तं विनैवाक्षरैः
स्थूलस्थूलविलोललोचनलुठद्बाष्पाम्भसां बिन्दुभिः ॥ ७ ॥

१. वल्मीकवि. क. ख. च. २. कुल. ३. पद. क. पाठभेदौ. ४ भ्रम. क. ख. च.

उड्डीना गुणपत्रिणः सुखफलान्याराद्विकीर्णान्यधः
पर्यस्ताः परितो यशस्तबकिताः सम्पल्लतापल्लवाः।
प्रागेवापसृतः प्रमोदहरिणश्छाया कथान्तं गता
दैवारण्यमतङ्गजेन बलिना भग्नेऽभिमानद्रुमे ॥ ८ ॥

उत्तुङ्गे विभवद्रुमस्य शिखरे भुक्त्वा फलं स्वेच्छया
तस्मात्प्रस्खलितः पदाद्विधिवशाद्भ्रष्टो निरालम्बनः।
पातालोदरभीषणे बहुविधक्लेशोरगाध्यासिते
दौर्गत्यावटगर्भके निपतितश्चित्रं यदि प्राणिति ॥ ९ ॥

केषामप्येते।

नीचात्कर्णकटु श्रुतं धनमदादारूढगर्भं वचोऽ-
प्यर्थी मन्दिरमागतः परिचयादप्राप्तकामो गतः।
दुर्वासा मलिनाङ्गयष्टिरचलो दृष्टो जनः स्वे गृहे
खिन्नाः स्मः स्वपरोपकारविरहक्लीबा वहन्तस्तनुम् ॥ १० ॥

शांटीखण्डमिदं प्रयच्छ यदि वा स्वाङ्के गृहाणात्मजं
रिक्तं भूतलमत्र नाथ भवतः पृष्ठे पलालोच्चयः।
दंपत्योरिति सङ्कथा निशि यदा चोरः प्रविष्टस्तदा
लब्धं कर्पटमन्यतस्तदुपरि क्षिप्त्वा रटन्निर्गतः ॥ ११ ॥

वृद्धो नः पतिरेष मञ्चकगतः स्थूणावशेषं गृहं
कालोऽभ्यर्णजलागमः कुशलिनी वत्सस्य वार्ताऽपि नो।
यत्नात्सञ्चिततैलबिन्दुघटिका भग्नेति पर्याकुला
दृष्ट्वा गर्भभरालसां निजवधूं श्वश्रूश्चिरं रोदिति ॥ १२ ॥

केषामप्येते।

॥ इति श्रीभगदत्तजल्हणविरचितायां सूक्तिमुक्तावल्यां दारिद्र्यपद्धतिः ॥

---

१ दण्डी. क. ख. च. २. वर्तत.

# सन्तोषपद्धतिः ( १२८ )

सन्तु स्वाराज्यभूराज्यभुवोराज्यविभूतयः ।
एतावतैव तृप्तोऽस्मि यदधीनो न कस्यचित् ॥ १ ॥

वातोद्धूतपलालचञ्चल सखे चेतश्चिरेण त्वया
भ्रान्तं कुत्र न कुत्र लम्पट सुखप्रत्याशया सर्वतः ।
वाञ्छा वर्धत एव केवलमहो तत्सर्वदा शिक्षये
दाक्षिण्येन ममापि निर्वृतिकरं सन्तोषसौख्यं भज ॥ २ ॥

कयोरप्येतौ ।

फलं स्वेच्छालभ्यं प्रतिवनमखेदं क्षितिरुहां
पयः स्थाने स्थाने शिशिरमधुरं पुण्यसरिताम् ।
मृदुस्पर्शा शय्या सुललितलतापल्लवमयी
सहन्ते सन्तापं तदपि धनिनां द्वारि कृपणाः ॥ ३ ॥

कृष्णमिश्रस्य ।

वियोगदावदग्धानां तृष्णासन्तप्तचेतसाम् ।
सुखाय सर्वसंन्यासः सन्तोषामृतनिर्झरः ॥ ४ ॥

सर्वत्र सम्पदस्तस्य सन्तुष्टं यस्य मानसम् ।
उपानद्गूढपादस्य ननु चर्मावृतैव भूः ॥ ५ ॥

आत्माधीनशरीराणां स्वपतां निद्रया निशि ।
कदन्नमपि मर्त्यानाममृतत्वाय कल्पते ॥ ६ ॥

सन्तोषामृततृप्तानां यत्सुखं शान्तचेतसाम् ।
कुतस्तद्धनलुब्धानामितश्चेतश्च धावताम् ॥ ७ ॥

भगवतो व्यासस्यैते ।

---

१ वर्त. क.

जातः कल्पतरुः पुरस्सुरगवी तेषां प्रविष्टा गृहं
चिन्तारत्नमुपस्थितं करतले प्राप्तो निधिः सन्निधिम्।
विश्वं वश्यमवश्यमेव सुलभाः स्वर्गापवर्गश्रियो
ये सन्तोषमशेषदोषदहनध्वंसाम्बुदं बिभ्रति ॥ ८ ॥

मञ्जुघोषस्य[1]।

शून्ये देवकुले स्थित्वा वृक्षमूले गुहासु वा।
कदाऽनपेक्षो यास्यामि पृष्ठतोऽनवलोकयन् ॥ ९ ॥
मृत्पात्रमात्रविभवश्चोरासंभोग्यचीवरः।
निर्भरो विहरिष्यामि कदा कायमगोपयन् ॥ १० ॥

बोधिचर्यावतारादेतौ।

श्लाघ्यः कुलीनः कु[लिनैः][2] कलावान्
विद्वान् कलार्हाद्विदुषः सुशीलः।
धनी सुशीलाद्धनिनोऽपि दाता
दातुर्जिता कीर्तिरयाचकेन ॥ ११ ॥

क्षेमेन्द्रस्य[4]।

॥ इति श्रीभगदत्तजल्हणविरचितायां सूक्तिमुक्तावल्यां सन्तोषपद्धतिः ॥

---

१ सोमप्रभाचार्यस्य. ग.। २ रं. क. पाठभेदः। ३. कुलवान्. क. ख. च. ४ क. पुस्तके अयं निर्देशः।

# क्षमापद्धतिः ( १२९ )



एकः क्षमावतां दोषो द्वितीयो नोपपद्यते ।
यदेनं क्षमया युक्तमशक्तं मन्यते जनः ॥ १ ॥

क्षमावतामयं लोकः परश्चैव क्षमावताम् ।
इह सम्मानमर्हन्ति परत्र च शुभां गतिम् ॥ २ ॥

भगवतो व्यासस्यैतौ ।

अलङ्क्रिया शक्तिसमन्वितानां तपोधनानां बलशक्तिरग्र्या ।
व्यापाददावानलवारिधारा प्रेत्येह च क्षान्तिरनर्थशान्तिः ॥ ३ ॥

कस्यापि ।

मन्निन्दया यदि जनः परितोषमेति नन्वप्रयासजनितोऽयमनुग्रहो मे ।
श्रेयोऽर्थिनो हि पुरुषाः परतुष्टिहेतोर्दुःखार्जितान्यपि धनानि परित्यजन्ति ॥४॥

अहं न चेत्स्यां मयि दुष्टभावनामिमे व्रजेयुर्न निराश्रया जनाः ।
तदेनसा योजयतः परान् स्वयं ममैव युक्ता खलु नन्वपत्रपा ॥ ५ ॥

यथा ममात्मप्रियसम्पदुद्यमस्तथा परेषामपि वा विशेषतः ।
अवाप्नुयुश्चेन्मदभीष्टमप्रियं न ते चरेयुः कथमात्मनः प्रियम् ॥ ६ ॥

ज्ञानाङ्कुशस्यैतौ(ते ?) ।

अशक्तो यः क्षान्तिं सततमपकारिण्यपि जने
विधत्ते सोऽवश्यं भुजग इव दंष्ट्राविरहितः ।
प्रभुः सत्यां शक्तौ क्षमत इह यस्मात्सुचरितः
स तेजस्वी लोकद्वितयविजिगीषुर्विजयते ॥ ७ ॥

आचार्यक्षेमसिंहस्य ।

॥ इति श्रीभगदत्तजल्हणविरचितायां सूक्तिमुक्तावल्यां क्षमापद्धतिः ॥

# दयापद्धतिः (१३०)



क्रीडाभूः सुकृतस्य दुष्कृतरजस्संहारवात्या भवो-
दन्वन्नौर्व्यसनाग्निमेघपटली सङ्केतदूती श्रियाम्।
निःश्रेणी त्रिदिवौकसः प्रियसखी मुक्तेः कुगत्यर्गला
सत्त्वेषु क्रियतां दयैव विविधैः किं तैस्तपःप्रक्रमैः ॥ १ ॥

यदि ग्रावा तोये तरति तरणिर्यद्युदयते
प्रतीच्यां सप्तार्चिर्यदि भजति शैत्यं कथमपि।
यदि क्ष्मापीठं स्यादुपरि सकलस्यापि जगतः
प्रसूते सत्त्वानां तदपि न वधः क्वापि सुकृतम् ॥ २ ॥

सोमप्रभसूरेरेतौ।

नवनीतोपमा वाणी करुणाकोमलं मनः।
एकबीजप्रवृत्तानामेतत् प्रत्यक्षलक्षणम् ॥ ३ ॥

क्षेमेन्द्रस्य।

परात्मसमतामादौ भावयेदेवमादरात्।
समदुःखसुखाः सर्वे पालनीया ममात्मवत् ॥ ४ ॥

परस्य दुःखं हन्तव्यं दुःखत्वादात्मदुःखवत्।
अनुग्राह्या मयान्येऽपि सत्त्वत्वादात्मसत्त्ववत् ॥ ५ ॥

बोधिचर्यावतारात्।

शुद्धात्मनः सत्पुरुषस्य लोके दया च सत्यं च विभूषणं हि।
येषां दया प्राणिषु ते मनुष्या ये निर्दयास्तान् [ विदुरत्र सर्पान् ] ॥ ६ ॥

न सत्यवचनं सत्यं नासत्यवचनं मृषा।
यद्भूतहितमत्यन्तं तत्सत्यमितरन्मृषा ॥ ७ ॥

सर्वसत्त्वेषु यद्दानमेका सत्त्वेषु या दया।
सर्वसत्त्वप्रदानाद्धि यदेकाऽपि विशिष्यते ॥ ८ ॥

दानं दरिद्रस्य विभोः क्षमित्वं यूनां तपो ज्ञानवतां च मौनम्।
इच्छानिवृत्तिश्च सुखोचितानां दया च भूतेषु दिवं नयन्ति ॥ ९ ॥

केषामप्येते।

॥ इति श्रीभगदत्तजल्हणविरचितायां सूक्तिमुक्तावल्यां दयापद्धतिः ॥

---

# वैराग्यपद्धतिः ( १३१ )



वैराग्यं कस्य न प्रेयो विरागो यदि जायते।
सुखमुत्तानशयनं कुब्जस्य नहि युज्यते ॥ १ ॥

क्षेमेन्द्रस्य।

दीनोद्धरणसमुचितैरनुपचितैर्वञ्चितोऽसि यदि विभवैः।
चलितं वनाय तपसे स रिपुर्यस्त्वां निवारयति ॥ २ ॥

वल्लभदेवस्य।

अहमेको न मे कश्चिन्नाहमन्यस्य कस्यचित्।
न तं पश्यामि यस्याहं न हि सोऽस्ति न यो मम ॥ ३ ॥

जन्मान्तरसहस्राणि वियोगः सङ्गमः क्षणम्।
तथाऽपि निर्घृणं चेतः प्रियसङ्गममिच्छति ॥ ४ ॥

कस्यानित्येष्वनित्यस्य स्नेहो भवितुमर्हति।
येन जन्मसहस्राणि द्रष्टव्यो न पुनः प्रियः ॥ ५ ॥

तत्तत्स्मरणतां याति यद्यद्वस्त्वनुभूयते।
स्वप्नानुभूतवत्सर्वं गतं न पुनरीहते ॥ ६ ॥

बहवो लाभिनोऽभूवन् बहवश्च यशस्विनः।
सह लाभयशोभिस्ते न ज्ञाताः क्व गता इति ॥ ७ ॥

अस्यैकस्यापि कायस्य सहजा अस्थिखण्डकाः।
पृथक्पृथग्गमिष्यन्ति किमुतान्यः प्रियो जनः ॥ ८ ॥

बाल्ये नार्जनसामर्थ्यं येनासौ यौवने सुखी ।
यात्यर्जनेन तारुण्यं वृद्धः कामैः करोति किम् ॥ ९ ॥

शरीरस्य किमायातं सुगन्धि यदि चन्दनम् ।
अन्यदीयेन गन्धेन कस्मादन्यत्र रज्यते ॥ १० ॥

इह शय्यागतेनापि बन्धुमध्यस्थितेन वा ।
मयैवैकेन सोढव्या मर्मच्छेदादिवेदना ॥ ११ ॥

क्रोडीकरोति प्रथमं यदा जातमनित्यता ।
धात्रीव जननी पश्चात् तदा शोकस्य कः क्रमः[1] ॥ १२ ॥

श्रीहर्षस्य ।

अज्ञानं कारणं न स्याद्वियोगो यदि कारणम् ।
शोको दिनेषु गच्छत्सु वर्धतामथ याति किम् ॥ १३ ॥

कृष्णमिश्रस्य ।

इतो मृत्युरितो व्याधिरितो विपदितो जरा ।
चतुरङ्गा तुल्यबला हन्ति लोकमनित्यता ॥ १४ ॥

भगवतो व्यासस्य ।

कालोऽयं भूतमशकघुंघुमानां प्रपातिनाम् ।
ब्रह्माण्डोदुम्बरोत्थानां बृहत्पादपतां गतः ॥ १५ ॥

कस्यापि ।

कुतस्ते कालकाकेन कुलायः शिरसि ध्रुवम् ।
यद्भाति पलितव्याजात् तत्पुरीषस्य शुक्लिमा ॥ १६ ॥

नूनं चन्द्रमसा व्याप्तो वृद्धोऽयमिति मे मतिः ।
तद्रश्मिजालमङ्गेऽस्य चकास्ति पलितच्छलात् ॥ १७ ॥

श्रीवैद्यभानुपण्डितस्य ।

१. अ. ग..

परिपक्वं समालोक्य जराक्षारावधूसरम् ।
शिरःकूश्माण्डकं भुङ्क्ते पुंसां कालः किलेश्वरः ॥ १७ ॥

जरासुधालेपसिते शरीरान्तःपुरान्तरे ।
अशक्तिरार्तिरापच्च तिष्ठन्ति सुखम [ङ्गनाः][1] ॥ १८ ॥

आपदः क्षणमायान्ति सम्पदः क्षणमेव च ।
क्षणं जन्माथ मरणं मुने किमिव न क्षणम् ॥ १९ ॥

युज्यते वेष्टनं वायोराकाशस्य च खण्डनम् ।
ग्रथनं च तरङ्गाणामास्था [कायेन][2] युज्यते ॥ २० ॥

विद्राविते शत्रुजने समग्रे समागतायामभितश्च लक्ष्म्याम् ।
सेव्यन्त एतानि सुखानि यावत्तावत्समायाति कुतोऽपि मृत्युः ॥ २१ ॥

मेरुशृङ्गतटोल्लासिगङ्गाजलरयोपमा ।
दृष्टा यस्मिन्मुने मुक्ताहारस्योल्लासशालिनी (ता?) ॥ २२ ॥

श्मशाने च दिगन्ते च स एव ललनास्तनः ।
श्वभिरास्वाद्यते काले लघुपिण्ड इवान्धसः ॥ २३ ॥

जन्मपल्वलमत्स्यानां चित्तकर्दमचारिणाम् ।
पुंसां दुर्वासना रज्जुर्नारी बडिशपिण्डिका ॥ २४ ॥

यस्य स्त्री तस्य भोगेच्छा निस्त्रीकस्य क्व भोगभूः ।
स्त्रियं त्यक्त्वा जगत्त्यक्तं जगत्त्यक्त्वा सुखी भवेत् ॥ २५ ॥

विषं विषयवैषम्यं न विषं विषमुच्यते ।
जन्मान्तरघ्ना विषया एकदेहहरं विषम् ॥ २६ ॥

वासिष्ठरामायणात् ॥

कूजत्कण्ठदलीमकाण्डहसितामुन्मुक्तकेशीं स्त्रियं
खादन्तीं दशनैर्नखैश्च मदिरापानप्रगल्भीकृताम् ।
उद्दामव्रणकन्धरां निशि कथं दृष्ट्वा न बिभ्यत्यमी
बालां पीतवसास्थिमज्जमधु[3]कक्षीबां पिशाचीमिव ॥ २७ ॥

भास्करवर्मणः ।

१ मङ्गिनः क. ख. च. २ नायक. क. ख. च. ३ र. क. ख. च.

दीप्तोभयाग्रवातारिदारूदरगकीटवत् ।
जन्ममृत्युसमाश्लिष्टे शरीरे बत सीदति ॥ २८ ॥

बोधिसत्त्वस्य ।

कं विशेषमवलम्ब्य योषितः[1] प्रेयसे भजसि वर्चसो[शुं][2]वम् ।
त्यागहेतुरपि तुल्य एव ते सापि सापि मलमोचनस्थली ॥ २९ ॥

कस्यापि ।

तावदेव कृतिनामपि स्फुरत्येष निर्मलविवेकदीपकः ।
यावदेव न कुरङ्गचक्षुषां ताड्यते चटुललोचनाञ्चलैः ॥ ३० ॥

चलति गलितधैर्यः को न मोक्षान्तरालात्
[कुवलयद][3]लनीला यत्पुरो वक्रिताङ्गी ।
इममुप[श]मरूपं मार्गमाखण्डयन्ती
चलति कुवलयाक्ष्या भ्रूलता सर्पिणीव ॥ ३१ ॥

एताविन्द्रकवेः ।

अये स्वर्गः स्वर्गः कतिदिवसमार्गः प्रवसतां
पुरस्तुङ्गौ स्यातां यदि न कुचकुम्भौ मृगदृशः ।
अयाचं पाथेयं सुलभ[मुभयं][4] मूलफलयोः
पयः स्थाने स्थाने पथि पथि च विश्रामतरवः ॥ ३२ ॥

आकाशपोलेः ।

गतः कालो यस्मिन् प्रणयिनि मयि प्रेमकुटिलः
कटाक्षः कालिन्दीलघुलहरिवृत्तिः प्रभवति ।
इदानीमस्माकं जरठकमठीपृष्ठकठिना
मनोवृत्तिस्तत्किं व्यसनिनि मुधैव क्षपयसि ॥ ३३ ॥

आनन्दनस्य ।

अहह गृही क नु कुशली बद्धः संसारसागरे क्षिप्तः ।
कथमपि लभते पोतं तेनापि निमज्जति नितान्तम् ॥ ३४ ॥

( वल्लभ[5]देवस्य । )

---

१. ते. क. ख. च. २. भ. क. ख. च. ३. बहधब. क. ख. च. ४. मितरत्. क. ख. च. ५. क. पाठभेदः ।

जननीजनकापत्यप्रियरमणीप्रभृति शृङ्खलाजालम् ।
विदलय्य सोऽपि सुकृती विहरति गजवन्महामत्तः ॥ ३५ ॥

वासिष्ठरामायणात् ।

कतिपयदिनपरमायुषि मदकारिणि यौवने दुरात्मानः ।
विदधति तथाऽपराधं जन्मैव यथा वृथा भवति ॥ ३६ ॥

मन्मथवातसमीरितमानसजलजनितकुगतिकल्लोलम् ।
क्षेमे[ण] विषयमकरं यौवनजलधिं क उत्तरति ॥ ३७ ॥

निर्वाहितमतिगहनं विना कलङ्केन यौवनं येन ।
दोषनिधाने जन्मनि किं न प्राप्तं फलं तेन ॥ ३८ ॥

केषामप्येते ।

सृजति तावदशेषगुणाकरं
पुरुषरत्नमलङ्करणं भुवः ।
तदपि तत्क्षणभङ्गि करोति चे-
दहह कष्टमपण्डितता विधेः ॥ ३९ ॥

फल्गुहस्तिन्याः ।

माद्यन्मित्रकलत्रपुत्रकुतपश्रेणीरणच्छृङ्खला-
बन्धध्वस्तगतेर्निरुद्धमनसः क्रोधादिविद्वेषिभिः ।
आस्तां ज्ञानसुधारसः किमपरं संसारकारागृहे
क्रूरक्रोडनिवासिनो न सुलभा वार्ताऽपि मोक्षं प्रति ॥ ४० ॥

त्यक्त्वा सङ्गमपारपर्वतगुहागर्भे रहः स्थीयतां
रे रे चित्त कुटुम्बपालनविधौ को वाऽधिकारस्तव ।
यस्यैते पुरतः प्रसारितदृशः प्राणप्रियाः पश्यतो
नीयन्ते यमकिङ्करैः करतलादाच्छिद्य पुत्रादयः ॥ ४१ ॥

जानन्त्येके प्रगुणितधियो धर्मकर्मादिशास्त्रं
जानन्त्येके निपुणमतयो [दै२] वसिद्धान्तरत्नम् ।
जानन्त्येतत् सकलमपरे तन्न जानन्ति केचित्
लीलारब्धत्रिभुवनजयो जीयते येन मृत्युः ॥ ४२ ॥

---

१. तरुणी, क, ख, च. २. देव. क.

यज्ञैर्येषां प्रतिपदमियं मण्डिता भूतधात्री
निर्जित्यैतद्भुवनवलयं यैः प्रदत्तं द्विजेभ्यः ।
संसारेऽस्मिन् सरसि विलसद्बुद्बुदस्तम्बलीलां
दृष्ट्वा दृष्ट्वा सपदि विलयं तेऽपि भूयः प्रपन्नाः ॥ ४३ ॥

इतः क्रोधो गृध्रः प्रकटयति पक्षं निजमितः
सृगाली तृष्णेयं विवृतवदना धावति पुरः ।
इतः क्रूरः कामो विचरति पिशाचश्चिरमहो
श्मशानं संसारः क इह पतितः स्थास्यति सुखम् ॥ ४४ ॥

आयुर्नीरतरङ्गभङ्गुरमिति ज्ञात्वा सुखेनासितं
लक्ष्मीः स्वप्नविनश्वरेति सततं भोगेषु बद्धा रतिः ।
अभ्रस्तम्भविडम्बि यौवनमिति प्रेम्णाऽवगूढाः स्त्रियो
यैरेवात्र विमुच्यते भवरसात्तैरेव बद्धो जनः ॥ ४५ ॥

निबद्धा स्थैर्याशा जलशशिनि कल्लोलचटुले
क्षणध्वंसिस्वप्नः सुचिरमविनाशीति कलितः ।
यदेतस्मिन् वातप्रतिहतपताकाग्रतरले
कृता काये प्रीतिः परमपुरुषार्थक्षयकरी ॥ ४६ ॥

कैः कैर्नामरमौलिवन्दितपदैर्भुक्त्वा(क्ता)नरेन्द्रश्रियः
को वाऽस्मिन्नरकोदरे न कुथितः को(की?)टीभवन् कोटिशः ।
इत्थं तत्सुखदुःखयोरपि गतः सर्वप्रकर्षं तथा-
प्यज्ञानावृतचेतसां न हृदयं व्यावर्तते सर्वतः ॥ ४७ ॥

सा बुद्धिर्विलयं प्रयातु कुलिशं तत्रापि संपात्यतां
वल्गन्तः प्रविशन्तु ते हुतभुजि ज्वालाकराले गुणाः ।
यैः सर्वैः शरदिन्दुकुन्दविशदैः प्राप्तैरपि प्राप्यते
भूयोऽप्यत्र पुरन्ध्रिगर्भनरकक्रोडाधिवासव्यथा ॥ ४८ ॥

१. वृत्वा, क. ख. दृत्वा, च. २. चिरम्, ख.

शून्ये सद्मनि शूलिनः क्वचिदपि प्राप्योपशान्तेर्दशा-
मासीनस्य विसंस्थुलावनितले धन्यस्य ते कस्यचित् ।
ध्यानान्निश्चलचेतसः स्वविवरान्निर्गत्य गात्रोपरि
भ्राम्यन्तः फणिनो भवन्ति निबिडं पर्यङ्किकाबन्धनम् ॥ ४९ ॥

दशैते इन्द्रकवेः ।

निजा गुहेयं तरुमूलमेतदेषा सरित्तीरशिलातलानि ।
वनस्थितस्याप्यनुबन्ध एष संबन्धबुद्ध्या भवबन्धहेतुः ॥ ५० ॥

रम्यं हर्म्यतलं न किं वसतये श्रव्यं न गेयादिकं
किं वा प्राणसमासमागमसुखं नैवाधिकं प्रीतये ।
किन्तु भ्रान्तपतत्पतङ्गपवनव्यालोलदीपाङ्कुर-
च्छायाचञ्चलमाकलय्य सकलं सन्तो वनान्तं गताः ॥ ५१ ॥

विज्ञानात्मनः ।

आयाति फुल्लकुसुमः कुसुमागमोऽय-
मषा शशाङ्कतिलका शरदागतेति ।
बाढं[1] प्रहृष्यति जनो न पुनर्ममैत-
दायुः प्रहीणमिति याति मनोविषादम् ॥ ५२ ॥

चन्द्रगोमिनः ।

धर्मात्मजेन चरणाविह वन्दितौ मे
भीमेन सार्धमिह संकथिताः कथाश्च ।
अत्रार्जुनश्च यमलौ च सहानुयाताः
स्थानानि तानि खलु सन्ति न मे(ते?) मनुष्याः ॥ ५३ ॥

यत्रानेके क्वचिदपि गृहे तत्र तिष्ठत्यथैको
यत्राप्येकस्तदनु बहवस्तत्र चान्ते न चैकः ।
इत्थं चेमौ रजनिदिवसौ दोलयन्द्वाविवाक्षौ
कालः काल्या सह बहु किल क्रीडति प्राणिशारैः ॥ ५४ ॥

चन्द्रिकस्य ।

---

१. ल:. क. ख. च.

किंचिन्निष्पाद्यमानं किमपि च विलयं याति निष्पन्नमात्रं
शुष्कं सद्यो विनश्यत्यपरमपरमापाकमारोप्यमाणम् ।
यद्वद्भाण्डं तथास्मिन् जगति बहुविधां प्राप्य जन्माद्यवस्थां
नश्यन्ति प्राणिनोऽमी नहि खलु नियता काऽपि मृत्योर्व्यवस्था ॥ ५५ ॥

अद्येदं श्व इदं तथा परुदिदं कृत्यं परारि त्वद-
श्चेतश्चिन्तयसीत्थमेव सततं निर्व्याकुलं रे कुतः ।
तत्कालं विलसन्मनोरथलताकान्तारदावानलो
यस्मिन्दण्डधरं स्मरिष्यसि सखे सोऽप्यस्ति कश्चित्क्षणः ॥ ५६ ॥

मृत्यो मुञ्च जरे करेण परुषं केशेषु मां माग्रहीः
संसारादपलायनप्रतिभुवो रागादयो मे स्थिताः ।
तृष्णाबन्धनबध्यमानसशिखं किं वेत्सि नेदं जगत्
दे(ए?)हीत्यादरजल्पितेन भवतः किं नागमिष्याम्यहम् ॥ ५७ ॥

तैस्तैः कस्तूरिकाद्यैः स्तबकितमपि यद्याति दौर्गन्ध्यमारात्
दृष्टा यस्येह निष्ठा कृमिकुलमथवा भूरिभस्माथवाऽपि ।
कृत्वा धर्मस्य बाधामनुदिवसमरे वञ्चनात्किम्परेषा-
मात्मन् कोऽयं विमोहस्तव तदपि वपुः पाल्यते यत्त्वयेत्थम् ॥ ५८ ॥

स्वार्थारम्भप्रणतशिरसां पक्षपातात् सुराणां
दत्त्वात्मानं करजकुलिशैर्दानवेन्द्रं निहन्तुम् ।
सिंहीभूतस्त्रिभुवनगुरुः सोऽपि नारायणोऽस्मिन्
रागद्वेषप्रतिहतमतेः कस्य न स्यात् पशुत्वम् ॥ ५९ ॥

वर्तमानक्षणादूर्ध्वं स्थितौ कायस्य का प्रमा ।
तथापि जीवनायाहो चिन्ता कल्पान्तवर्तिनी ॥ ६० ॥

उच्छ्वासावधयः प्राणाः स चोच्छ्वासः समीरणः ।
समीरणाच्चलं नास्ति यत्प्राणिति तदद्भुतम् ॥ ६१ ॥

केषामप्येते ।

तन्मन्यते विचित्रं बहुविवरे या स्थितिर्मरुतः ।
न तथापि मूढहृदयाः कथमपि विमृशन्ति निर्याणम् ॥ ६२ ॥

वल्लभदेवस्य ।

रात्रौ वा यदि वा दिवाऽनवरतं वृद्धोऽथ वा बालकः
सर्पत्येकक [ एवं[1] नैव विदितः ] प्रक्रान्तरूपेऽध्वनि ।
तस्मिन्नुद्वहनश्रमोज्झितमहत्सत्कर्मपाथेयवान्
लोकः शोकमनेकरूपमहह प्राप्नोति गच्छन्नुत ॥ ६३ ॥

वैद्यभानुपण्डितस्य ।

संसारे पतितानां कुशलं किं पृच्छ्यते शरीरभृताम् ।
पतितस्य दहनराशौ दग्धोऽसि न वेति कः प्रश्नः ॥ ६४ ॥

यत्र यत्र रतिं याति मनः सुखविमोहितम् ।
तत्तत्सहस्रगुणितं दुःखं भूत्वोपतिष्ठते ॥ ६५ ॥ भगवतो व्यासस्यैतौ ।

स्वर्णकारतुलेवापि येस्य[2] बुद्धिर्मनीषिणः ।
अश्मकाञ्चनयोः साम्ये निर्दोलत्वमुपेयुषी ॥ ६६ ॥

आनीयते शरीरेण क्षीणोऽपि विभवः पुनः ।
विभवः पुनरानेतुं शरीरं क्षीणमक्षमः ॥ ६७ ॥

साहाय्योपनमद्विवेकपवना दीपिष्यते नः कदा
वैराग्याग्निरनेकभेदविषयक्रीडाकरीषंकषः ।
यद्भूत्या परिमार्जिते निरुपमं वैमॅल्य[3]मासेदुषि
ज्ञानादर्शतले स्वमेकमनिशं पश्यन्ति योगीश्वराः ॥ ६८ ॥

मदनस्यैतौ

अर्थिभ्यः कनकस्य दीपकपिशा विश्राणिता राशयो
वादे वादिविषाणिनां प्रतिहताः शास्त्रोक्तिगर्वा[4] गिरः ।
उत्खातप्रतिरोपितैर्नृपतिभिः शारैरिव क्रीडितं
कर्तव्यं कृतमर्थिता यदि विधेस्तत्रापि सज्जा वयम् ॥ ६९ ॥

विक्रमादित्यस्य

उपचरिता हरिणदृशः सज्जनगोष्ठीषु मिश्रिता वाचः ।
चरितं क्रमॅ[5]नमदवनं न विधेः कु [ टिर्लाँ[6] ] दपि त्रासः ॥ ७० ॥

वल्लभदेवस्य ।

१. एक एक विदिति. क. ख. च. २. सीद. क. पाठभेदः ३. क. क. ख. च. ४. भॉं. क. पाठभेदः
५. कमापनमविनं क. ख. च. ६ लता. क. ख. च.

